# अध्यायानां खण्डानाञ्च सूची ।



## अथ प्रथमाध्यायः ।



## अथ द्वितीयाध्यायः ।



## अथ तृतीयाध्यायः ।

## अथ चतुर्थाध्याय ।



## अथ पञ्चमाध्याय ।

# अथ

## निरुक्त(निघण्टु)-पठितपदानामकारादिक्रमेण सूची ।



# निरुक्तम्

## ( निघण्टुः )

---

### टीकाभूमिका ।

भक्तव्यसनकान्तारसञ्चारिविदारिणं मुखे ।
मदान्धदैत्यमातङ्गभङ्गे केसरिणं भजे ॥ १ ॥

नमस्त्रिधाम्ने शिपिविष्टनाम्ने
निरुक्तविद्यानिगमप्रतिष्ठाम् ।
अवाप यास्को विविधेषु यागे-
ष्वनेन चाम्नायमभिष्टुवानः ॥ २ ॥

प्रणमामि यास्कभास्करं यो ध्वस्ततमसः प्रकाशितपदार्थः ।
यस्य भुवनत्रयीमिव गावः प्रकटां त्रयीं वितन्वन्ति ॥ ३ ॥

वागीश्वरं वचोभिर्वसिष्ठमुख्यान्मुनींस्तपोभिश्च ।
अनुकृतवन्तं वन्दे पितामहं देवराजयज्वानम् ॥ ४ ॥

आचार्यं शाब्दिकानामृचि यजुषि च यद्दृष्टतुल्यप्रभावम्,
वन्दे नैरुक्तवृत्तिक्रमसुपनिषदश्चरीणामुपन्नम् ।
आभर्तारं क्रतूनामवनिसुखकरप्रक्रियानुक्रियायै,
तातं यज्ञेश्वराख्यं प्रतिहततमसं ज्ञानभास्वन्मयूखैः ॥ ५ ॥

यज्वा रङ्गेशपुरी—पर्यन्तग्रामवास्तव्यः ।
विरचयति देवराजो नैघण्टुककाण्डनिर्वचनम् ॥ ६ ॥

भगवता यास्केन समाम्नाय नैघण्टुक-नैगम-दैवतकाण्ड-

ऋषेव त्रिविध मन्त्रादि दैवतकाण्ड निर्ब्रुवता नैगम दैवत-काण्डपठितानि पदानि प्रत्येकमुपादाय निरुक्तानि दर्शित-निगमानि च, नैघण्टुककाण्डपरिपठितानान्तु गवादिपारि-षदान्तानामेकचत्वारिंशच्छतत्रयाधिकसहस्रस्य सामान्येन 'एता-वन्त्यस्य सत्त्वस्य नामधेयानि'—इति व्याख्याय तत्र प्रदर्श्य कतिचिदेव निरुक्तानि, तथा कानिचिदेव दर्शितनिगमानि; अन्यानि तु ग्रन्थविस्तरभीत्या सामान्येन निर्वचनलक्षणस्यो-क्तत्वात् बुद्धिमद्भिर्निर्वक्तुं सुशक्यानि इत्यभिप्रायेण च उपेक्षि-तानि। स्कन्दस्वामी च तत एव निरुक्तमनुजगाम।

अत्र तु 'दिवश्चादित्यस्य च साधारणनामानि स्वरादीनि षट्'—'उदकादीनि, च उपमाभेदात् भेदनामानि द्वादश'-'प्रपित्वे अभीके इत्यादीनि च षड् प्रतिष' भाष्यकारेण बहु-वक्तव्यत्वात् प्रकरणश एव निरुक्तानि, स्कन्दस्वामिना च व्याख्यातानि। अतोऽन्येषां यथाक्रमेणानिरुक्तनिगमाप्रदर्श-नात् स्वरूपमात्रमपि अध्ययनादेवावगन्तव्यम्। तच्चाध्ययन कलियुगे प्रायेण विच्छिन्नसम्प्रदायमासीत्। ततश्च कोश एव शरणमासीत्। तेषु च, केषुचिदर्थेषु लेखकप्रमादादिभि कानिचित्पदान्यधिकानि आसन्, अन्येषु च कानिचिन्न्यूनानि, अपरेषु च कानिचिदपपाठाय कानिचित् विभ्रष्टानि अक्षराणि च विपर्यस्तानि। एवं आकीर्णेषु कोशेषु निघण्टोरेकभूतस्य प्रतिपदनिर्वचननिगमप्रदर्शनपरस्य कस्यचित् व्याख्यानस्य अभावात् नैघण्टुक काण्डमनवगम्यमासीत्।

ततश्च पाठसंशोधनार्थं बालानां सुगमत्वाय च तत्रत्यानां पदानां क्रमेण प्रतिपदनिर्वचननिगमौ प्रदर्शयितुं,—स्वरादी-नीति पूर्वसूत्रस्य प्रकरणत्रयस्य, नैगम दैवतकाण्डगतानाञ्च पदानां भाष्यकारेण निरुक्तानां स्कन्दस्वामिना च तद्व्याख्या

तासां प्रक्रिययोन्मीलयितव्यम्, बहुशस्तु नैघण्टुककाण्डनिर्वचनानन्तरं तदुन्मीलयितुमयमस्मत्परिश्रमः।

इदञ्च समग्रीक्षिकया न क्रियते किन्तु नैघण्टुगतेष्वेव पदेष्वध्यर्द्धशतत्रयमात्राणि पदानि भाष्यकारेणैव तत्र तत्र निगमेषु प्रसङ्गान्निरुक्तानि, स्कन्दस्वामिना च निगमव्याख्यानेषु अन्यानि च पदानि शतद्वयमात्राण्युपात्तानि। तेन च समाम्नायपठितानां पदानामन्येभ्यो व्याहृत्यैव किञ्चिदिव कृतम्, अतस्तेषां पाठश्चिरस्तत्रैव शुद्धः। अन्येषाञ्च पदानामत्यन्तं हि समाम्नायाध्ययनस्याविच्छेदात्,—श्रीवेङ्कटाचार्यतनयस्य माधवस्य भाष्यकृतो नामानुक्रमण्याः आख्यातानुक्रमण्याः—स्वरानुक्रमण्याः—निपातानुक्रमण्याः—निर्वचनानुक्रमण्याः—तदीयस्य भाष्यस्य च बहुशः पर्यालोचनात्,—बहुदेशसमानीतात् बहुकोशनिरीक्षणाच्च पाठः संशोधितः। निर्वचनञ्च—निरुक्तं,(१) स्कन्दस्वामिकृतां निरुक्तटीकां,(२) स्कन्दस्वामि(क)-भवस्वामि(ख)-राहुदेव(ग)-श्रीनिवास(घ)-माधवदेव(ङ)-उवटभट्ट(च)-भास्करमिश्र(छ)-भरतस्वाम्यादि(ज) विरचितानि वेदभाष्याणि, (३) पाणिनीय व्याकरणं,(४) विशेषतः उणादि(क) तद्वृत्तिं, (ख) क्षीरस्वाम्यनन्ताचार्यादिकृतां निघण्टुव्याख्यां, (५) भोजराजीयं व्याकरणं, (६) कमलनयनीय-निखिलपदसंस्कारांश्च (७) निरीक्ष्य क्रियते। तत्र च अस्मदाख्येयानां तत्र दृष्टानां पदानां तत्तत्तत्र निर्वचनमुपादाय तदेवास्मत्प्रकरणानुरूपञ्चेदुल्लिख्यते, अननुरूपन्तु किञ्चिद् विपरिणमय्य, अन्येषाञ्च कतिपयानां निरुक्तकारोक्तनिर्वचनसामान्यलक्षणमनुसृत्य, निरुक्तिः क्रियते।

निगमश्च दर्शितापचनिर्वाचिभिरधीतेषु वेदेषु परिदृश्य-

मालस्तत्तद्भाष्याणि निरीक्ष्य तत्र तत्र प्रदर्श्यते, यद्दृष्ट्वा निग-मानाञ्च पदानां निगमा अन्वेष्याः ।

अतोऽस्माभिर्यथामति प्रदर्शितौ प्रतिपदनिर्वचननिगमौ विद्वांसो बुद्ध्या निरूप्य प्रकाशयितव्यमपि कुर्वन्तु ॥

---

## अथ प्रथमाध्यायः ।

—:०:—

"अथातोऽनुक्रमिष्यामः"—इत्यादि ( २,५ ) निरुक्ते तस्य टीकायाञ्च यन्निघण्टुकाण्डविषयमुक्तं तत् सर्वं तत्रैव द्रष्टव्यम् ॥

आदित एकविंशतिः पृथिवीनामधेयानि—

ॐ गौः (१) । ग्मा (२) । ज्मा (३) । क्ष्मा (४) । क्षा (५) । क्षमा (६) । क्षोणिः (७) । क्षितिः (८) । अवनिः (९) । उर्वी (१०) । पृथ्वी (११) । मही (१२) । रिपः (१३) । अदितिः (१४) । इळा (१५) । निर्ऋतिः (१६) । भूः (१७) । भूमिः (१८) । पूषा (१९) । गातुः (२०) गोत्रा (२१) इत्येकविंशतिः पृथिवीनामधेयानि ॥ १ ॥

( १ ) गौः । 'गम्लृ गतौ (भ्वा० प०)' अस्माद् 'गमेर्डोस् (उ० २, ६७)'—इति कर्त्तरि कारके अधिकरणे वा डोः प्रत्ययः । गातेर्वा स्तुत्यर्थात् (परस्मै० प०) बाहुलकाडोः (३,३,११३) कर्मण्यधिकरणे वा । 'गोतोणित् (७,१,९०)'—इति च णिद्वद्भावात् वृद्धिः । अत्र भाष्यम्—'गौरिति पृथिव्या नामधेयं

यद्दूरं गता भवति यत्रास्या भूतानि गच्छन्ति गातेर्वौकारो नामकरण (निरु० २, ५)'—इति। अस्य स्कन्दस्वामी—'दूरं गता भवति नैरन्तर्येणातमाकाशादिवत् दूरेऽप्युपलब्धेर्गतिक्रियाव्यवहार'। अन्वयान्वच चोपलब्धेर्दूरोपदेश। प्रत्ययोपात्तकर्त्र्यर्थसम्बन्धाच्च गमिरत्र नैरन्तर्यापलब्धिदूरविप्रिष्टं गमनमुपादत्ते, 'तथा' 'परिव्राजकः' इति यथा। यत्रास्या भूतानि प्राणिनो गच्छन्ति। वो वार्थे। गातेर्वा स्तुत्यर्थस्य। (अदा० प०) गीयते स्तूयतेऽसाविति, गायन्ति वास्या स्थिता इति गो। उदाहरणम्—'गोपदसि'—इति। गाइपत्यो- पस्थाने विनियोगात्, गाइपत्यस्य च गवि पृथिव्या सद नात् गो शब्दस्य पृथिव्यभिधानत्वनिश्चितमिति। एवमन्येष्व- प्युदाहरणेषु तत्र तत्र मन्त्रवाक्यार्थसमवायेन अभिधेय प्रदर्श नीय निश्चित्य तत्तदर्थाभिधायित्वम्। "व्रज गच्छ गोष्ठानम् (य०वा०स० १, २५-२६)"—"गौर्जगार यद्ध पृच्छान् (ऋ०म० १०,११,१०)"—"अभवत् पूर्व्या भूमना गोः (ऋ० स० १०,११, ६)"—इति निगमा ॥

(२) ग्मा। गमे पूर्वस्मिन्नेव कारकद्वये 'कनिन्युवृषि- तक्षि (उ० १,१५४)'—इत्यादिना विहित कनिन्प्रत्ययो बाहुलकात् भवति। 'गम हन-जन खन घसा लोप क्ङि त्यनङि (६,४,९८)'—इत्युपधालोप, औणादिकेन 'मनिन् (उ०४,१४०)'—इति सूत्रेण वा मनिनि बाहुलकात् (३,३,१) टिलोप, 'डाबुभाभ्यामन्यतरस्याम् (४,१,१३)। अर्थ पूर्व वदेव। 'ग्मा गच्छतिः, गच्छन्तीडीयम्'—इति माधव। "ट्रियग्र ग्मयापार्श्व जत्वं. (ऋ०म०१०,४९,२)"—"ट्रियग्र ग्मश्च मर्त्येश (ऋ०म०१०,१२,६)"—इति च निगमौ। ग्म इत्यत्र छान्दसत्वादृपसिद्धि ।

(३) ज्मा। अमतिर्गतिकर्मा (निघ०२.१४) 'अमु अदने (भू०प०)'-'जनी प्रादुर्भावे (दि०आ०)'-'अव व्याप्ति अवयव-कान्ति-गतिषु (भू०प०)' आपणं सेवनमिति तद्वृत्तिः। एतेभ्यः 'श्वन्नुक्षन् पूषन् प्लीहन्' (उ०१,१५९)'—इत्यादिना परिसमाप्तिमिति अनिबन्धं सोपसर्गं निपातितम्, बाहुलकात् (३,३,१) निरुपसर्गमपि भवति। निपातनादेव कारकविशेषसिद्धिः। 'डाबुभाभ्यामन्यतरस्याम् (४,१,१३)'। गतौ पूर्ववदर्थः। अदन्ति यस्यां भूतानि, जातानि वा स्वकारणात्, जायन्ते यस्यां ओषधयः। तथा चोपनिषत्—'अद्भ्यः पृथिवी, पृथिव्या ओषधयः (तै०उ०२,१)'—इति। अथवा ज्मा सर्वथा प्रत्यक्षा न' ह्याकाशादिवदव्यक्ता पृथिवी; 'तिस्रो महीरुपरास्तस्थु-रत्या गुहा द्वे निहिते दर्श्येका (ऋ०म०३,५६,२)'—इति च श्रुतिः। ज्मा सिक्ता भवति ह्यनेन; 'तस्मादमाविमां दृष्ट्वा-भ्युनक्त्यभिजिघ्रति (ऐ०ब्रा०१,२,१)'—इति ब्राह्मणम्। "ये के च ज्मा महिनो अहिमायाः (ऋ०म०६,५२,१५)"—"अभि-ख्याते भूरधुज्मन् (ऋ०सं०७,२१,४)"—"ज्मया अत्र वसवो-रन्त देवाः (ऋ०सं०७, ३९,३)"—"अधज्मो अधवा दिवः (ऋ०सं०८,१,१८)"—इति च निगमाः॥

(४) क्ष्मा। 'क्षि क्षये' भ्वादिः (प०), 'क्षि निवासगत्योः' तुदादि (प०), 'क्षि हिंसायाम्' क्र्यादिः (प०), क्षै, जै, सै, क्षये (भू०प०), 'क्षमूष् सहने (दि०प०)', 'क्ष्मायी विधूनने (भू०आ०)',—एतेभ्यः औणादिके मनिनि (उ०४, १४०) बाहुलकाद्रूपसिद्धिः। इहापि गतार्थं ज्ञम्। क्षियन्ति निवसन्त्यस्यां प्राणिनः, क्षयन्ति अवयवं गच्छन्त्यस्यां पदार्था इति वा, क्षिण्वन्त्यस्यां पापकृत इति वा, क्षमते वा प्राणिजातकृतं भारं विधूनयति वा प्राणिनः सर्वौघकाले।

"पिता यत्स्वां दुहितरमधिष्कन् क्ष्मया रेतः (ऋ०सं०१०,६१,७)"—"क्ष्मया चरन्ति परि सा वृणक्तु नः (ऋ०सं०७,४६ ३)"—इति च निगमौ ॥

(५) क्षा। निरूपिता एव धातवः। 'अन्येष्वपि दृश्यते (३,२,१०१)'—इति सोपपदात् जनेर्विधीयमानो डः प्रत्ययः, 'अपिशब्दः सर्वोपाधि-व्यभिचारार्थ.'—इत्युक्तेर्निरुपपदेभ्योऽपि भवति। त्थायस्तु छान्दसत्वान्मकारलोपः। अर्थः पूर्वोक्त एव। "जातस्य च जायमानस्य च क्षाम् (ऋ०सं०१,८६,७)"—इति निगमः ॥

(६) क्षमा। निरूपिता एव धातुभावाः। औणादिके मनिनि (उ०४,१४०) बाहुलकाद्रूपसिद्धिः। अर्थ. पूर्वोक्त एव। 'क्षमूष् सहने (दि०प०)'—इत्यस्माद् वा पूर्ववत् डाप्प्रत्यय.। "यः पार्थिवस्य क्षम्यस्य राजा (ऋ०सं०२,१४,११)"—इति निगमः ॥

(७) क्षोणिः। 'टुक्षु क्षणु शब्दे' अदादिः (प०) 'वीज्याज्वरिभ्यो निः (उ०४,४८)'—इति विहितो नि प्रत्ययो बाहुलकाद् भवति, गुणः णत्वम्। क्षूयते शब्द्यते स्तूयते स्तोतृभिः, क्षुवन्त्यस्यां भूतानीति वा। क्षोणीति ईकारान्तं केचित् पठन्ति। तदा 'कृदिकारादक्तिनो वा ङीप् वक्तव्यः (४,१,४५ वा०)'—इति ङीप्। "नवन्त क्षोणयो यथा (ऋ०सं०१०,२२,९"—"यं क्षोणीरनुचक्रदे (ऋ०सं०८,३,१०)"—इति निगमौ ॥

(८) क्षितिः। 'क्षि निवासगत्योः (तु० प०),' 'क्षि क्षये (भू० प०)' 'क्षि हिंसायां (स्वा० क्र्या० प० )'—एतेभ्योऽपि 'क्तिच्क्तौ च संज्ञायाम्'? 'वसिक्तिः (उ० ४,१७५)'—इति विहितस्ति-प्रत्ययो बाहुलकाद् ( ३,३,१ ) भवति, गुणाभावश्च। अथवा 'स्त्रियां

क्तिन् (३,३,९४)' कर्मण्यधिकरणे (३,३,९३) वा भवति। अर्थस्तु क्षेत्यर्थोऽत्र। "क्षेति क्षितो सुभगो नाम पुष्यन् (ऋ० सं० ५, ३७,४)"—"प्रोहि स्वस्ति सुक्षिति दिव (ऋ० सं० ६, २, ११)"—इति निगमौ।

(९) अवनिः। 'अव रक्षण गति कान्ति प्रीति तृप्त्यवगम प्रवेश श्रवण स्वाम्यर्थ याचन क्रियेच्छा दीप्त्यवाप्त्यालिङ्गन हिंसा दान भाग वृद्धिषु (भू०प०)'—अस्मात् 'अर्त्तिसृधृधम्यम्यश्यवितृभ्योऽनिः (उ० २, ९५)'—इत्यनि प्रत्ययः। अवति प्रजाः पालयति वा भूपे। एतावत्स्वर्थेषु यो योग्य स बोद्धव्यः। "मा त्वा रक्षोऽवनिर्न प्रवलीत् (ऋ० सं० १, १८१, ३)"—"यस्मी मुद्गोमवन्ति माभि मन्दमत् (ऋ० सं० १, १४०, ५)"—इति च निगमौ॥

(१०) उर्वी। 'ऊर्णुञ् आच्छादने (अदा० उ०)'—अस्मात् 'महति ह्रस्वश्च (उ० १, ३०)'—इति उप्रत्ययो नलोपो ह्रस्वश्च, उरु। 'वोतो गुणवचनात् (४, १, ४४)'—इति ङीष्। ऊर्णोति आच्छादयति उर्वी। महत्त्वादाच्छादयित्री भूमि स्वस्मिन् स्थितानां वा पदार्थानाम्। ऊर्णोतेर्वा (धा० प०) पृषोदरादित्वात् (६, ३, १०९) रूपसिद्धि। 'छादकाद्वे विशिष्टम'—इति स्कन्दस्वामी। ऊर्णोतेराच्छादनार्थत्वेऽनुवादश्च। "मा मौ मवुध मा भीगुवीं काष्ठा (ऋ० सं० ८,८०,८)"—इति निगम॥

(११) पृथ्वी। 'प्रथ प्रख्याने (भू० आ०)'—'प्रथि म्रदि-भ्रस्जां सम्प्रसारणं सलोपश्च (उ० १, २७)'—इति कु प्रत्ययः सम्प्रसारणञ्च। प्रथतेऽसाविति पृथु। पूर्ववत् (४,१,४४) ङीष्। पृथ्वी विस्तीर्णार्थः। पञ्चाशत्कोटियोजनविस्तीर्णेति, पृथिवी। यत्र, अन्तर्भावितण्यर्थात् प्रथते 'उणादयो बहु

त्वम् (३,३,१)', 'भूतेऽपि दृश्यन्ते (३, ३, २)'—इति वचनात् भूते कु प्रत्ययः। ब्रह्मणा पूर्वमेव विस्तारितेत्यर्थः। 'तत्-प्करपर्णेऽप्रथयत् यदप्रथयत् पृथिव्यै पृथिवीत्वम् (श०ब्रा० ११, १८,-१३, २)'—इति हि ब्राह्मणम्। 'पृथुना राज्ञा प्रवर्तारिता पृथ्वी'—इति क्षीरस्वामी। "स्तेगो न क्षामत्येति पृथ्वीम् (ऋ० सं० १०, ३१, ९)"—इति, निगमः। 'यत्रैकार्थानां पदानां सन्निपातः, तत्रैकं तस्य वाचकं भवति; अन्येषां निरुक्त्या योजनं कर्त्तव्यम्'—इति मर्यादा, अतोऽत्र क्षामित्यस्य निरुक्त्या योजनम्॥

(१२) मही। 'मह पूजायाम्' भ्वादिः (प०)। 'इन् सर्वधातुभ्यः (उ० ४, ११८)'—इतीन्प्रत्ययः। 'कृदिकारात् (४,१,४५ वा०)'—इति ङीष्। मह्यते प्रजाभिः, महति वा देवताः स्वभारावतरणाय। अथवा मानेन स्वगुणेन परिमाणेन स्वस्मादूनं परिमाणं पातालं जहाति अतिक्रामति, मानशब्दाज्जहातेश्च मही। पृषोदरादित्वात् (६,३,१०९) निर्वाहः। "मा नो मही मुह्योमरर्मतिं मुञोधा (ऋ० सं० ५, ४३, ६)"—इति निगमः॥

(१३) रिपः। 'रेङ् गतौ (भू० आ०)', 'क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणाम् (३,२,१७८ वा०)'—इत्यत्र 'प्राक्प्रत्ययनिर्देशात् दृष्टसिद्धिः'—इति वचनात् कर्त्तरि रिपः। गौरित्यनेन समानार्थः। यद्वा, 'रिफ कत्थन-युद्ध-निन्दा-हिंसा-दानेषु' तुदादिः परस्मैपदी। क्विपि, फकारस्य पकारो व्यत्ययेन (३, १, ८५)। कत्थन युद्धादीनस्यां कुर्वन्ति तत्कारिणः। यद्वा, 'लिप उपदेहे (तु० उ०)', लिप्। गोमयादिना आलिप्यते इति लिप्। रलयोरभेदः। तथाच माधवीयनिर्वचनानुक्रमश्चा 'लेपनाद्रेपणादपि'—इति। यद्वा;

क्विप् (३, २, ८४ वा०)। भवत्यस्यां सर्वमिति भूः। "मूर्धा भुवो भवति नक्तमग्निः (ऋ० मं० १०, ८८, ६)"—इति निगमः। ऐकारान्त व्ययम्, यथा—"भूर्भुवः स्वः (य० वा० सं० ३६, ३)"—इति॥

(१८) भूमिः। 'भुवः कित् (उ० ४, ४५)'—इति भवतेः मिप्रत्ययः। अर्थः पूर्ववत्। अथवा 'भूतेऽपि दृश्यन्ते (३, ३, २)'—इति वचनात् भूते मि-प्रत्ययः। 'अभूत्तभूमिस्तथा अभूद्वा इदमिति तद् भूम्यै भूमित्वम्'—इति श्रुतिः। "स्वेंहुकृत्यानामुर्वैति भूमिम् (ऋ० सं० १०, २७, १३)"—"भूमिर्भूमिमगात्"—इति च निगमौ॥

(१९) पूषा। 'पुष पुष्टौ (भू० दि० क्र्या० प०)। 'श्वन्नुक्षन्पूषन् (उ० १, १५९)'—इत्यादिना कनिन्-प्रत्ययान्तो निपात्यते, निपातनादुपधाया दीर्घः। पुष्यति धान्यादिभिः सम्बद्धा भवति पोषयति वाऽनेः प्रजाः। 'सर्वार्थपोषणात् पूषा' इति भट्टभास्करमिश्रः। तथा 'पृथिवी व्यवर्तयत् सौषधीभिर्वनस्पतिभिरपुषत्' इति श्रुतिः। यद्वा; 'पुष धारणे (चु० प०)'—इति धातुः। धारयति सर्वाणि भूतानि पोषयत्याभरणानीति यद्वा। "या पूषश्चिन्नबर्हिषम् (ऋ० सं० १, २३, १३)"—इत्यत्र माधवः—'पूषा पोषयतीति तस्य प्रसव्यं रूपम्'। "पूषा त्वेतो नयतु हस्तगृह्य (ऋ० सं० १०,८५, २६)"—इति, "सरस्वत्यै पूष्णेऽग्नये स्वाहा (य० वा० सं० ४, ७)"—इति निगमः॥

१ (२०) गातु.। 'गाङ् स्तुतौ' छन्दसि जुहोत्यादिः (भू० प०), 'गाङ् गतौ (भू० आ०)', 'कै गै शब्दे' भ्वादिः (प०)। 'कमि-मनि-जनि-गा-भा-या-हिभ्यश्च (उ० १, ७०)'—इति तु-प्रत्ययः। गीयते स्तूयतेऽसौ, स्तुवन्ति यस्यां स्थिता इन्द्रा-

ष्टीन्, गच्छन्त्यस्यां भूतानीति वा, गायन्ति वास्यां स्थिता गायना इति। यद्वा, गम्यतेऽनेनेति गातुर्मार्गः, 'लुगकारेकाररेफाश्चेति वक्तव्यम् (४, ४, १२८ वा० २)'—इति मत्वर्थीयस्य लुक्। गातु मार्गवती हि भूमिः। "इन्द्राय गातुरुशतीव येमे (ऋ० स० ५, ३३, १०)"—"चर्द्विषे गातुरुरवे वरीयसी (ऋ० सं० १, १३६, २)"—इति निगमौ॥

(२१) गोत्रा। 'गुङ् अव्यक्ते शब्दे (भू० आ०)'। 'गुधु-वी-पचि वचि-यमि-[मनि-तनि] सदि-चदिभ्यस्त्रः (उ० ४, १६२)'—इति त्रप्रत्ययः। गुणः। क्रुगयज्ञादयोऽस्यामव्यक्तशब्दं कुर्वन्तीति गोत्रा। यद्वा; गोत्राः शैलाः सन्त्यस्याम् अर्शआदित्वात् (५, २, १२७) अच्। यद्वा; गोशब्दे कर्मण्युपपदे 'त्रैङ् पालने (भू० आ०)'—इत्यस्मात् 'आतोऽनुपसर्गे कः (३, २, ३)'। टाप् (४, १, ४)। गास्त्रायते रक्षति यवसोदकादस्या। यद्वा, गोभिरादित्यकिरणैर्वृष्टिप्रदानेन त्रायते रक्षते इति, 'कृत्यल्युटो बहुलम् (३, ३, ११३)'—इति कर्मणि 'आतोऽनुपसर्गे कः (३, २, ३)'। यद्वा, गोशब्दात् 'तस्य समूहः (४, २, ३७)'—इत्यस्मिन्नधिकारे 'खल-गो-रथात् (४, २, ५०)'—इत्यनुवृत्तौ 'इनि-त्र-कट्यचश्च (४, २, ५१)'—इति त्र-प्रत्ययः। गोत्रा, गवा समूहो मत्वर्थीयोऽकारः। गोसमूहोऽस्यामस्तीति गोत्रा। निगमोऽन्वेषणीयः॥

इत्येकविंशति पृथिवी-नामधेयानि॥ "उवाच मे वरुणो मेधिराय (ऋ० मं० ७, ८७, ४)"—इत्यत्र माधव—'उवाच मह्यं वरुणो मेधाविने'-इति स तत्रैकविंशतिनामानि काचिद्, गोर्बिभर्तीति पृथिवीमाह तस्या हि यास्कपठितानि एकविंशतिर्नामानीति॥ १॥

क्विप् ( ३, २, ८४ वा० )। भवत्यस्यां सर्वमिति भूः। "मूर्द्धा भुवो भवति नक्तमग्निः (ऋ० सं० १०, ८८, ६)"—इति निगमः। रेफान्तं त्वव्ययम्, यथा—"भूर्भुवः स्वः ( य० वा० सं० ३६, ३ )"—इति ॥

(१८) भूमिः। 'भुवः कित् ( उ० ४, ४६ )'—इति भवतेः मिप्रत्ययः। अर्थः पूर्ववत्। अथवा 'भुवोऽपि दृश्यन्ते ( ३, ३, २ )'—इति वचनात् भूते मि-प्रत्ययः। 'अभूतभूमिस्तथा अभूद्वा इदमिति तद् भूम्यै भूमित्वम्'—इति श्रुतिः। "अर्क्षन्नु-ष्णानासन्वैति भूमिम् ( ऋ० सं० १०, २७, १३ )"—"भूमिर्भूमिमगात्"—इति च निगमौ ॥

(१९) पूषा। 'पुष पुष्टौ ( भ्वा० दि० क्र्या० प० )'। 'श्वन्नुक्षन्पूषन् ( उ० १, १५५ )'—इत्यादिना कनिन्-प्रत्ययान्तो निपात्यते, निपातनादुपधाया दीर्घः। पुष्यति धान्यादिभिः समृद्धा भवति पोषयति वा एभिः प्रजाः। 'सर्वार्थपोषणात् पूषा' इति भट्टभास्करमिश्रः। तथा 'पृथिवी व्यवर्त्तयत् सौषधी-भिर्वनस्पतिभिरपुष्यत्' इति श्रुतिः। यद्वा 'पुष धारणे ( चु० प० )'—इति धातुः। धारयति सर्वाणि भूतानि पोष-यत्याभरणानीति यथा। "आ पूषञ्चित्रबर्हिषम् (ऋ० सं० १, २३, १३ )"—इत्यत्र माधवः—'पूषा पोषयतीति तस्य प्रत्यक्षं रूपम्'। "पूषा त्वेतो नयतु हस्तगृह्य (ऋ० सं० १०,८५, २६)"—इति, "सरस्वत्यै पूष्णेऽग्नये स्वाहा ( य० वा० सं० ४, ७ )"—इति निगमः ॥

( २० ) गातुः। 'गाङ् स्तुतौ' छन्दसि जुहोत्यादिः ( भ्वा० प० ), 'गाङ् गतौ (भ्वा० आ०)', 'कै गै शब्दे' भ्वादिः (प०)। 'कमि-मनि-जनि-गा-भा-या-हिभ्यश्च ( उ० १, ७० )'—इति तु-प्रत्ययः। गीयते स्तूयतेऽसौ, स्तुवन्ति वाच्या स्थिता इन्द्रा-

दीन्, गच्छन्त्यस्यां भूतानीति वा, गायन्ति वास्यां स्थिता गायना इति । यद्वा ; गम्यतेऽनेनेति गातुर्मार्गः, 'कृमकारि-कारेभ्यश्चेति वक्तव्यम् (४, ४, १२८ वा० २)'—इति मत्वर्थीयस्य लुक् । गातुः मार्गवती हि भूमिः । "इन्द्राय गातुरुशतीव येमे (ऋ० मं० ५, ३३, १०)"—"अदर्शि गातुरुरवे वरीयसी (ऋ० मं० १, १३६, २)"—इति निगमौ ।

(२१) गोत्रा । 'गुङ् अव्यक्ते शब्दे (भ्वा० आ०)' । 'हु-यामा-श्रु-भसिभ्यस्त्रन्' 'हु-नी-पचि-वचि-यमि-[मदि-तनि]-सदि-पटिभ्यस्त्रः (उ० ४, १५९)'—इति त्रन्प्रत्ययः । गुत्रः । शब्दयन्त्यस्यामव्यक्त-शब्दं कुर्वन्तीति गोत्रा । यद्वा ; गोत्राः मेघाः सन्त्यस्याम् अर्शआदित्वात् (५, २, १२७) अच् । यद्वा ; गोशब्दे कर्मण्युपपदे 'त्रैङ् पालने (भ्वा० आ०)'—इत्यस्मात् 'आतोऽनुपसर्गे कः (३, २, ३)' । टाप् (४, १, ४) । गास्त्रायते रक्षति पदन्यास-दक्षतया । यद्वा, गोभिरादित्यकिरणैर्वृष्टिप्रदानेन त्रायते रक्ष्यते इति, 'कृत्यल्युटो बहुलम् (३, ३, ११३)'—इति कर्मणि 'आतोऽनुपसर्गे कः (३, २, ३)' । यद्वा, गोशब्दात् 'तस्य समूहः (४, २, ३७)'—इत्यस्मिन्नधिकारे 'खल-गो-रथात् (४, २, ५०)'—इत्यनुवृत्तौ 'इनि-त्र-कट्यचश्च (४, २, ५१)'—इति त्र-प्रत्ययः । गोत्रा, गवां समूहो मत्वर्थीयोऽकारः । गोसमूहोऽस्यामस्तीति गोत्रा । निगमोऽन्वेष्यः ।

इत्येकविंशतिः पृथिवी-नामधेयानि । "उवाच मे वरुणो मेधिराय (ऋ० मं० ७, ८७, ४)"—इत्यत्र भाष्यम्—'उवाच मह्यं वरुणो मेधाविने'-इति च तत्रैकविंशतिनामानि ब्रवीदिदं, गौर्बिभर्तीति पृथिवीमाह तस्या हि यास्कपठितानि एकविंशतिर्नामानीति ॥ १ ॥

हेम (१)। चन्द्रम् (२)। रुक्मम् (३)। अयः (४)। हिरण्यम् (५)। पेशः (६)। कृशनम् (७)। लोहम् (८)। कनकम् (९)। काञ्चनम् (१०)। भर्म (११)। अमृतम् (१२)। मरुत् (१३)। दत्रम् (१४)। जातरूपम् (१५)।

इति पञ्चदश हिरण्यनामानि ॥ २ ॥

(१) हेम। 'हि गतौ वृद्धौ च (स्वा० प०)'। अस्माद्धातो 'नामन् सीमन्-व्योमन्-हेमन्-रोमन्-लोमन्-व्योमन्-पिधमन्-पाप्मन् (उ० ४, १५०)'—इति मनिप्रत्ययः निपात्यते। हिनोति गच्छति अनेन सुखं पुरुषः, गम्यते वा तदर्थिभिः, गच्छति वा स्वयं कटकादिरूपां विकृतिम्, हिनोति वाणिज्यादिना प्रतिदिनं वर्धते, 'ताम्राद्युपरि लेपनाद् वर्धते'—इति सुबोधिनी। अथवा हितमापदि निहितं वा भूम्यादौ दधातेर्हिरादेशो निपातनात्। हेम। "शुभ्रा प्रेषा हेमनी पूयमानं (ऋ० मं० ९, ९७ १)"—"अश्वो न खे दम आ हेम्यावान् (ऋ० म० ४, २, ८)" —इति च निगमौ। हेम्यावान्—हिरण्मयकक्ष्यया युक्तः।

(२) चन्द्रम। 'चदि आह्लादने दीप्तौ च (भू० प०)' अस्मात् 'स्फायि-तञ्चि-वञ्चि-शकि-क्षिपि-क्षुदि (उ० २, १२)'—इत्यादिना रक्। चन्दयति, आह्लादयति तद्वत् दीप्यते वा स्वयं तैजसत्वात्। यद्वा, णिजन्तात्स्वदेर्बाहुलकात् णिलोपः, दीपयति धारयितृन्—दीप्यतेऽनेन धारयितेति वा। कान्त्यर्थो वा चदिः, 'चन्द्र चन्दते कान्तिकर्मणः (निरु० ११, ५)'—इत्युक्तेः। काम्यते सर्वैः, इति चन्द्रम्। "ये पश्चाच्चन्द्र

(ऋ० सं० १०, ८५, ३१)"—"दक्षिणा चन्द्रमुत यद्धिरण्यम्, (ऋ० सं० १०, १०७, ७)"—इति च निगमौ ॥

(३) रुक्मम् । 'रुच दीप्तौ (भू० आ०)' 'युजि-रुचि-तिजां कुश्च (उ० १, १४३)'—इति मक्प्रत्ययः कुत्वं च । रोचते तदतिशयेन दीप्यते तेन तदिति च रुक्मम् । "आ रुक्मैरायुधा नरः"—(ऋ० सं० ५, ५२, ६)"—"उप रुक्मिभिरीयते (ऋ० सं० ८, १५, ५)"—इति च निगमौ ॥

(४) अयः । 'इण् गतौ (अदा०प०)' । असुन् (उ० ४, १८४) । एति गच्छति अहलौयकादिरूपेण शरीरम्, क्रयविक्रय-संविभागादिना वा, पुरुषात् पुरुषान्तरं गच्छत्यनेन धर्मदानादिनेति वा । "अयः शीर्षा मदे रघुः (ऋ०सं० ८, १०१, ३)"—इति निगमः ॥

(५) हिरण्यम् । 'हृञ् हरणे (भू० उ०)' अस्मात् 'हर्यतेः कन्यन् हिर् च (उ० ५, ४५)'—इति विधीयमानः कन्यन्प्रत्ययो हिरादेशश्च बाहुलकाद् भवतः । तथाच अन्यविल्यधिकृत्य 'हृञ इच'—इति भोजसूत्रम् । ह्रियते जनाज्जनमिति वा सव्यवहारार्थम्, द्रव्यस्वभावत्वात् नैकत्रावस्थायित्वं तस्य । अथवा द्विधातुजं रूपम्,—हिनोतिः रमतेश्च धातुद्वयात् समुदितात् कन्यन्प्रत्ययो बाहुलकाद्रूपसिद्धिश्च, हितञ्च तत् आपदि दुर्भिक्षादौ, रमयति च सर्वदा सर्वमिति । अथवा हर्यतिः प्रेप्साकर्मणः (निरु०२, १०) ;—हर्यतेः कन्यन् हिरश्च क्रियतेर्यथाप्राप्तं रूपम् । सर्वैर्हि तत् सर्वदा प्राप्तुमिष्यते । 'हर्यति स्वप्रभया दीप्यते'—इति सुबोधिनीकारः । "हिरण्यरूपः स हिरण्यसन्दृग् (ऋ०सं०२, ३५, १०)"—इति निगमः ॥

(६) पेशः । 'पिश गतौ (चु० प०)' । असुन् । अय इत्यनेन समानार्थम् । "त्रिरश्विना त्रिवृता सुपेशसा (ऋ०सं० १,

४७, २)"—इति निगमः । "हिरण्ययेन रथेन (ऋ० सं० ८, ५, ३५)"—हिरण्ययी वां रभिः (ऋ० सं० ८, ५, २८)"—इत्यादौ अश्विनोरथस्य हिरण्यकेशुमः पेशोऽत्र हिरण्यम् । बृहदारण्यके—'तद्यथा पेशस्कारी पेशसो मात्रामपादायान्यन्नवतरं कल्याणतरं रूपं तनुते (४, ४, ४)'—इति । यथा । वाजसनेयके "सरस्वती मनसा पेशलम् (१९, ८३)"—इत्यत्र 'पेश इति हिरण्यनाम रूपनाम वा'—इत्युवटेन व्याख्यातम् ॥

(७) कृशनम् । 'कृश तनूकरणे (दि० प०)' । 'कृ-पृ-वृजि-मन्दि-नि-धाञ्भ्यः क्युः (उ० २, ७६)'—इति विधीयमानः क्युर्बाहुलकाद् भवति । कृश्यति तनूकरोति यम् । अत्र माधवस्तु—'कृशिर्दीप्त्यर्थः । कृश्यति स्वयमथवा दीप्यते, अपि वा कर्षयति संघटं, कृशमेव वा भवति संस्थानतो रक्तत्वात्'—इति । "स्वदृश्यः कृशनिनो निरेके (ऋ० सं०७, १८, २३)"—'पुभि मुणं न कृशनेभिरश्वम् (ऋ० सं० १०, ६८, ११)"—"सुभिहितं कृशनैर्विश्वरूपम् (ऋ० सं० १, ३५, ४)"—इति निगमाः ॥

(८) लोहम् । 'लुह कलमादी ( भू० प० )' । घञ् (३, ३, १९) । लुह्यते आप्यतेऽनेनात्मा,—त्रिवर्गसाधनत्वात् पुरुषैः सम्प्रार्थ्यते वा । 'लूनो हः'—इति तु बोमोजदेवः । लुनाति छिनत्ति पापसम्बन्धं पात्रे दीयमानम् । निगमोऽन्वेषणीयः ॥

(९) कनकम् । 'कनी दीप्तिकान्तिगतिषु ( भू० प० )' । 'कृञादिभ्यः संज्ञायाम् (उ० ५, ३५)'—इति वुन्-प्रत्ययो धात्वर्थेष्वपि । कनकादिपदार्थोऽनुसन्धेयः । निगमोऽन्वेषणीयः ॥

(१०) काञ्चनम् । अत्र सुबोधिनी—'कचि दीप्तिबन्ध-

नयोः (भू० आ०)। कथ्यते वर्णेन दीप्यते वध्यते कुण्डलादि-रूपेणेति। 'युच् बहुलम् (३, ३, १३०)'—इति युच्प्रत्ययः। दीर्घोऽत्र बाहुलकात्। निगमोऽन्वेषणीयः॥

(११) भर्म। 'डु भृञ् धारणपोषणयोः (जु० उ०)'। मनिन् (३, २, ७५)। ध्रियते धार्य्यते, अङ्गुल्यादिभिर्धार्य्यते आपदर्थ-मिति वा, पोषयत्यनेन कुटुम्बमिति वा। हरतेर्वा (भू० उ०) मनिनि 'हृग्रहोर्भश्छन्दसि (सि० कौ० वै० ३अ०)'—इति भकारः। हिरण्येन हरति—धातुजेन समानार्थम्। "सुवी-राभिस्तिरते वाजभर्मभिः (ऋ० स० ८, १९, ३०)"—"अरिष्ट-भर्मन्नागहि (ऋ० स० ८, १८, ४)"—इति च निगमौ। 'वाज-भर्मभिः', 'अरिष्टभर्मन्'—इत्यत्र माधवस्तु—'भर्त्तव्य भर्म'—इति व्याख्यत्, तदा निगमोऽन्वेषणीयः॥

(१२) अमृतम्। नञ्पूर्वात् म्रियते (तु० आ०) 'तनि-मृङ्भ्यां किच्च (उ० ३, ८५)'—तन्प्रत्यये रूपम्। न म्रियन्तोऽनेन दुर्भिक्षादौ, नास्ति मृतं मरणमस्येति वा,—न हि हिरण्यस्य यस्यां कस्याञ्चिदवस्थायामात्मनाशो विद्यते। 'अग्ने प्रजातं परि यद्धिरण्यममृतं दध्रे अधि मर्त्येषु (अथ०, स० १९, २६, १)'—इति खैलिको मन्त्रः। न म्रियते पात्रे प्रतिपादि-तेन ध्रियमाणेन वा आयुष्करत्वात्। 'आयुर्वै हिरण्यम'—इति श्रुतिः। तथाच खैलिको मन्त्रः—'यो बिभर्त्ति दाक्षायणं हिरण्यं स देवेषु कृणुते दीर्घमायुः स मनुष्येषु कृणुते दीर्घ-मायुः (य० वा० स० ३४, ५१)'—इति। "मृत्रा शुक्राणि अमृ-तानि विश्वा (ऋ० स० १, ७२, १)"—"शुक्र त्वा शुक्रेण क्रीणामि चन्द्रं चन्द्रेणामृतममृतेन (य० वा० स० ४, २६)"—इति निगमौ॥

(१३) मरुत्। मितममित वा रोचते, मितममित वा

रोचयति, भाति: पूर्वार्थे, 'रोतेर्वर्त्तरागम्', पृषोदरादित्वात् (६, ३, १०९) साधुः। हिरण्यं हि धान्यादि-तैजसि-पदार्थेभ्यो मितं भोगादिभ्योऽमितं रोचते, अर्थिभ्यो दीयमानं लोकद्वयेऽपि कीर्त्तिं कारयति। तथाच सुभाषितश्लोक—'शृणु पार्थ! त्वयि न्यस्तं कियच्चाशादि काञ्चनम्। इदमेवार्थिस्वकं रावयति च रोचते'। यद्वा, 'मृङो उतिः',—म्रियतेर्धातोः (तु० आ०) उतिप्रत्यये रूपम्। म्रियन्तेऽनेन पुरुषा इति मरुत्,—एतदर्थं हि चौरादिभिः पुरुषाः हन्यन्ते। निगमोऽन्वेषणीयः॥

(१४) दत्तम्। 'डु दाञ् दाने (जु० उ०)'। 'अमि-चिमि-मिदि-शसिभ्यः क्तः (उ० ४, १५८)'—इति विधीयमानः क्तो बाहुलकात् (३, ३, १) भवति। 'दो दद् घोः (७, ४, ४६)'—इति ददभावः। दीयते पात्रे दत्तम्। "इन्द्र! यत्ते माहिनं दत्रमस्त्यु॰ (ऋ॰ सं॰ ३, ३६, ९)"—इति निगमः॥

(१५) जातरूपम्। 'जनी प्रादुर्भावे (दि० आ०)'। निष्ठा-तकारः। 'जनसनखनाम् (६, ४, ४२)'—इत्यात्वम्। जातः। 'रुच दीप्तौ (भू० आ०)'। 'खष्प-शिल्प-शष्प-बाष्प-रूप-पर्प-तल्पाः (उ० ३, २८)'—इति पप्रत्ययान्तो निपातितः, निपातनादुकारस्य दीर्घश्चकारलोपश्च। रोचते रूपम्। धनात्मायैस्तया जातं रूपमस्य जातरूपम्। तथाच श्रीरामायणे स्कन्दोत्पत्तौ—'इह हैमवते भागे गर्भोऽयं सन्निवेश्यताम्'—इत्यतः 'परिनिक्षिप्यमाने गर्भे तु तेजोभिरभिरञ्जितम्। सर्वं पर्वतसन्नद्धं सौवर्णमभवद्वनम्। जातरूपमिति ख्यातं तदा प्रभृति राघव।। सुवर्णं पुरुषव्याघ्र। हुताशनसमप्रभम्'—इति (बा० का०)। जातं रूपं सौन्दर्यमनेन धारयितॄणामिति वा

रूपम्। "जातरूपमयेन च पवित्रेणान्तर्धायाभ्युपिस्थति (ऐ० ब्रा० ८, १८)"—इति निगमः॥

इति पञ्चदश हिरण्यनामानि॥

**अम्बरम् (१)। वियत् (२)। व्योम (३)। बर्हिः (४)। धन्व (५)। अन्तरिक्षम् (६)। आकाशम् (७)। आपः (८)। पृथिवी (९)। भूः (१०)। स्वयम्भूः (११)। अध्वा (१२)। पुष्करम् (१३)। सगरः (१४)। समुद्रः (१५)। अध्वरम् (१)। इति षोडशान्तरिक्षनामानि॥३॥**

(१) अम्बरम्। 'अबिड् शब्दे (भू० आ०)'। 'कटरादयश्च (उ० ५, ४२)'—इति अरच्प्रत्ययान्तो निपात्यते। अम्बन्ते शब्दायन्तेऽस्मिन् मेघाः, अम्बते शब्दायते वा स्वय वायुमेघादिससर्गात्,—आकाशगुणो हि शब्द। अथवा अर्त्तेर्धातोः 'अर्जिदृशिकम्यमिपमिबाधामृजिपशितुक्षुधुक्रुदीर्घहकाराश्च (उ० १, २६)'—इति अमतेर्विधीयमान उप्रत्ययो बुगागमश्च बाहुलकात् (३, ३, १) भवति, तस्मिन्, गुणे, रपरत्वे च रेफस्य मकारश्च, अम्बु। अमतेरेव वा तेनैव सूत्रेण उप्रत्ययो बुगागमश्च। उभयत्रापि गच्छति देशाद्देशान्तरं गम्यते वा प्राणिभिरित्यम्बु जलम्। तद्ददाति ददातीत्यम्बरो मेघः। 'आतोऽनुपसर्गे कः (३, २, ३)', पृषोदरादित्वात् (६, ३, १०९) उकारस्याकारः। तद्वदाकाशमप्यम्बरम्। 'लुगकारेकाररेफाश्च वक्तव्याः (४, ४, १२८ वा० २)'—इति मत्वर्थीयस्य लुक्। तदेव वा वर्षासु प्राणिभ्य उदकं ददातीति अम्बरम्। अथवा अम्बुशब्दे उपपदे राजतेर्धातोः 'अन्येष्वपि दृश्यते (३, २, १०१)'—

इति हविग्रहणात् ङ, अधिप्रसृतस्य सर्वोपाधिव्यभिचारार्थ स्यादर्थसिद्धि । अथवा अम्बुवद्राजते स्वच्छत्वमितस्ततोऽम्बु-दवभासते । कल्पितोपमानश्चैतत्, तद्यथा—'पुञ्जीकृतमिव ध्वान्तं मेघो भाति मतङ्गजः । सरं मरुत्प्रसन्नाभो नभःखण्ड-मिवोज्झितम् ॥' परमार्थत स्वरूपमवकाश । अथवा अम्बु-मत् भवति तो मत्वर्थीय, पूर्ववदुकारस्याकार, अन्तरिक्ष हि वर्षोदकेन तद्वत् । "यदन्तस्था परावति यद्वासो अध्वरे" (ऋ० स० ८, ८, १४)"—इति निगम ।

(२) वियत् । 'यमु उपरमे (भू० प०)'—इत्यस्मात् औणा-दिके क्विपि, 'गम क्वौ (६, ४, ४०)'—'गमादीनामिति वक्त-व्यम् (६, ४, ४० वा०)'—इत्युक्तेरनुनासिकलोप । 'ह्रस्वस्य पिति कृति तुक् (६, १, ७१)'। विगत यमनमुपरमणं मस्मादिति वियत्,—अन्तरिक्षं हि सर्वत्र आततत्वात् न कुत्र चित् उपरतम । 'वियच्छति न विरमति'—इति क्षीरस्वामी। यद्वा, विपूर्वात् 'यती प्रयत्ने (भू० आ०)—इत्यस्मात् क्विप । विविध यतन्तेऽस्मिन् प्राणिन,—आकाशे हि सर्वे व्याप्रि यन्ते । निगमोऽन्वेषणीय ॥

(३) व्योम । विपूर्वादवतेर्व्याप्त्यर्थत्वात (भू० प०) औणा-दिके 'सर्वधातुभ्यो मनिन् (उ० ४, १४४)'—इति सूत्रेण मनिन्प्रत्यये 'ज्वरत्वरस्रिव्यविमवामुपधायाश्च (६, ४, २०)—इत्यूठि गुण । व्यवति व्याप्नोति सर्वं जगत् । यद्वा, अवति गत्यर्थं (भू० प०) भावे मनिन् (उ० १, १३९),—ओम, अवन गमन विविधमस्मिन् विद्यते । यद्वा, रक्षणार्थं (भू० प०)—विशेषेणावति प्राणिनोऽवकाशप्रदानेन । उणादौ तु 'नामन्-सीमन् व्योमन् (उ० ४, १५०)'—इत्यादिना 'व्येञ् संवरणे (भ्वा० उ०)'—इत्यस्मान्मनिनि रूपं निपात्यते । दीयते

व्योम । तथाच निरुक्तम्—'योनिरन्तरिक्षं महानवयवः परिवीतो वायुना (११, ४०)'—इति । इदं निर्वचनमेतत्पदका-रयोः शाकल्यार्ययोरनभिमतं वीत्यभिन्नवग्रहीतत्वात् । "सहस्राक्षरा परमे व्योमन् (ऋ० सं० १, १६४, ४१)"—"सत्यामाशिरं पूर्व्ये व्योमनि (ऋ० सं० ८, ७०, १)"—इति च निगमौ ॥

(४) 'बर्हिः । बृहि वृद्धौ (भू० प०)' 'बृंहेर्नलोपश्च (उ० २, १०२)'—इति इसि-प्रत्ययः । 'बृंहति वर्द्धतेऽनेन प्राणि-जातम्,—सर्वे हि प्राणिन आकाशे वर्द्धन्ते, परिवृढं वा त्वयं विभुत्वात् । "यस्य त्रिधात्ववृत बर्हिः (ऋ० सं० ८, १०२, १४ )"—इति निगमः ॥

(५) धन्व । 'धवि धिवि धवि गत्यर्थाः (भू० प०)' । इदि-त्वान्नुम् (७, १, ५८) । 'कनिन्युवृषितक्षिराजिधन्विद्युप्रति-दिवः (उ० १, १५४),—इति कनिन् । धन्वन्ति गच्छन्ति यस्मा-दापः । यद्वा, 'धनधान्ये (दि आ०)', अनेकार्थत्वादर्थनार्थः । कनिप् । धन्यते अर्थ्यतेऽवकाशप्रदानाय, देवतात्वात् स्व स्वम-भीष्टं वा । "य परस्याः परावतस्तिरोधन्वातिरोचते (ऋ० सं० १०, १८७, २)—इति निगमः ॥

(६) अन्तरिक्षम् । 'अन्तरिक्षं कस्मात् ? (निरु० २, १०)'—इत्यादि भाष्यस्य स्कन्दस्वामिग्रन्थो यथादृष्टं लिख्यते—'अन्त-रा मध्ये सर्वभूतानां क्षान्तं शान्तं निःक्रियं वा शान्तमव्यूहं विष्कम्भस्थानात्मकत्वात् । अन्तरा इमे रोदसी क्षियतीति वा । अन्तरेमे द्यावाविति वा । एवमनेकविकल्पमुत्तर-परम् । पूर्वशरीरेष्वन्तरक्षयमिति वा, अन्तः-शब्दात् पूर्वपद-मक्षयशब्दादुत्तरपदं विनाशिष्वपि अविनाशीत्यर्थः'—इति । सर्वत्र पृषोदरादित्वात् (६, ३, १०९) साधु । "न यस्य द्यावा-

पृथिवी न धन्व नान्तरिक्षम् (ऋ० म० १०, ८८, ६)"—इति निगमः ।

(७) आकाशम् । आङ्पूर्वात् 'काशृ दीप्तौ (दि० आ०)'—इत्यस्मात् 'पुंसि संज्ञायां घः प्रायेण (३, ३, ११८)'—इति घप्रत्ययः । आ समन्तात् काशन्ते दीप्यन्ते सूर्यादयोऽत्र । यद्वा, नञ्-पूर्वात् काशेः पचाद्यच् (३, १, १३४), नञश्छान्दसः (६, ३, १२६) दीर्घः । न काशते, पृथिव्यादिवत् अप्रत्यक्षत्वात् । तथाच श्रुतिः—'तिस्रो मह्नीरुपरास्तस्थुरत्या गुहा द्वे निहिते दर्श्येका (ऋ० सं० १, ५६, २)'—इति । 'तस्मादान्तरिक्ष पश्यति'—इति च । "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः (तै० उ० २, १,)"—इति निगमः ॥

(८) आपः । 'आप्लृ व्याप्तौ (भू० प०)' । 'आप्नोतेर्ह्रस्वश्च (उ० २, ५८)'—इति क्विप्प्रत्ययः उपधाह्रस्वश्च । जसि 'अप्तृन्तृच्स्वसृ (६, ४, ११)'—इत्यादिना दीर्घः । व्याप्नोति ह्यन्तरिक्षं सर्वं जगत्, आप्यते वा प्राणिभिः । अप्शब्दस्य नित्यं बहुवचनान्तत्वात् बहुवचनान्तस्य पाठः । ० ० ० । "तृतीयमप्सु नृमणा अजस्रम् (ऋ० सं० १०, ४५)"—इति निगमः ।

(९) पृथिवी । 'प्रथ प्रख्याने (भू० आ०)' । 'प्रथेः षिवन् सम्प्रसारणं च (उ० १, पा०)' । 'षिद्गौरादिभ्यश्च (४, १, ४१)'—इति ङीष् । प्रथते पृथिवी । "यः पार्थिवस्य क्षम्यस्य राजा (ऋ० म० २, १४, ११)"—"स दाधार पृथिवीं द्यामुतेमाम् (ऋ० म० १०, १२१, १)—इति च निगमौ ।

(१०) भूः । भवति (भू० प०) क्विप् । भवत्यस्माद् दृश्यादिः । निगमोऽन्वेषणीयः ॥

(११) स्वयम्भू । स्वयं भवति न केनचित् सृज्यते, क्विप् चादिना पक्षे क्विप् आकाशम् ।

केषु चित्। तदा 'मृगय्वादित्वात् (उ० १, ३६)' कु । निगमस्या-दर्शनात्-उभयमपि लिखितम्, निगमदर्शनान्निर्णय. कार्यः ॥

(१२) अध्वा। 'अद भक्षणे (अदा० प०)'। 'अदेर्ध च (उ० ४, ११२)'—इति वनिप् धकारश्चान्तादेशः। अदनं स्वस्तिगच्छतां पथ्यादीना विषमस्थानाभावात्। यद्वा, अधि-गत्यर्थः कश्चिद्धातुः, बाहुलकात् पूर्वेण वनिप्, गच्छन्त्यस्मिन् देवादय इत्यध्वा। 'अधेर्गतिक्रियात्'—इति माधवः। यद्वा, अध्वा मार्गोऽस्मिन् विद्यते मत्वर्थीयस्य लुक्,—सन्ति ह्याकाशे मेघपथादयः। 'अतेर्धंच'—इति भोजसूत्रम्। 'अत सातत्य-गमने (भ्वा० प०)'। सततं गच्छन्त्यत्र सूर्यादय इत्यध्वा। "भूर्मा रेजन्ते अध्वनि प्रविक्ते (ऋ० सं० ६, ५०, ५)"—"अननुमने अध्वनि वृजिने पथि (ऋ० स० ६, ४७, १३)"—इति निगमौ ॥

(१३) पुष्करम्। 'पुष पुष्टौ (क्र्या० प०)'। 'पुष. कित् (उ० ४, ४)'—इति करन्प्रत्ययः। पुषिरन्त्रान्तर्णीतण्यर्थः, पोषयति भूतानि अवकाशप्रदानेन उदकदानाद्युपकारेण च। 'पुष्कं वारि राति पुष्करम्'—इति क्षीरस्वामी। पुषेरन्तर्णी-तण्यर्थात् 'वृत्तभृशपियुधिभ्यः कित्'—इति विहितः करन्प्रत्ययो बाहुलकाद् भवति। 'इहक्षपृवीचीपुषिमुषि-मूङ्मूभ्य. कित्'—इति करः श्रीभोजदेव.। पोषयति भूता-नीति। पुष्कोपपदाद्राते: 'आतोऽनुपसर्गे कः (३, २, ३)'। यद्वा, वपुरित्युदकनाम (निघ० १, १२), तत्कर्तु शीलमस्येति 'कृञो हेतुताच्छील्यानुलोम्येषु (३, २, २०)'—इति टः, वपुष्कर सद् वकारलोपेन पुष्करम्, पृषोदरादि.। "विश्वे देवाः पुष्करे त्वादन्त (ऋ० स० ७, ३३, ११)"—इति निगम. ॥

(१४) सगर। सहशब्दपूर्वात् 'गॄ निगरणे (तु० प०)'—इत्यस्मात् 'ऋदोरप् (३, ३, ५७)', सहस्य सभाव. (६, ३, ७८)।

सह गिरन्त्यस्मिन् स्थिता आदित्यरश्मयो भौमरसमिति सगरः। सह उद्गिरन्त्यस्मिन् स्थिता मेघा वर्षोदकमिति वा। यद्वा, गीर्यते चाभ्यवह्रियते विद्यते इति गरः उदकम्, तेन सह वर्तते इति सगरः। तथात्र—'रक्षयन्त देवा गरगिरः'—इत्यत्र गर(रा)-इर्देवः 'गरमुदकं गिरन्ति गरगिरः'—इति भाष्यं कृतवान्। यद्वा, 'गॄ शब्दे (क्र्या० प० प०)'—इत्यादि। गीर्यते इति गरः शब्दः, पूर्ववत्, गरेण शब्देन सह वर्तते इति सगरः,—आकाशो हि स्वगुणेन शब्देन सहैव सर्वदा वर्तते। "भूपः प्रेरयुं सगरस्य बुध्नात् (ऋ० सं० १०, ८८, ४)"—इति निगमः॥

(१५) समुद्रः। समुद्द्रवन्ति सङ्गता ऊर्ध्वं द्रवन्ति गच्छन्त्य-स्मादापो रश्मिभिराकृष्यमाणा आदित्यमण्डलम्। समुत्-पूर्वात् द्रवतेर्गत्यर्थात् 'अन्येष्वपि दृश्यते (३, २, १०१)'—इति अपादाने डप्रत्यये टिलोपे च रूपम्। यद्वा, संहता अभि-द्रवन्त्येनमापो भौमरसलक्षणा वायुना प्रेर्यमाणाः आदित्य-मण्डलाद्वा वर्षाकाले रश्मिभिः प्रवर्त्तमानाः। अत्र उदित्येष उपसर्गोऽभीत्यर्थे वर्त्तते, कर्मणि डप्रत्यय इति विशेषः। समो-दन्तेऽस्मिन् भूतानि अन्तरिक्षचारीणीति वा। सम्पूर्वात् 'मुद हर्षे (भ्वा० आ०)'—इत्यस्मात् 'स्फायितञ्चिवञ्चि (उ० २, १३)'—इत्यादिना अधिकरणे रक्प्रत्यये, समो मलोपे च रूपम्। यद्वा, 'सम्'—इत्येकीभावे, उदकात् उन्दन्द्, रो मत्वर्थीय.। एकीभूतमुदकमस्मिन् विद्यते वर्षास्विति शब्दस्योद्भावश्छान्दसः। यद्वा, सम्पूर्वात् 'उन्दी क्लेदने (रु० प०)'—इत्यस्मात् 'स्फायितञ्चिवञ्चि (उ० २, १३)' कर्तरि रक्प्रत्यये किल्त्वान्नलोपे च समुद्रः। समुनत्ति भुवनं समुद्रः। "एकः सुपर्णः स समुद्रमा विवेश (ऋ० सं० १०, ११४, ४)"—इति निगमः॥

(१६) अध्वरम्। अध्वा व्याख्यातः (२३ पृ०)। अध्वानं मार्गं राति ददाति (अदा० प०) तस्मिन् गच्छतां पश्वादीनाम्। यद्वा, अध्वा मार्गो विद्यतेऽस्मिन् मेघादीनाम्। रो मत्वर्थीयः। यद्वा, ध्वरतिर्हिंसाकर्मा (निघ० २, १९), तत्प्रतिषेधः। अध्वर्त्तव्यं न हिंस्यमित्यर्थः। नञ्पूर्वात् ध्वरतेः 'पुंसि संज्ञायां घः प्रायेण (३, ३, ११८)'—इति घः। "धियम् क्षौलस्मी परि यातो अध्वरम् (ऋ० सं० ८, ३, २३, ३)"—इति निगमः। 'अध्वरं यज्ञम्'—इति स्कन्दस्वामी व्याख्याति, तदा निगमोऽन्वेषणीयः ॥

इति षोडशान्तरिक्षनामानि ॥ ३ ॥

स्वः (१)। पृश्निः (२)। नाकः (३)। गौः (४)। विष्टप् (५)। नभः (६)। इति षट् साधारणानि ॥ ४ ॥

स्वरादीनि षट् तु भाष्यकारेण स्कन्दस्वामिना च कृतव्याख्यानानीति नास्माभिर्व्याख्यायन्ते ॥ ४ ॥

स्वेदयः (१)। किरणाः (२)। गावः (३)। रश्मयः (४)। अभीशवः (५)। दीधितयः (६)। गभस्तयः (७)। वनम् (८)। उस्राः (९)। वसवः (१०)। मरीचिपाः (११)। मयूखाः (१२)। सप्तऋषयः (१३)। साध्याः (१४)। सुपर्णाः (१५)। इति पञ्चदश रश्मिनामानि ॥५॥

श्चन्नं श्रुयाणीः (ऋ० सं० २,२,२४,६)"—"को अस्य युङ्क्ते धुरिगा ऋतस्य (१, ६, ८, १)"—इति आदित्यरश्मेर्निगमौ। अश्वरश्मेरन्वेषणीयः ॥

(४) रश्मयः। 'रशिर्यमनार्थो धातुः (सौ०)'। 'नियोमिः (उ० ४, ४३)'—इति विधीयमानो मिप्रत्ययो बाहुलकाद् भवति। रशना रश्मिरिति कतिपयप्रयोगविषय एवायं रशिः, भरत्यादिवत्. न सर्वत्र, बन्धनप्रतीतेः। बध्नन्त्युदकमथवा बध्यते सैकदकमश्वो वा। यद्वा, 'अशू व्याप्तौ (स्वा० आ०)'। 'अश्नेरश्च च (उ० ४, ४६)'—इति मि-प्रत्ययो रशादेशश्च। अश्नुवते सर्वं जगत् अश्नुवीयादि वा रश्मयः। "सूर्यस्येव रश्मयो द्रावयित्नवो (ऋ० सं० ७, २, २७, १)"—"विरश्मयो जनाय अनु (ऋ० सं० १, ४, ७, ३"—इति आदित्यरश्मेर्निगमो। "सर्वे प्रपादनु यच्छन्ति रश्मयं (ऋ० सं० ५, १, २०, १)"—"ते रश्मिभिस्तरक्षभिः सुखादयः (ऋ० सं० १, ६, १३, ६)"—इति चाश्वरश्मेः ॥

(५) अभीशव.। अभिपूर्वात् 'अशू व्याप्तौ (स्वा० आ०)'—इत्यस्मात् 'भृमृशीतृचरित्सरितनिधनिमिमस्जिभ्य उः (उ० १, ७)'—इति उप्रत्ययो बाहुलकाद् भवति धात्ववयवस्याकारस्येकारश्च। जम्। अभि व्याप्नुवन्ति जगदश्नुवीवा वा। यद्वा, अभिपूर्वात् 'ईश ऐश्वर्ये (अदा० आ०)'—इत्यस्मात् पूर्ववदुप्रत्ययः। ईष्टे सूर्यस्तमोऽपहन्तुमेभिः, अश्वपालोऽश्वं वद्धुम्। "अभीशूनां महिमानं पनायत (ऋ० सं० ५, १, २७, १)"—इत्यश्वरश्मेर्निगमः। आदित्यरश्मेरन्वेषणीय.॥

(६) दीधितय। एतदादीन्यादित्यरश्मिनामान्येव। 'दीधिङ् दीप्तिदेवनयो. (अदा० आ०)'—'क्तिच्क्तौ च संज्ञायाम् (३, ३, १७४)'—इति क्तिच् पृषोदरादित्वादेव (६, ३,

१०८) यथाकथञ्चिद्रूपसिद्धिरन्वेषा। शोष्यन्ते निष्पीयन्ते प्रेष्यन्ते रसाहरणादिकर्मत्वादित्येन, धार्यन्ते वा वर्षार्थमुदकमेभिरादित्येन तथा। 'अथास्य कर्म रसादानं रश्मिभिश्च रसधारणम् (५, १०)'—इति निरुक्तम्। 'न वा स धृतं गर्भं भास्करस्य गभस्तिभिः। पीत्वा रसं समुद्राणां द्यौः प्रसूते रसायनम्)'—इति श्रीरामायणम्। "अचोदयन्दीधितिमुक्थ्यासु (ऋ० सं० ३, ४, १८, १)"—इति निगमः। 'दीधितिं रश्मिभिस्तव:'—इति (१८,६८) वाजसनेयभाष्यमुव्वटोऽभाषयत्।

(७) गभस्तयः। गो-शब्दपूर्वादन्तर्णीतण्यर्थात् 'भस भर्त्सनदीप्त्योः (जु० प०)'—इत्यस्मात् पूर्ववत् क्तिचोऽभावे च पृषोदरादित्वात् गो-शब्दस्याकारान्तादेशः। गां भूमिञ्च भासयन्ति दीपयन्ति। यद्वा, गवि संसर्गे दीप्यते। यद्वा, बभस्तिरत्तिकर्मा (निघ० २, ८०)। गामुदकं भौमरसलक्षणं बभसति अदन्ति। यद्वा, 'भसेर्गट् च'—इति भोज-सूत्रेण तिप्रत्ययः धातोर्गडागमश्च, बभसति दीप्यन्ते इति गभस्तयः। 'गृह्णेर्गभश्च'—इति माधवः, तदा पूर्वसूत्रेण तिप्रत्यये धातोरस्तुगागमः, 'हृग्रहोर्भश्छन्दसि (सि० कौ० वै० ३पा०)'—इति निर्वाहः, गृह्णन्ति भौमं रसम्। "गभस्तिपूतो नृभिरद्रिभिः सुतो (ऋ० सं० ७, ३, १८, ४)"—"वृष्णो अंशुभ्यां गभस्तिपूतः (य० वा० सं० ७, १)"—इति च निगमौ॥

(८) वनम्। 'वन षण सम्भक्तौ' भ्वादिः परस्मैपदी। 'पुंसि संज्ञायां घः (३, ३, ११८)'। वन्यते सेव्यते शीतादिनिवारणाय। अथवा वनतिर्हिंसार्थः (भ्वा० प०)। वन्यते हिंस्यतेऽनेन तमः। यद्वा, 'वनु याचने' तनादिरात्मनेभाषः। वनुते याच्यते दृष्टिप्रदानाय। यद्वा, 'वन शब्दे' परस्मैपदी। वन्यते शब्द्यते स्तूयते स्तोतृभिः।

राजा वरुणो वनेस्य (ऋ० सं० १, २, १४; २)"—इति निगमः। 'वननीयस्य तेजस.'—इति माधव.॥

(९) उस्राः। 'वस निवासे (भू० प०)'। 'स्फायितञ्चि वञ्चि (उ० २, १२)'—इत्यादिना रक्, वदादित्वात् सम्प्रसारणं बाहुलकात्, 'शासिवसिघसीनाञ्च (८, ३, ६०)'—इति षत्वाभावः। वसन्त्येषु परतेजः वसन्त्येषु रसा. इति वा। यद्वा, उत्पूर्वात् 'सृ गतौ (भू० प०)'—इत्यस्मात् 'उपसर्गे च सञ्ज्ञायाम् (३, २, ९९)'—इति जनेर्विधीयमानो डप्रत्ययो बाहुलकाद् भवति, टेरोऽन्त्यलोपश्च। उत्स्रवन्ति एभ्यो रसा.। "उस्रा वेद वसूनाम् (ऋ० सं० १, १, ६, २)"—इति निगमः॥

(१०) वसव। 'वस निवासे (भू० प०)', 'वस आच्छादने (अदा० आ०)'। "शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च (उ० १, १०)"—इति उ प्रत्ययः। वसन्ति लोकेषु, वसन्त्यत्र रसा, वसत्यत्र पर तेज, आच्छादयति वा लोकान् वृष्ट्या, निवासयति वा तम.। 'बहुलमन्यत्रापि सञ्ज्ञाच्छन्दसो. (६, ४, ५१ वा०)'—इति णिलुक्। वासयितारो वा लोकाना वृष्ट्यादिप्रदानेन। "त्वया यत्तु वसवो वसा ईयाः (ऋ० सं० ५, ४, ६, ३)"—"सुगावो देवा. सदना अकर्म य आजग्म, सवनमिदं जुषाणा। जक्षिवांस पपिवांसश्च विश्वेऽस्मे धत्त वसवो वसूनि (य० वा० सं० ८, १८)"—"विद्युद्वती वसुपत्नी वसूनाम (ऋ० सं० २, ३, १८, २)"—इति च निगमा॥

(११) मरीचिपा। 'मृङ् प्राणत्यागे (तु० आ०)'। 'मृकणिभ्यामीचि' (उ० ४, ७०)'—इति ईचि. प्रत्ययः। म्रियते तमोऽस्मिन्निति मरीचि. रश्मि। अत्र मरीचिशब्देन मरीचिमान् सूर्य उच्यते, मत्वर्थीयस्य लुक् आनन्त्याद्'(पा० ?)

मरीचिमत्सूर्यमण्डलं यान्ति मरीचिपाः, 'आतोऽनुपसर्गे कः (३, २, ३)'। "देवेभ्यस्त्वा मरीचिपेभ्यः (य० वा० सं० ७, ३)"—इति निगमः॥

(१२) मयूखाः। 'डु मिञ् प्रक्षेपणे (स्वा० उ०)'। अस्मात् 'मुखे. खो उयूट् च (उ० ५, २२)'—इति विधीयमानः ख-प्रत्ययो बाहुलकाद् भवति, उयूडागमश्च प्रत्ययस्य बाहुलकादेव। मिन्वन्ति तमः मयूखाः। खप्रत्ययाधिकारे- 'मयेरूट् च'—इति श्रीभोजदेवः। मयतिर्गत्यर्थः (भू० आ०)। गच्छन्ति सर्वलोकेषु मयूखाः। "द्राघयं पृथिवी मभितो मयूखैः (ऋ० सं० ५, ६, २४, ३)"—"इमे मयूखा उपसेदुरु सदः (ऋ० सं० ८, ७, १८, २)"—इति च निगमौ॥

(१३) सप्तऋषयः। 'सप्त सृप्ता सङ्ख्या (निरु० ४, २६)'—इत्युक्तेः सर्पेर्गत्यर्थात् 'सप्यशूभ्यां तुट् च उ० १, १५५)'—इति सर्पेर्विधीयमानः कनिन् प्रत्ययस्तुडागमश्च बाहुलकाद् भवति ऋकारस्याकारश्च। यद्वा, सकाशात् सृप्ता सङ्ख्या सप्त। 'ऋष गतौ (तु० प०)' अनेकार्थत्वाद्धातूना दर्शनार्थः। 'इगुपधात् (उ० ४, ११६)'—इति इन् प्रत्ययः। ऋषयः द्रष्टारः। सप्तसङ्ख्याकाश्च ते ऋषयो द्रष्टारश्च त्रैलोक्यस्येति सप्तऋषयः। 'ऋत्यकः (६, १, १२८)'—इति प्रकृतिभावः। "सप्त युञ्जन्ति रथमेकचक्रम् (ऋ० सं० २, ३, १४, २)"—इत्यत्र 'सप्त आदित्यरश्मयः (४, २६)'—इति वदन्ति नैरुक्ताः। यद्वा, 'षप समवाये (भू० प०)', 'सप्यशूभ्यां तुट् च (उ० १, १५५)'—इति कनिन् प्रत्ययस्तुडागमश्च। समवेताः सप्त, ऋषिरपि गत्यर्थ एव प्रत्ययः। समवेता गच्छन्ति दिक्षु ताभिः रश्मयः। "यत्रा सप्त ऋषीन् पर एकमाहुः (ऋ० सं० ८, ६, १७, २)"—"सप्त ऋषयः प्रतिहिताः शरीरे (य० वा० सं०

१४, ५५)"—"अर्वासत् ऋर्षयः मम माकम् (अथ० सं० १०, २६, ८)"—इति निगमाः ॥

(१४) साध्याः । 'राध साध संसिद्धौ (स्वा० दि० प०)'। 'ऋहलोर्ण्यत् (३, १, १२४)'—इति ण्यत् प्रत्ययः, 'कृत्यल्युटो बहुलम् (३, ४, ११३)'—इति कर्तरि भवति। 'रथाहरणादिकं स्वव्यापारं साध्नुवन्ति संसिद्धं कुर्वन्ति'—इति स्कन्दस्वामी। 'साध्यन्ते आराध्यन्ते साध्याः'—इति क्षीरस्वामी, अत्र यथाप्राप्तो ण्यत्। "यत्र पूर्वे साध्याः सन्ति देवाः (ऋ० सं० २, ३, २२, ४)"—इति निगमः ॥

(१५) सुपर्णाः। सुपसृष्टात् 'पृ पालनपूरणयोः (जु० क्र्या० पृ० प०)'—इत्यस्मात् 'धापृवस्यज्यतिभ्यो नः (उ० ३, ६)'—इति नप्रत्ययः। 'पर्णं पततेः पृणातेः प्रीणातेः वा'—इत्यष्टादशाध्यायदृष्टत्वात् पत्-धातोः बाहुलकात् नप्रत्ययः तकारस्य रेफादेशश्च। प्रीणातेरीकारस्य अकारादेशः स च पकारात् परः। शोभनं पृणन्ति पालयन्ति जगत् शीतादिनिवारणात्, अथवा पूरयन्ति वा वृष्ट्या, शोभनं पतनं गमनमेषामिति वा, सुष्ठु प्रीणन्ति तर्पयन्ति जगत् वर्षप्रदानेनेति वा सुपर्णः। यद्वा, सुमत्वर्थं, भावे च न प्रत्ययः। पतनादिमन्तः सुपर्णाः। तथोच—'बृहद्वदेम विदथे सुवीराः (ऋ० सं० २, ६, ६, ६)'—इत्यत्र 'वीरवन्तः कल्याणवीरा वा (निरु० १, ७)'। अष्टादशाध्याये च 'सुपर्ण विप्राः (ऋ० म० ८, ६, १६, ५)'—इत्यत्र 'पर्णवन्तं कल्याणपर्णं वा'—इति चेति सुमत्वर्थे बहुशो दृष्टः। "यत्रा सुपर्णा अमृतस्य भागम् (ऋ० सं० २, ३, १८, १)"—"वयः सुपर्णा उप सेदुरिन्द्रम् (ऋ० सं० ८, २, ४, ६)"—इति च निगमौ॥ रश्मिनां प्रायो बहुवचनान्तत्वेन दृष्टत्वात् रश्मिनामाभि-

मरीचिमण्डलमध्यगतं पान्ति मरीचिपाः, 'आतोऽनुपसर्गे कः (३, २, ३)'। "देवेभ्यस्त्वा मरीचिपेभ्यः (व० वा० सं० ७, ३)"—इति निगमः ॥

(१२) मयूखाः। 'डु मिञ् प्रक्षेपणे (स्वा० उ०)'। अस्मात् 'मुवेः खो ऊयूट् च (उ० ४, २२)'—इति विधीयमानः ख-प्रत्ययो बाहुलकाद् भवति, ऊयूडागमश्च प्रत्ययस्य बाहुलकादेव। मिन्वन्ति तमः मयूखाः। खप्रत्ययाधिकारे 'मयेरूट् च'—इति श्रीभोजदेवः। मयतिर्गत्यर्थः (भ्वा० आ०)। गच्छन्ति सर्वलोकेषु मयूखाः। "दाधर्थ पृथिवीमभितो मयूखैः (ऋ० सं० ५, ६, २४, ३)"—"इमे मयूखा उपसेदुरू सदः (ऋ० सं० ८, ७, १८, २)"—इति च निगमौ ॥

(१३) सप्तऋषयः। 'सप्त सृप्ता संख्या (निरु० ४, २६)'—सृप्लृतेः सर्पेर्गत्यर्थात् 'सप्यशूभ्यां तुट् च (उ० १, १५५)'—इति सर्पेर्विधीयमानः कनिन् प्रत्ययस्तुडागमश्च बाहुलकाद् भवति ऋकारस्याकारश्च। अद्भ्य, सकारात् सृप्ता सङ्ख्या सप्त। 'ऋष गतौ (तु० प०)' अनेकार्थत्वाद्धातूनां दर्शनार्थः। 'इगुपधात् (उ० ४, ११६)'—इति इन् प्रत्ययः। ऋषयः द्रष्टारः। सप्तसङ्ख्याकाश्च ते ऋषयो द्रष्टारश्च त्रैलोक्यस्येति सप्तऋषयः। 'ऋत्यकः (६, १, १२८)'—इति प्रकृतिभावः। "सप्त युञ्जन्ति रथमेकचक्रम् (ऋ० सं० २, ३, १४, २)"—इत्यत्र 'सप्त आदित्यरश्मयः (४, २६)'—इति वदन्ति नैरुक्ताः। यद्वा, 'षप समवाये (भ्वा० प०)', 'सप्यशूभ्यां तुट् च (उ० १, १५५)'—इति कनिन् प्रत्ययस्तुडागमश्च। समवेताः सप्त, ऋषिभिरपि गत्यर्थ एव प्रत्ययः। समवेता गच्छन्ति दिक्षु सप्तर्षयः। "यत्रा सप्त ऋषीन् पर एकमाहुः (ऋ० सं० ८, ६, १७, २)"—"सप्त ऋषयः प्रतिहिताः शरीरे (य० मा० सं०

१४, ५५)"—"अवांसत् ऋतवः सप्त साकम् (अथ० सं० १०, २६, ८)"—इति निगमाः ॥

(१४) साध्याः। 'राध साध संसिद्धौ (स्वा० दि० प०)'। 'ऋहलोर्ण्यत् (३, १, १२४)'—इति ण्यत् प्रत्ययः, 'कृत्यल्युटो बहुलम् (३, ४, ११३)'—इति कर्त्तरि भवति। 'रसाहरणादिकं स्वव्यापारं साध्नुवन्ति संसिद्धं कुर्वन्ति'—इति स्कन्दस्वामी। 'साध्यन्ते आराध्यन्ते साध्याः'—इति क्षीरस्वामी, अत्र यथाप्राप्तो ण्यत्। "यत्र पूर्वे साध्याः सन्ति देवाः (ऋ० सं० २, ३, २२, ४)"—इति निगमः ॥

(१५) सुपर्णाः। सूपसृष्टात् 'पॄ पालनपूरणयोः (जु० क्र्या० पा० प०)'—इत्यस्मात् 'धापॄवस्यज्यतिभ्यो नः (उ० ३, ६)'—इति नप्रत्ययः। 'पर्णं पततेः पृणातेः प्रीणातेः वा'—इत्यष्टादशाध्यायदृष्टत्वात् पत्-धातोः बाहुलकात् नप्रत्ययः तकारस्य रेफादेशश्च। प्रीणातेरीकारस्य अकारादेशः स च पकारात् परः। शोभनं पृणन्ति पालयन्ति जगत् शीतादिनिवारणात्, अथवा पूरयन्ति वा हव्या, शोभनं पतनं गमनमेषामिति वा, सुष्ठु प्रीणन्ति तर्पयन्ति जगत् वर्षप्रदानेनेति वा सुपर्णाः। यद्वा, सुमत्वर्थ., भावे च न प्रत्यय.। पतनादिमन्तः सुपर्णाः। तथाच—'बृहद्वदेम विदथे सुवीराः (ऋ० सं० २, ६, ६, ६)'—इत्यत्र 'वीरवन्तः कल्याणवीरा वा (निरु० १, ७)'। अष्टादशाध्याये च 'सुपर्णं विप्राः (ऋ० म० ८, ६, १६, ५)'—इत्यत्र 'पर्णवन्तं कल्याणपर्णं वा'—इति चेति सुमत्वर्थे बहुशो दृष्टः। "यत्रा सुपर्णा अमृतस्य भागम् (ऋ० सं० २. ३, १८, १)"—"वयः सुपर्णा उप सेदुरिन्द्रम् (ऋ० सं० ८, २, ४, ६)"—इति च निगमौ ॥ रश्मिनां प्रायो बहुवचनान्तत्वेन दृष्टत्वात् रश्मिनामामि-

प्रायेण बहुवचनान्तानि पठितानि। एवं दिङ्नामस्वपि द्रष्टव्यम्।

॥ इति पञ्चदश रश्मिनामानि ॥ ५ ॥

आताः(१)। आशाः(२)। उपराः(३)। आष्ठाः(४)। काष्ठाः(५)। व्योम(६)। ककुभः(७)। हरितः(८)। इत्यष्टौ दिङ्नामानि ॥६॥

(१) आताः। आङ्पूर्वादततेर्गतिकर्मणः (भ्वा० प०) 'अकर्त्तरि च कारके (३, ३, १९)'—इति घञ्। आभिमुख्येन गम्यन्ते प्राणिभिस्ता न कार्यं प्रति। यद्वा, आङ्पूर्वात् तनोतेः 'उपसर्गे च संज्ञायाम् (३, २, ९९)'—इति जनेर्विधीयमानो डप्रत्ययो बहुलवचनाद् भवति। आततः आताः। "कृष्णन्याता सुमनष्टास (ऋ० म० ३, ३, ७ ६)"—"उदातैर्जिहते बृहदाराः (ऋ० म० ६, ७, २४, ५)"—इति निगमौ॥

(२) आशा। आङ्पूर्वात् 'शद्लृ शातने (भ्वा० प०)'—इत्यस्मात् अच्, अनेकार्थत्वाद्धातूनाम्। पूर्ववड्डः। तं तमर्थं प्रत्यागमनात्। यद्वा, आ इत्येषोऽभीप्सार्थे वर्त्तते। 'अशू व्याप्तौ (स्वा० आ०)'—इत्यस्मात् घञि रूपम्। आशा उपदिशा भवन्त्यश्नुवानात् परस्परादिभिः संव्याप्ताः। 'आ, अश्नुवते आशा'—इति क्षीरस्वामी। अत्र पचाद्यच् (३, १, १३४)। "इन्द्र आशाभ्यस्परि (ऋ० सं० २, ८, ९, २)"—इति निगमः॥

(३) उपराः। उपरमन्ते आस्वपि प्राणिनो वा सव्यापारेभ्यः। पूर्ववत् डः। "उपह्वरे यदुपरा अपिन्वत् (ऋ० सं० १, ५, २, १)"—इति निगमः। "नमस्य पृश्नमुप"

रासु धीमहि (ऋ० सं० २, १, १२, ५)"—इत्यत्र दिग्वाची न वेति चिन्त्यम् ॥

(४) आष्ठाः । आङ्पूर्वात् तिष्ठतेः (भू० प०) धातोर्घञर्थे कविधानम् । 'स्थास्नापाव्यधिहनियुध्यर्थम् (३, ३, १८म० भा०)'—इति कप्रत्ययः । सुषामादित्वात् (८, ३, ९८) षत्वम् । आ समन्तात् स्थीयते आभिः । निगमोऽन्वेषणीयः ॥

(५) काष्ठाः । 'काष्ठा दिशो भवन्ति (निरु० २, १५)'—इत्यत्र स्कन्दस्वामी—'क्रान्त्वा सर्वमतीत्य स्थिताः आकाशवद् व्यतिरेकपक्षे । अव्यतिरेकेऽपि त एव शब्दादयः सर्वत्र सन्ति संस्थिताश्चेति । उपदिशोऽप्येवमेव । व्यतिरेकेऽपि इतरेतरापेक्षया 'परत्वापरत्ववत् सर्वत्र व्यवहारोऽस्तित्वमिति' । क्रान्त्वाशब्दात् पूर्वार्द्धं स्थिताशब्दादुत्तरार्द्धमित्यर्थः । पृषोदरादिः । वैयाकरणपक्षे तु 'काशृ दीप्तौ (भू० आ०)' । 'हनिकुषिनीरमिकाशिभ्यः क्थन् (उ० २, २)'—इति क्थन् प्रत्ययः । 'सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन्' ... 'तितुत्रतथसिसुसरकसेषु च (७, २, ९)'—इति इड़भावः । काशन्ते दीप्यन्ते काष्ठाः "नव॒त्वां काष्ठा॒स्त्व॑तः (ऋ० सं० ४, ७, २७, १)"—इति निगमः ॥

(६) व्योम । व्याख्यातमन्तरिक्षनामसु(२) । स एवार्थोऽत्रापि । परिवीता वायुना । 'पर्वमानो कु॒रिन॒ आ विवेश (ऋ० सं० ६, ७, ८, ४),—इति श्रुतिः । यद्वा, विविधसोममयमस्मिन् वियत इति व्योम । 'व्योमा॑नमापो मातृ॒णो॑रसं॑क्रम् (ऋ० सं० ४, ८, ९, २)'—इत्यत्र 'व्योवा व्योमन्'—इति माधवः । निगमोऽन्वेषणीयः ॥

(७) ककुभः । 'ककुभाति विस्तारयतीति ककुप्'—इति क्षीरस्वामी । 'ककुप् कुभेरूपयार्थात् उच्छ्रिता इव हि दिशो दृश्यायेषूपलभ्यमानाः'—इति माधवः । केन प्रजाप-

तैर्बलीयश्च (उ० १, २८ )'—इति मिमत्ययः—इति केचित्। 'धर्त्तेश्च (उ० ४, ४४)'—इति मि-प्रत्ययः—इति कमलनयनः। ऊर्मिः तमःसङ्घातः, आच्छादकत्वात् लोकस्य। तमर्हति (५, १, ६३)', 'छन्दसि च (५, १, ६७)'—इति यत् प्रत्ययः। "इन्द्राय मन्नमूर्म्यः सुयार्चः (ऋ० सं० ६, ६, ३२, १)"—इति निगमः॥

(६) राम्या। 'रमु क्रीडायाम् (भू० आ०)'। अन्तर्णीतण्यर्थात् प्रोपार्थविशिष्टादस्मात् 'कृत्यल्युटो बहुलम् (३, ३, ११३)'—इति बहुलवचनात् 'पोरदुपधात् (३, १, ९८)'—इति यतं बाधित्वा 'ऋहलोर्ण्यत् (३, १, १२४)' भवति, 'श्वीअयिति (७, २, ११५)'—इति वृद्धिः। परमयति भूतानि नक्तञ्चराणि, उपरमयति दिवाचराणि स्वव्यापारेभ्यः। आचमस्तु सर्वभूतानि रमयति। तथाच कौषीतकिः—'ये वै के चानन्दा अत्रे याने मिथुने रात्रा एव ते सन्तता अवच्छिन्नाः क्रियन्ते, तेषां रात्रि-कारीतर'—इति। 'अघोरामः सावित्रः (य० वा० सं० २९, ५८)'—इत्यत्र 'श्वेतः कृष्णोदरः'—इति भाष्यम्। 'रामयारो सितेऽसिते'—इति वैजयन्ती। तस्माद्रामशब्द कृष्णपर्यायः। सा अस्यै रमते रामः 'ज्वलिति कसन्तेभ्यो णः (३, १, १४०)'। 'तदर्हति (५, १, ६३)', 'छन्दसि च (५, १, ६७)'—इति यत्। 'अर्हन कृष्णमहरर्जुनं च (ऋ० सं० ४, ५, ११, १)' १)'—इति श्रुतिः। यद्वा, रमणं रामः। भावे घञ् (३, ३, १८)। स्त्रीभिः सह क्रीडा रामः। 'तत्र साधुः (४, ४, ९८)'—इति यत्। "सदृशान उषमो राम्या अनु (ऋ० सं० २, ३, २१, २)"—इति, "आविर्भूवा अरुणीदुम्याणीम् (ऋ० सं० ३, २, १५, ३)"—इति च निगमौ॥

(७) यम्या। 'यम उपरमे (भू०प०)'। 'अघ्न्यादयश्च (उ०४, १०८)'—इति यक्प्रत्ययान्तो निपात्यते। उपरमयति प्राणिनां चेष्टाः। अथवा 'गदमदचरयमश्चानुपसर्गे (३, १, १००)'—इति यत् कर्त्तरि बाहुलकेन। यद्वा, यमनीया उपरमयितव्या आदित्यचारेणेति यथाप्राप्तो यत् निगमोऽन्वेषणीयः॥

(८) नम्या। (९) दोषा। (१०) नक्ता। (११) तमः। (१२) रजः। (१३) असिक्नी॥

(१४) पयस्वती। पयोऽस्या अस्तीति। 'अस्मायामेधास्रजो विनिः (५, २, १२१)' । 'बहुलं छन्दसि (५, २, १२२)'—इत्युक्ते मतुपि सत्ते च 'उगितश्च (४, १, ६)'—इति ङीप्। 'तसौ मत्वर्थे (१, ४, १९)'—इति भसंज्ञाविधानात् रुत्वं न भवति। निगमोऽन्वेषणीयः॥

(१५) तमस्वती। ताम्यन्त्यनेनेति (दि० प०) तमोऽन्धकारं तेन तद्वती। पूर्ववत् प्रक्रिया। निगमोऽन्वेषणीयः॥

(१६) घृताची। 'घृ क्षरणदीप्त्योः (जु० प०)' 'घृ सेचने (भू०प०)'। 'अञ्जिघृसिभ्यः क्तः (उ० ३, ८९)'। सेचयत्यनेन भूमिं पर्जन्यः, क्षरति मेघात् दीप्तं वा स्वेन तेजसा देवतात्वादिति घृतमत्रावश्यायलक्षणं जलम्, तदञ्चति। 'ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चाञ्च (३, २, ५९)'—इति अञ्चतेर्गत्यर्थात् (भू०प०) क्विनि 'अनिदिताम् (६, ४, २४)'—इति नलोपे, 'अचः (६, ४, १३८)'—इत्यकारलोपे, 'चौ (६, ३, १३८)'—इति दीर्घे, 'अञ्चतेश्चोपसङ्ख्यानम् (४, १, ६वा०)'—इति ङीप्, घृताचीति। निगमोऽन्वेषणीयः॥

(१७) गिरिणा। 'गॄ शब्दे' (क्र्या० प०) अन्तर्णीतण्यर्थात् 'बहुलमन्यत्रापि (उ० २, ४६)'—इति इनच्प्रत्यये रुडागमो धातोर्ह्रस्वश्च। गाययति प्राणिनः गिरिणा। गायय्यैविमेति

माधव। "शिरिणाया चिदक्तुना महोभिः (ऋ० सं० २, ६, २, ३)"—इति निगमः॥

(१८) मोकी। 'मुच्लृ मोचने (तु० उ०)'। 'इन् सर्वधातुभ्यः (उ० ४, ११४)'—इति इनि बाहुलकात् कुत्वम्। 'कृदिकारादक्तिनः (४, १, ४५ वा०)'—इति ङीप्। मुच्यत्यामवस्थायां मध्यमः, मुञ्चन्ति प्राणिनः स्वस्वव्यापारात् मोक्। तदस्यामस्तीति 'छन्दसीवनिपौ च (५, २, १२२ वा०)'—इति मत्वर्थीय ईकारप्रत्यय, व्यत्ययेन (३, १, ८५) हल्ङ्यादिलोपः (६, १, ६८)। "अनुव्रत सवितुर्मोक्यागात् (ऋ० सं० २, ८, २, ३)"—इति निगमः॥

(१९) शोकी। 'शुच शोके (भू० प०)', ज्वलतिकर्मा (निघ० १, १७) वा। पूर्ववत् प्रक्रिया। शोचन्त्यस्यां विरहिणः, शोकस्तेजोऽस्या अस्तीति वा, 'अग्निना वै तेजसा रात्रिस्तेजस्वती'—इति ब्राह्मणम्। निगमोऽन्वेषणीयः॥

(२०) ऊधः। रात्रिनाम-निर्वचनार्थमपि इदं तावदुच्यते। गोरूधः बहुतरं भवति प्रसवकाले अङ्गान्तरेभ्य उच्छ्रिततरं भवति। यद्वा, उपोद्धमुपरि अध्यूढमिव केनचित्। तद्वत् स्नेहरसानुप्रदानसामान्याद् रात्रिरप्यूध उच्यते। यद्वा, 'उन्दी क्लेदने (रु० प०)'। असुनि (उ० ४, १८४), बाहुलकान्नलोपे दकारस्य धत्वं दीर्घं च रूपम्। उनत्त्यवश्यायेन भूतानि। 'ऊनत्त्यूधः'—इति क्षीरस्वामी। "यो अस्मै घ्रंस उत वा य ऊधनि (ऋ० सं० ४, २, ३, ३)"—"ऊधर्न नग्ना जरन्ते (ऋ० सं० ५, ७, १८, १२)"—इति च निगमौ। ऊधनीत्यत्र छान्दसत्वादनङ् (५, ४, १३१,—१४२)॥

(२१) पयः। व्याख्यातं पयस्वतीत्यत्र, मत्वर्थीयस्य निगमोऽन्वेषणीयः॥

(२२) हिमा। 'हन्तेर्हि च (उ० १, १४४)'—इति मक्-प्रत्ययो हिरादेशश्च। हन्ति (अदा० प०) पद्मानीति हिमम्, अर्शआदित्वादच् (५, २, १२७)। "शं भानुना शं हिमा श घृणेन (ऋ० सं० ७, ८, १३, ४)"—इति निगमः।

(२३) वस्त्री। 'वस आच्छादने (अदा० आ०)'। 'शृस्वृ-स्निहित्रप्यसिवसि (उ० १, १०)'—इति उ-प्रत्ययः। • वस्ते आच्छादयते लोकमिति अवश्यायस्तमो वा, तद्वती वस्तुः। 'छन्दसीवनिपौ च (५, २, १२२ वा०)'—इति ईकारः, 'इगा-दोनाञ्च (६, १, १०२)'—इत्याद्युदात्तत्वम्। यद्वा, प्रशस्य-वचनाद् वसुशब्दात् 'वोतोगुणवचनात् (४, १, ४४)'—इति ङीप्, सर्वभूतरमणत्वाद्रात्रेः प्राशस्त्यम्। निगमोऽन्वेष-णीयः॥

इति त्रयोविंशतीरात्रिनामानि॥७॥

वि॒भाव॑री॑(१)। सू॒नरी॑(२)। भा॒स्वती (३)। ओ॒दती(४)। चि॒त्राम॑घा(५)। अर्जु॑नी (६)। वा॒जिनी॑(७)। वा॒जिनी॑वती(८)। सु॒म्ना-वरी॑(९)। अ॒हना(१०)। द्योत॑ना(११)। श्वे॒त्या (१२)। अ॒रुषी(१३)। सू॒नृता(१४)। सू॒नृता॑वती (१५)। सू॒नृता॑वरी(१६)। इति षोडशोषोना-मानि॥८॥

(१) विभावरी। 'भा दीप्तौ (अदा० प०)' विपूर्व। 'आतो मनिन्क्वनिब्वनिपश्च (३, २, ७४)'—इति वनिप्। 'वनो र च (४, १, ७)'—इति ङीब्रेफौ। विशेषेण भाति दीप्यते

आदित्यकिरणसम्बन्धात्। "शुग्मुषो विभावरि (ऋ० स० ३, ८, ३, ६)"—इति निगम ॥

(२) सूनरी। शोभना नरा यस्या सन्ति, मत्वर्थीय ईकार, व्यत्ययेन इन्नन्तादिलोप। अथवा बहुव्रीहि, पिप्पल्यादेराकृतिगणत्वादीकार। नरास्ता प्रसन्नचित्तत्वेन धर्मादिविशिष्टतया तदानीं शोभनत्वम्। तथाच मयाकवि —'पश्चिमाद् यामिनीयामात् प्रसादमिव चेतना'—इति। यद्वा, सूनरी शोभन नयति कालम्। 'णी नये (भ्वा० प०)' सुपूर्वात् 'अच इः (उ० ४, १३४),' 'क्षदिकारादक्तिन (४, १, ४५ वा०)'—इति ङीष्। सूनरी सुधना। यद्वा, 'नृभिर्देवैः समन्विता'—इति माधवः। 'अन्येषामपि दृश्यते (६, ३, १३७)'—इति दीर्घ। व्यत्ययेनावग्रहाभावश्छान्दसः। "ज्योतिष्कृणोति सूनरी (ऋ० स० ५, ६, १, १)"—इति निगम ॥

(३) भास्वती। 'भास दीप्तौ (भ्वा० आ०),' क्विप्। भासत इति भास प्रकाश। भासा, तद्वती भास्वती 'तसौ मत्वर्थे (१, ४, १८)'—इति भ सञ्ज्ञया पदकार्य्ये रुत्वं न भवति भास्वती। "भास्वती नेत्री सूनृतानाम् (ऋ० स० १, ८, १, ४)"—इति निगम ।

(४) ओदती। 'उन्दी क्लेदने (रु० प०)'। उन्देर्लट शतरि 'श्नसोरल्लोपः (६, ४, १११)'—इति शतुरार्द्धधातुकत्वेन विकरणाभावः, सार्वधातुकत्वात् 'सार्वधातुकमपित् (१, २, ४)'—इति ङिद्वद्भावात् 'अनिदिताम् (६, ४, २४)'—इति न लोप, व्यत्ययेन गुण, 'उगितश्च (४, १, ६)'—इति ङीप्। छान्दसत्वाद्व्यत्ययेन ओदती। "एद न नेत्रोदती (१, ४, १)"—इति निगम ॥

(५) चित्रामघा। 'चिञ् चयने (स्वा० उ०)'। 'अमिचि-मिमिदिशंसिभ्यः क्त्रः (उ० ४, १५८)'—इति क्त्र-प्रत्ययः, चित्रम्। मंहतिर्दानकर्मा (निघ० ३, २०), घञर्थे कविधानमित्यत्र परिगणनस्योपलक्षणार्थत्वात् क्रप्रत्यये 'अनिदिताम् (६, ४, २४)'—इति न-लोपः, पृषोदरादित्वात् (६, ३, १०८) घत्वम्। मह्यते दीयतेऽर्थिभ्यः इति मघं धनम् चित्रमाश्चर्यभूतं धनं यस्या इति चित्रामघा, 'अन्येषामपि दृश्यते (६, ३, १३७)'—इति दीर्घः। "वाजिनीवती सूर्यस्य योषा चित्रामघा (ऋ० सं० ५, ५, २२, ५)"—इति निगमः॥

(६) अर्जुनी। 'अर्ज सर्ज अर्जने (चु० प०)'। अर्जेर्णिलुक्च उनन्प्रत्ययः (उ० ३, ५५), अर्जयति। यद्वा, 'अर्ज गतिस्थानार्जनेषु (भू० प०)'। बाहुलकादुनन्। गम्यते तदर्थिभिः तिष्ठति स्वाश्रये। अर्जुनमिति रूपनाम (निघ० ३, ७), तच्चात्रादित्यरश्मिसम्बन्धात् श्वेतम्, अर्जुनी श्वेता, 'अन्यतो ङीष् (४, १, ४०), यद्वा, अर्जुन्यो गावः ता अस्याः सन्ति वाहनत्वेन मत्वर्थीय ईकारः, व्यत्ययेन हलुड्यादिलोपः। "या गोमतीरुषसः सर्ववीरा (ऋ० सं० १, ८, ४, ३)"—इति श्रुतिः। "हिपचतुष्पदर्जुनि (ऋ० सं० १, ४, ६, ३)"—इति निगमः॥

(७) वाजिनी। वाज इत्यन्ननाम (निघ० २, ७), वाजो हविर्लक्षणमन्नमस्या अस्ति, 'अत इनिठनौ (५, २, ११५)'—'ऋन्नेभ्यो ङीप् (४, १, ५)'। यजमानेभ्यो यानि देयान्यन्नानि तैस्तद्वती वा। "वायुविन्द्रश्च चेतथः सुतानां वाजिनीवसू (ऋ० सं० १, १, ३, ५)"—इति निगमः॥

(८) वाजिनीवती। वाजो बलं वेगो वा तेन तद्वती वाजिनी, क्रियोपमः स्वभूता तेन तद्वती वाजिनीवती।

यद्वा, वाजो हविर्लक्षणम् अन्नमस्या अस्तीति वाजिनी यजमानसन्ततिः, तद्वती वाजिनीवती। यद्वा, वाजमन्नं तद्वतो वा वाजिनो, अश्वाः अवयवभूतेनान्नेन तद्वती यत्र संहतिः, तथा अन्नसहत्या तद्वती वाजिनीवती। यद्वा, द्वावेतौ मत्वर्थीयौ तयोरेकार्थेनातिशयमत्वर्थीयः अतिशयेनान्नवतीत्यर्थः 'वाजिनीवतीत्विपा हि सर्वेऽन्न' लभन्ते'—इति माधवः। 'सञ्ज्ञायाम् (८, २, ११)'—इति वा 'छन्दसीरः (८, २, १५),—इति वा मतुपो वत्वम्। "व्यश्वेभ्य. सुभगे वाजिनीवति (ऋ० सं० ६, २, २१, ३)"—"प्रवाभ्य वाजिनीवति (ऋ० सं० १, ८, ७,४)"—इति निगमो॥

(८) सूनावरी। सपूर्वात् 'ऋ गतौ (भ्वा० प०)'—इत्यस्मात् 'उपसर्गे च सञ्ज्ञायाम् (३, २, ९९)'—इति वनेविधीयमानो ड्प्रत्ययो बाहुलकाद् भवति। सुष्ठु आप्यायते आप्यायते इति सूनं सुखं, तद्धि सर्वे सर्वदा ममेदं भूयादित्यभ्यासेन प्रार्थ्यते। तथाच—'सूनं सुखाते, प्रजा वै पशवः सूनम्,—इतिमाधवः। तदस्या अस्ति। 'छन्दसीवनिपौ च (५, २, १२२ वा०)'—'वनो र च (४, १, ७)'—इति ङीपो, 'अन्येषामपि दृश्यते (६, ३, १३७)'—इति दीर्घः। सुखवतीत्यर्थः। "सूनावरी भूता वैश्यन्ती (ऋ० सं० १, ८, ३, २)"—इति निगमः॥

(१०) अर्हना। 'अर्ह गतौ,' भ्वादिरात्मनेपदी, 'अश व्याप्तौ,' स्वादि. परस्मैपदी। 'युच् बहुलम् (उ० २, ७४)'—इति युच्प्रत्ययः, बहुलवचनात् पूर्वस्य मकारलोपः। अहन्मे गच्छत्याकाशे प्रतिदिनं अयं गच्छतीति वा। व्याप्नोति सभासा लोकं व्याप्नोते वादित्यरश्मिभिः। "यह अहमभूवा (ऋ० सं० २, १, ३, ४)"—इति निगमः॥

(११) द्योतना। ण्यन्तात् 'द्युत दीप्तौ (भू॰ आ॰)'—इत्यस्मात् 'आसश्रन्थो युच् (३, ३, १०७)'—इति बाहुलकात् कर्त्तरि युच्, 'णेरनिटि (६, ४, ५१)'—इति णिलोपः। द्योतयति सर्वान् पदार्थान् प्रकाशकत्वात्। यद्वा, केवलात् 'अनुदात्तेतश्च हलादेः (३, २, १४९)'—इति युच्। द्योतते स्वयं द्योतना। "सिषासन्तो द्योतना शश्वदागात् (ऋ॰ सं॰ २, १, ४, ४)"—इति निगमः॥

(१२) श्वेत्या। 'श्विता वर्णे (भू॰ आ॰)'। अध्न्यादित्वात् (उ॰ ४, १०८) यक् द्रष्टव्य। श्वेतते श्वेत्या। 'श्विता वर्णे' इति वर्णसामान्य सामर्थ्यात् शुक्लवर्णेऽपि ग्रैपे पर्य्यवसित द्रष्टव्यम् उषसि तथा दर्शनात्। "रुशद्वत्सा रुशती श्वेत्यागात् (ऋ॰ सं॰ १, ८, १, २)"—इति निगमः॥

(१३) अरुषी। 'ऋ सृ गतौ' जुहोत्यादिः (प॰), 'ऋ गतिप्रापणयोः' भ्वादिः (प॰)। 'ऋतनिभ्यामुषन् (उ॰ ४, ७४)', पिप्पल्यादेराकृतिगणत्वाद्दीकारः। इयर्त्ति गच्छति वादित्योदयेनास्त प्रतिदिनम् प्रापयति वा स्तोतॄन् ऐश्वर्य्यादि। यद्वा, आङ्पूर्वात् 'रुच दीप्तौ (भू॰ आ॰)'—इत्यस्मात् बाहुलकात् डुपच्, टिलोप', आङो ह्रस्व, आरोचते अरुषी। यद्वा, अरुषमिति रूपनाम (निघ॰ ३, ७), सामर्थ्यादत्र शुक्लविषयम्, शुक्लवर्णा अरुषी। 'अन्यतो ङीष् (४, १, ४०)'। "अश्वेव चित्रारुषी (ऋ॰ सं॰, ३, ८, ३, २)"—इति च निगमः॥

(१४) सूनृता। (१५) सूनृतावती। (१६) सूनृतावरी। सुष्ठु उन्यते अप्रियैरिति सून्। सुपूर्वात् 'ऊन परिहाने (दि॰ आ॰)'—इत्यस्मात् क्विप्। ऋतमिति सत्यनाम (निरु॰ ४, १८)। सूंश तदृतञ्च सूनृतम्, पृषोदरादित्वात् (६, ३,

(१०८) न लोपाभाव। प्रियश्च सत्यञ्च। पूर्वं मत्वर्थीयोऽकार, उत्तरत्र मतुप्, अथवा 'छन्दसीवनिपौ च (५, २, १२२वा०)'—इति वनिप्, मतौ वत्वरत्वौ, 'अन्येषामपि दृश्यते (६, ३, १३७)'—इति दीर्घं। यद्वा, प्रियसत्यरूपा वाच सूनृता उच्यते। "सुम्नावरी' सूनृता ईरयन्ती (ऋ० सं० १, ८, ३, २)"—"उदीरय प्रति मा सूनृता उषः (ऋ० सं० १, ४, ९, २)"—इत्यादिदर्शनात् तद्वत्य सूनृतादय। दीर्घो नापेक्षणीय। यद्वा, सूनृतेत्यन्ननामसु (निघ० २, ७) पाठादन्नम्। सूनृता धननाम मावत्वपदेश अन्नवत्यो धनवत्यो वा सूनृतादय। "देवस्त्वोत्ते सूनृते आवयन्ती (ऋ० सं० २, १, ८, ५)"—"विद्रुणो पुच्छ सूनृतावति (ऋ० सं० १, ६, २६, ४)"—"चिकित्वित् सूनृतावरि (ऋ० सं० १, ८, ३,४)"—इति च निगमा भवेयु॥

इति षोडशोषोनामानि॥८॥

वस्तो:(१)। द्यौः(२)। भानुः(३)। वासरम्(४)। स्वसराणि(५)। घ्रंसः(६)। घर्मः(७)। घृणः(८)। दिनम्(९)। दिवा(१०)। दिवेदिवे(११)। द्यविद्यवि(१२)। इति द्वादशाहर्नामानि॥९॥

(१) वस्तो:। अत्र स्कन्दस्वामी—'वस्तोरित्येतद्गमेवेह नाम, न विसर्गान्तरम्, "दोषावस्तोर्हविष्मती घृताची' (ऋ० सं० ४, १, २४, १)"—"दोषावस्तोर्वहीयस प्रपित्वे (ऋ० १, ७, १८, १)"—इति समस्तस्यापि दर्शनात्। वस्तोरिति वस्तो, द्योतत इति द्यौ। एवं सर्वत्र'—इति।

(अदा० आ०) आच्छादयतीति ज्योतिः। व्यत्ययेन कर्त्तरि तोसुन् (३, ४, १३)। "कुह स्विद्दोषा, कुह वस्तो॑र॒श्विना॑ (ऋ० सं० ७, ८, १८, २)"—इति निगमः। कुह केति सप्तमी-सामानाधिकरण्यात् दोषावस्तोरित्यपि सप्तम्या एवाव्ययलुग्व्यवसितः॥

(२) द्योः। 'द्युत दीप्तौ (भू० आ०)', बाहुलकात् डो-प्रत्ययः (उ० २, ६४)। द्योतते किरणसम्बन्धात्। यद्वा, 'द्यु अभिगमने (अदा० प०)', 'द्युगमिभ्यां डोः'—इति श्रीभोजदेवः। अभिगच्छन्त्यस्मिन् स्वं स्वमभिमतप्रदेशं प्राणिनः। 'गोतोणित् (७, १, ९०)'—इति वृद्धिः। "मध्ये आरोधने दि॒वः (१, ७, २२, ६)"—इति निगमः॥ केचित् द्युरिति पठन्ति। तदा 'डिच्च'—इत्यधिकारे 'द्युद्रुभ्यां च'—इति भोजसूत्रेण डुप्रत्ययः। 'द्यु अभिगमने (अदा० प०)' द्युतेरेव वा 'अश्वादयश्च (उ० ५, २०)'—इति डुन्-प्रत्ययान्तो निपातितो द्रष्टव्यः। उभयत्र पूर्वोक्त एवार्थः। "द्युभि॑र॒क्तुभि॒ः परि॑पातम॒स्मान् (ऋ० मं० १, ७, ३७, ५)"—"त्वम॑ग्ने द्यु॒भि॑स्त्वमा॑शुशु॒क्षणि॒ (ऋ० मं० २, ५, १७, १)"—इति निगमौ॥

(३) भानुः। 'भा दीप्तौ (अदा० प०)', 'भादाभ्यां नुः (उ० ३, ३१)। भात्यादित्याधिकरणसम्बन्धादेव। "उहेव्या उ॒षसो॒ भा॒नुर॑र्त (ऋ० सं० ३, ४, १५, २)"—इति निगमः। रश्मि-र्भानुरिति माधवोक्तमहर्भवितुमर्हति॥

(४) वासरम्। 'वस निवासे (भू० प०)', णिजन्तः शब्दोऽपि विपूर्वस्यार्थे वर्त्तते। 'असिकसिभ्रमिदिविचमिवासिभ्य-श्चित् (उ० ३, १२८)'—इत्यरच् प्रत्ययः। विवासयति अप-नयति शीतादिकम्। यद्वा, वसे स्वार्थे णिचि अधिकरणेऽरच्। वसत्यस्मिन् सुखेनेति वासरम्। यद्वा, 'वासृ दीप्तौ

(दि० आ०)' पूर्वस्मादेव सुवादरच् दीप्यते वासरम्। यद्वा, विपूर्वात् सर्त्तेर्गत्यर्थात् पचाद्यचि वीत्यस्येकारस्याकारः पृषोदरादित्वात्, विविधं सराणि सृतानि विस्तीर्णानीत्यर्थः। 'वासराणि वेसराणि (निरु० ४, ७)'—इति भाष्ये स्कन्दस्वामी—'वेसरशब्दस्यायमेकारस्याकारः। माहात्म्येन चात्र वर्त्तते। यथा वेसरी निष्पादकमताभ्यां विरुद्धाभ्यां जातिभ्यामश्वत्वजात्या गर्दभत्वजात्या सम्पन्नः। एवं यावत् द्वौ निष्पादकौ पूर्वभागापरभागौ तद्वताभ्यां विरुद्धाभ्यां शीतोष्णाभ्यां पूर्वभागगतेन शीतेनापरभागगतेन चोष्णेन सम्बन्धाद् वेसरसदृशत्वाद् वासरम्'—इति। "अह्नानीव सूर्यो वासराणि (ऋ० सं० ६, ४, १२, २)"। अह्नानीत्यनेन पौनरुक्त्यादन्योऽपि निगमोऽन्वेषणीयः॥

(५) स्वसराणि। स्वशब्दे उपपदे सर्त्तेर्गत्यर्थात् (भ्वा० प०) पचाद्यच् (३, १, १३४)। स्वेन आत्मनैव गच्छन्ति। अपि च, स्वरित्यादित्यनाम (निरु० २, १४)। सर्त्तेः 'पुंसि सञ्ज्ञायां घः प्रायेण (३, ३, ११८)'। अन्तर्णीतण्यर्थश्चात्र सर्त्तिः। स्वरित्येतस्य रेफलोपः पृषोदरादित्वात् (६, ३, १०९)। आदित्येन सार्य्यन्ते। स हि स्वोदयास्तमयाभ्यां तानि गमयति। यद्वा, सुपूर्वात् 'असु क्षेपणे (दि० प०)'—इत्यस्मात् कदरादित्वादरच् (उ० ५, ४२) द्रष्टव्यः। सु अस्यन्ते क्षिप्यन्ते सूर्येण स्वोदयास्तमयाभ्याम्, तथा च 'स्वसर इत्येतदुपसृष्टात्'—इति माधवः "उस्रा इव स्वसराणि (ऋ० सं० १, १, ६, २)"—इति निगमः॥

(६) घ्रंसः। 'ग्रह उपादाने (क्र्या० उ०)' अस्मात् बाहुलकात् पृषोदरादित्वात् (६, ३, १०९) गकारस्य घकारो नुगागमः हकारस्य सकारः। अस्मिन्नस्मिन् रसा अवसाय्या आदित्येन

"यो घर्मे प्र॑स उत वा य जर्वनि (ऋ०सं० ४, २, २, ३)"—इति निगमः ॥

(७) घर्मः । 'घृ क्षरणदीप्त्योः (जु० प०),' 'घर्मः (उ० १, १४६)'—इति मप्रत्ययान्तो निपातः । जिघर्त्ति दीप्यते रश्मिसम्बन्धात् । निगमोऽन्वे पणीयः ॥

(८) घृणः । जिघर्त्तः (जु० प०) 'इण्सिञ्जिदीङुष्यविभ्यो नक् (उ० ३, २)'—इतोणादिभ्यो विधीयमानो नक्प्रत्ययो बाहुलकाद् भवति । पूर्ववदर्थः । "घृणा वयोऽरु॒याम॒ः परि॑ ग्मन् (ऋ० सं० ३, ७, १८, ६)"—इति निगमः ।

(९) दिनम् । 'दो अवखण्डने (दि० प०)', पूर्ववदौणादिके,नक्प्रत्यये बाहुलकात् (उ० २, ४६), 'द्यतिस्यतिमास्थाम् (७, ४, ४०)'—इतीत्वम् । द्यतितमः दिनम् । "अधा सखिभ्यः सुदिन॒ा व्युच्छान् (ऋ० सं० ५, २, २८, १)"—इति निगमः ॥

(१०) दिवा । द्योतनात् । अव्ययमिदम् । "दिवा॑ भिपि॒त्वेऽव॑सागमि॒ष्ठा (ऋ० सं० ४, ४, १७, २)"—"दिवा॒ नक्त॒ शव॑सा प्रन्तमे॒न (ऋ० सं० ४, ४, १७, ३)"—इति निगमौ ॥

(११) दिवेदिवे । 'दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु (दि० प०)' । 'दिवेर्डिविः'—इत्यधिकरणे डिविप्रत्ययः । दिव्यन्त्यस्मिन्निति द्यौः । दिव्शब्दात् परस्य सप्तम्या एकवचनस्य 'सुपां सुलुक् (७, १, ३९)'—इत्यादिना शे आदेशः, प्रगृह्यत्वं (१, १, १३) तु व्यत्ययेनात्र न भवति । चतुर्थी वा व्यत्ययेन । ततो वीप्सादिः (८, १, ४), दिवसे दिवसे इत्यर्थः । यथादृष्ट पठितमिदं नाम । "उप॑त्वाग्ने दि॒वेदि॑वे (१, १, २, २)"—"दिवेदि॑वे वाममस्मभ्यं॑ सावीः (ऋ० सं० ५, १, १५, ६)"—इति च निगमौ ॥

(१२) द्यविद्यवि । द्योशब्दो व्याख्यात (२) । सप्तम्येक;

वचनं, वीप्सादि पूर्ववत्, "मिनोमसि प्रविद्यवि (ऋ० सं० १, २, १६, १।"—इति निगमः ॥

इति द्वादशाहर्नामानि ॥ ९ ॥

अद्रिः(१)। ग्रावा(२)। गोत्रः(३)। बलः (४)। अश्नः(५)। पुरुभोजाः(६)। वलिशानः (७)। अश्मा(८)। पर्वतः(९)। गिरिः(१०)। व्रजः(११)। चरुः(१२)। वराहः(१३)। शम्बरः (१४)। रौहिणः(१५)। रैवतः(१६)। फलिगः (१७)। उपरः(१८)। उपलः(१९)। चमसः (२०)। अहिः(२१)। अभ्रम्(२२)। वलाहकः (२३)। मेघः(२४)। दृतिः(२५)। ओदनः(२६)। वृषन्धिः(२७)। वृत्रः(२८)। असुरः(२९)। कोशः(३०)। इति त्रिंशन्मेघनामानि ॥१०॥

'आ उपर उपल इत्येताभ्यां साधारणानि पर्वतनामभिः (निरु० २, २१)'—इत्युक्तेर्मेघनामत्वे पर्वतनामत्वं क्रमेण निरुक्ते प्रदर्श्यते।

(१) अद्रि । 'अद भक्षणे (अदा०प०)', 'अदिशदिभूशुभिभ्यः क्रिन् (उ० ४पा०)'—इति क्रिन्प्रत्ययः । अत्ति हि मेघो वर्षाधर्मादित्यरश्मिभिराहृतान् भौमरसान्, अत्ति मेघैरभिवृष्टं जलम्, अद्यते वा प्राणिभिस्तत्प्रभवपदार्थभक्षणं तदौपचर्यं हि, अदन्त्यस्मिन् पदार्थान् मनुष्या इति वा । यद्वा, नञ्पूर्वात् 'दृ विदारणे (क्र्या०प०)'—इत्यस्मात् बाहुलकात् क्रिप्रत्ययः टिलोपश्च । अदरणीय इत्यद्रिः पर्वतः ।

सयधुः सान्द्रैः (१, ८, १६, १)"—इति मेघस्य निगमः । "नान्तरिक्षं नाद्रयः सोमो अक्षाः (ऋ०सं० ८, ४, १५, २)" —इति पर्वतस्य ॥

(२) ग्रावा: । हन्तेः (अदा० प०) 'अन्येभ्योऽपि दृश्यन्ते (३, २, ७५)'—इति क्वनिप् । पृषोदरादित्वात् (६, ३, १०९) धातोर्घादेशः । हन्यते हि मेघ इन्द्रेण 'अहन्नहिम् (ऋ० सं० १, २, ३६, १)'—इति श्रूयते । हन्यतेऽनेन सोमः । यद्वा, 'गॄ निगरणे (तु० प०)', 'गॄ शब्दे (क्र्या० प०)', गृणातिस्तुतिकर्मा (निघ० ३, ५), एभ्यः पूर्ववत् क्वनिपि अडागमः । इग्भिग्रहणात् (३, २, ७५) सर्वं सिद्धम् । गिरत्युदकं वर्षितुम् । अत्र गिरतिस्तत्पूर्वस्यार्थे वर्तते, समुद्गिरति जलं वृष्टिसमये, समुद्गीर्ण इति वा अन्तरिक्षेण, गृणाति गर्जितलक्षणं शब्दं करोति, स्तूयते वा वर्षार्थिभिरिति ग्रावा मेघः । पर्वतोऽपि इन्द्रेण हन्यते पक्षच्छेदसमये, गिरति मेघैरभिवृष्टं जलमुद्गिरति निर्झरजलम्, समुद्गीर्ण इव वा गुहादिगतसिंहादिशब्देन, शब्दकारी, स्तूयते च पदार्थबाहुल्यात् प्राणिभिस्तदाश्रयिभिरिति ग्रावा । "इन्द्र ग्रावाणो अदितिः सजोषाः (ऋ० सं० ४, १, २९, ५)"—इति मेघस्य निगमः । "ग्रावाणो अप दुच्छुनामप सेधत (ऋ० सं० ८, ८, ३३, २)"—"ग्रावाणु उपरेष्वा महीयन्ते (ऋ० सं० ८, ८, ३३, ३)"—इति पर्वतस्य निगमौ ॥

(३) गोत्रः । 'गुङ् अव्यक्ते शब्दे (भ्वा० आ०)' । 'गुधृवीपचिवचियमि[मनितनि]सदिक्षदिभ्यस्त्रः (उ० ४, १६२)'—इति त्रप्रत्ययः । मेघो गर्जितलक्षणमव्यक्ताक्षरं शब्दं करोति, गूयते शब्दाते वा,—'अहो ! अयमतीव घर्मकाले बधायेमागत'—इति । यद्वा, गामुदकं रश्मिभिराहृतं त्रायति-

ययुः साम्बद्रैः (१, ८, १६, १)”—इति मेघस्य निगमः। “नान्तरिक्षं नाद्रयः सोमो अक्षाः (ऋ॰सं॰ ८, ४, १५, २)” —इति पर्वतस्य ॥

(२) ग्रावाः। हन्तेः (अदा॰ प॰) ‘अन्येभ्योऽपि दृश्यन्ते (३, २, ७५)’—इति क्वनिप्। पृषोदरादित्वात् (६, ३, १०९) धातोर्ग्रादेशः। हन्यते हि मेघ इन्द्रेण ‘अहन्नहिम् (ऋ॰ सं॰ १, २, ३६, १)’—इति श्रूयते। हन्यतेऽनेन सोमः। यद्वा, ‘गॄ निगरणे (तु॰ प॰)’, ‘गॄ शब्दे (क्र्या॰ प॰)’, गृणातिस्तुति-कर्मा (निरु॰ ३, ५), एभ्यः पूर्ववत् क्वनिपि आडागमः। दृशि-ग्रहणात् (३, २, ७५) सर्वं सिद्धम्। गिरत्युदकं वर्षितुम्। अत्र गिरतिरुत्पूर्वस्यार्थे वर्त्तते, समुद्गिरति जलं वृष्टिसमये, समुद्गीर्ण इति वा अन्तरिक्षेण, गृणाति गर्जितलक्षणं शब्दं करोति, स्तूयते वा वर्षार्थिभिरिति ग्रावा मेघः। पर्वतोऽपि इन्द्रेण हन्यते पक्षच्छेदसमये, गिरति मेघैरभिवृष्टं जलमुद्गि-रति निर्झरजलम्, समुद्गीर्ण इव वा गुहादिगतसिंहादि-शब्देन, शब्दकारी, स्तूयते च पदार्थबाहुल्यात् प्राणिभिस्तदा-श्रयिभिरिति ग्रावा। “इन्द्र ग्रावाणो अदितिः सजोषाः (ऋ॰ सं॰ ४, १, २९, ५)”—इति मेघस्य निगमः। “ग्रावाणो अप दुच्छुनामप सेधत (ऋ॰ सं॰ ८, ८, २३, २)”—“ग्रावाण उपरेष्वा महीयन्ते (ऋ॰ सं॰ ८, ८, २३, ३)”—इति पर्वतस्य निगमौ ॥

(१, ३, १) वनिपि ईकारस्याकारः स च पकारात् परः प्रोच्य यन्ति स्वाभयमिति। पर्वाण्यवयवाः सन्त्यस्य 'पर्वमरुद्भ्यां तप् वक्तव्यः (५, २, १२२ वा०)'—इति मत्वर्थीयस्तप्प्रत्ययः। मेघस्य पर्वतस्य च देवताञ्चकत्वस्य च विद्यमानत्वात् उभय विधि वक्तुं शक्यम्। यद्वा, परिदृश्यमानाकारेणापि मेघस्य धूमादिसङ्घातत्वात्, पर्वतस्य च शिलादिमत्त्वादवयवित्वम्। यद्वा, 'पर्व पूरणे (भ्वा० प०)', अस्मात् 'भृमृदृशियजिपर्विपच्य-मितमिनमिहर्यिभ्योऽतच् (उ० ३, १०७)'—इत्यतच्प्रत्ययः। पर्वति पूरयति वर्षेण भूमिं स्वशरीरेणाकाशं वा पर्वतोऽपि निर्झरनदीप्रवाहादिना भूमिमवोच्छ्याकाशञ्च पूरयति। "नि पर्वता अद्मसदो न सेदुः (ऋ० सं० ४, ७, २, ३)"—"बलित्था पर्वतानाम् (ऋ० सं० ४, ४, २८, १)"—इति मेघस्य निगमौ। "यदद्रयः पर्वताः साकमाशत (ऋ० सं० ८, ४, २८, १)"—"प्र पर्वतानामुशती उपस्थात् (ऋ० सं० ३, २, १२, १)"—इति च पर्वतस्य॥

(१०) गिरिः। 'गॄ निगरणे (तु० प०)', अथवा 'गॄ शब्दे (क्र्या० प०)', गृणाति स्तुतिकर्मा (निरु० ३, ५)। किदिति वर्त्तमाने (उ० ४, १३७), 'कॄगॄशॄकुटिभिदिछिदिभ्यश्च इः (उ० ४, १३८)'—इति इप्रत्ययः, 'ऋत इद्धातोः (७, १, १००)'—इतीत्वम्, गिरिः। पर्वतेनैव समानार्थः। "निराविध्यद् गिरेरधि शिर्म भ्राजते तुजा शर्व (ऋ० सं० १, ४, २१, ३)"—इति पर्वतस्य। "मृगो न भीमः कुचरो गिरिष्ठाः (ऋ० सं० २, ३, २४, २)"—इत्युभयस्य।

(११) व्रजः। 'व्रज गतौ (भ्वा० प०)'। 'गोचरसञ्चरवह-व्रजव्यजापणनिगमाश्च (३, ३, ११८)'—इति [illegible] घः, करणाधिकरणयोरुपदर्शनातिरिक्ते कारकेऽपि घो भवति

व्रजत्यन्तरिक्षे व्रजत्यनेनेन्द्र इति वा व्रजो मेघः, मेघवाहनो ह्रीन्द्रः पर्वतोऽपि पक्षच्छेदात् पूर्वमन्तरिक्षे व्रजति। अथवा स्वशरीरेण भूमिमन्तरिक्षञ्च व्रजति। व्रजन्ति तत्र प्राणिन इति वा। "अप व्रजमूर्णुथः सुसाध्यम् (ऋ० सं० ७, ८, १८; ३)"—इति मेघस्य निगमः। "व्रजं गोमन्तमुशिजो विवव्रुः (ऋ० सं० ३, ४, १४, १)"—इति पर्वतस्य॥

(१२) चरुः। 'चर गतिभक्षणयोः (भू० प०)'। 'भृमृशीतॄचरित्सरितनिधनिमिमस्जिभ्य उः (उ० १, ७)'—इति उप्रत्ययः। चरन्ति गच्छन्त्यस्मादापो मेघाद्वर्षाकाले, पर्वतानां निर्झरलक्षणाः चरयन्ति जलं वर्षितव्यमिति चरुर्मेघः, चरन्ति तत्र प्राणिनः, चर्य्यते भक्ष्यते स्वभक्ष्यपदार्थरूपेणेति चरुः पर्वतः। "स नो वृषन्नमुं चरुम् (ऋ० सं० १, १, १४, १)"—इति मेघस्य निगमः। पर्वतस्यान्वेषणीयः॥

(१३) वराहः। 'हृणोतिः (स्वा० प०)'। 'ग्रहवृदृनिश्चिगमश्च (३, ३, ५८)'—इत्यकारः (अप्), वरशब्दे कर्मण्युपपदे आङ्पूर्वाद्धरतेः 'कर्मण्यण् (३, २, १)'। वरमुदकमाहरतीति वराहः। वर उदकलक्षण आहारोऽस्येति वा वराहः (निरु० ५, ४) आङ्पूर्वाद्धरतेर्वा। 'वरमाहारमाहार्षीत्'—इति च ब्राह्मणम्। पृषोदरादित्वात् आहारशब्दस्याकाररेफयोर्लोपः। यद्वा, वरशब्दे उपपदे हरतेराङ्पूर्वात् 'अन्येष्वपि दृश्यते (३, २, १०१)'—इति बाहुलकात् डप्रत्ययः। वराहाकारो वा कृष्णो मेघो वराहसादृश्येन वर्त्तते। वरमुत्कृष्टमुदकं वृहति उद्यच्छति वर्षितुम् 'वृहू उद्यमने (तु० प०)'। इन्ते पूर्ववत् डः। यद्वा, वरशब्द उपपदे जुहोतेर्दानार्थात् डः। वरमुदकं ददाति आदत्ते वा वर्षितुमिति वराहो मेघः, पर्वतोऽपि वरमुत्कृष्टं पदार्थमाहारयति प्राणिभिः,

पदार्थानां सर्वत्र सौलभ्यादाच्छयतीत्युच्यते। वर आहा-रोऽस्येति वा। वराहवत् कृष्णवर्ण इति वा। वरं मूलं वृह-त्युदाच्छत्यस्मादिति वा (निरु० ५, ४)। वरं वरमित्यवैकस्य वरशब्दस्य निरुक्तिः। वरशब्दाद् द्वहेव वराह इत्यर्थः। वर-मुदकमाददाति आदीयते च तस्मात् पुरुषैर्वरः पदार्थ उदक-मेव वा। "विध्यद्वराहं तिरो अद्रिमस्ता (ऋ० सं० १, ४, १८, २)"—"वराहमिन्द्र एमुषम् (ऋ० सं० ६, ५, ३०, ५)"—इति च मेघस्य निगमौ। पर्वतस्याप्येष पर्यायः।

(१४) शम्बरः। 'शमु उपशमे (दि० प०)'। अन्तर्णी-तण्यर्थः। 'शमेर्बन् (उ० ४, ९१)'—इति बन्प्रत्ययः। शम-यति नाशयति असुरानिति शम्बो वज्रः। यद्वा, शातयतेर्बाहुलकात् बन्प्रत्यये पृषोदरादित्वात् शमादेशः। शम्बोऽस्य प्रहर्तृत्वेनास्ति। रो मत्वर्थीयः। प्रहरति हि वज्रः इन्द्रप्रे-रितो मेघान् पर्वतानाञ्च पक्षच्छेदसमये। यद्वा, शम्पूर्वाद् वृणोतेः (स्वा० उ०) 'ग्रहवृदृनिश्चिगमश्च (३, ३, ५८)'—इत्यपि शम्वरः सन् वर्णव्यत्ययेन शम्बरः। स व्रियते मेघेनाकाशं, भूमिः पर्वतेन। यद्वा, शम्बरमित्युदकनाम (निघ० १, १२), मत्वर्थीयस्य लुक्, उदकमस्यास्तीति वा, उभयत्रापि तुल्यम्। "उतादर्दमन्युना शम्बराणि वि (ऋ० सं० २, ७, १, २)"—"अधूनोत् काष्ठा अव शम्बरं भेत् (ऋ० सं० १, ४, २१, ६)"—इति मेघस्य निगमौ। पर्वतस्याप्येष पर्यायः।

(१५) रौहिणम्। 'रुह बीजजन्मनि (भ्वा० प०)', भावे घञ् (३, ३, १८) रोहः आरोहणम् आदित्यरश्म्यादीनामस्मिन्न-स्तीति। 'अत इनिठनौ (५, २, ११५)', रोहि अन्तरिक्षम्। 'तत्र भवः (४, ३, ५३)'—इत्यण्, 'इनण्यनपत्ये (६, ४, १६४)'—इति प्रकृतिभावः रौहिणः। अन्तरिक्षेण हि

मेघ, पक्षच्छेदात् पूर्वं पर्वतश्चेति तत्र भव इति वक्तुं शक्यते। यद्वा, बहुलमन्यत्रापि (उ० २, ४६)'—इति इनच्प्रत्यये रोहिण इन्द्रः। 'तस्येदम् (४, ३, १२०)'—इत्यण् रौहिणः। आरोहति मेघमिन्द्रः स्ववाहनत्वात्, 'तुराषाण्मेघवाहनः (अम० को० १, ४७)'—इति तत्पर्यायेषु पठ्यते। अप्सरोभिः सह रिरंसया पर्वतेष्विन्द्रस्य गमनात् तदीयता। यद्वा, उभयत्रापि छेद्यच्छेदकभावेन सम्बन्धः। तथाच चरकाध्वर्यूणां ब्राह्मणे इतिहासः श्रूयते 'प्रजापतेर्वा एतज्ज्येष्ठं तोकं यत्पर्वतास्ते पक्षिण आसन्, ते यत्र यत्र कामयन्ते तत्परा समासत, इय हि शिथिलासीत्, तेषामिन्द्रः पक्षानच्छिनत्, तैरिमा दृहदेति'। "अहन्नहिमभिनद्रौहिणम् (ऋ० सं० १, ७, १६, २)"—"यो रौहिणमस्फुरद्वज्रबाहुः (ऋ० सं० २, ६, ८, २)" —इति निगमौ क्रमेण॥

(१६) रैवत। रेवत्यो गावः 'पशवो वै रेवतीः'—इति श्रुतेः। 'तस्येदम् (४, ३, १२०)'—इत्यण्। मेघो हि सर्वत्र वर्षति यवसं पानीयं च जनयित्वा तदीयो भवति, पर्वतस्तु हत्तया। यद्वा, रयिरस्यास्तीति मतुपि 'रयेर्मतौ बहुलम् (६, १, ३४ वा०)'—इति सम्प्रसारणम्. 'सञ्ज्ञायाम् (८, २, ११)'—इति वत्वम्, सर्वस्य धनस्येशितृत्वात् रेवान् इन्द्रः, मघवेति हि तस्य नाम, तदीयो रैवतः। पूर्ववत् तदीयत्वं द्रष्टव्यम्। निगमावन्वेषणीयौ॥

(१७) फलिगः। प्रतिफलति तत् फलम्। तदस्यास्तीति फलि स्वच्छमुदकं तदृत्याधारत्वेन मेघो वर्षिष्यमाणं पर्वतो हि दृष्टमिति विशेषः। उपपदे 'अन्येष्वपि दृश्यते (३, २, १०१)'—इति गमेर्डप्रत्ययः, स्वच्छोदकपूर्ण इत्यर्थः। यद्वा, फलवत्स्नानपानादिप्रयोजनवद् उदकं फलि,

तद्गच्छतीति पूर्ववत्। माधवस्तु—फलिर्भेदनकर्मापि भिन्दन् गच्छति फलसयुक्तो गच्छतीति वा'—इति निरवोचत्। तस्या यमभिप्राय प्रायेण मेघो हि वर्षासु वीजानि तान् भिन्दन् गच्छति, पर्वतोऽपि स्वभारेण भूमि भिन्दन्नधोगच्छति, अन्तकाले वा शतधा स्वयमेव भिद्यमानो गच्छति नाशम्। कृषिफलस्य मेघायत्तत्वात् फलसयुक्तो गच्छति इत्युच्यते। तथाच कालिदास —'त्वय्यायत्त कृषिफलमिति भ्रूविकारा नभिज्ञै.'—इति मेघकाव्यम्। पर्वतोऽपि शस्यादिरूढवृक्षा दिफलसयुक्तो गच्छति च। फलवत्त्वदशायाम। फलेर्गमि गम्यादित्वादिन्, गमिः पूर्ववत् ड (३, २, १०१) इति च। "वल ह रोज फलिग रवे'य (ऋ० म० ३, ७, २६, ५)"—इति निगम ॥

(१८), (१९) उपर, उपल । 'आ उपर उपल इत्ये ताभ्यां साधारणानि पर्वतनामभि (निरु० २, २१)'—इत्यादिभाष्यस्य स्कन्दस्वामिग्रन्थ —'आ उपर उपल इति, आङ अभिविधौ मर्यादायामित्यन्ये, विना उपर उपल इत्ये ताभ्या साधारणा-नीत्यर्थ । आ उपरादिति वक्तव्ये उभयोरुपादान रलयोर-विशेषत्वप्रदर्शनार्थम्। तयोरेकनिर्वचनत्वप्रदर्शनार्थमेकयो-गपचत्व चाङ्गीकृत्याह—'उपर उपलो मेघो भवति (निरु० २, २१)'—इति । वक्ष्यमाणनिगमापेक्षया उपलशब्दस्य च पाषाणे प्रसिद्धत्वात् 'सैषामुषर स्वविष्ठो मध्यमः—इति तत्-सङ्घातशब्दे पर्वत उपलशब्दवाच्यत्वेन प्रसिद्ध एवेति मेघग्रहण कृतम्। मर्यादापक्षस्य च मेघग्रहणमेव लिङ्गमिति उत्त-राणि मेघस्यैवेति। यदा पर्वतस्तदा उपेत्य रमन्ते यस्मिन् अस्माणीति, मेघपक्षे वाप इति। अभिविधिपक्षे 'नेद निर्व चनम्—इति। उपेर्विधीयमानो उप्रत्यय (३, २, ८७)

बाहुलकाद्गमेर्भवति (३, ३, १), क्रदुत्तरपदप्रकृतिस्वरं (६, २, १३८) बाधित्वा अव्ययपूर्वपदप्रकृतिस्वरत्वम् (६, २, २)। 'उपरो जलव्यापनात्'—इति माधवः। वपे. कदरादित्वात् (उ० ५, ४२) अरन् द्रष्टव्यः, सम्प्रसारणं च बाहुलकात्। 'उपरमिव हि नभस्यभ्रं भूमौ पर्वतश्च'—इति माधवः। अत्र श्रीभोजः—'दृषिवपटिदेविकेविशपिवचिभ्यश्चित्'—इत्यलच्प्रत्ययः। व्यु त्पत्त्यमवधारणाश्चावश्यह्यते। मेघनामत्वे तत्र—"एवामुपरा उदायन् (ऋ० म० ७, ७, १८, ३)"—इति निगमः। पर्वतानां चान्वेयमोयः। "चिरंखनिर्णिगुपरा न क्रुष्टिः (ऋ० म० २, ४, ४, ३)"—इति। अत्र 'उपरा पक्षाच्छिला दीर्घा.'—इति माधवः॥

(२०) चमसः। 'चमु अदने (भू० प०),' 'अत्यविचमि (उ० ३, ११३)'—इत्यादिना असच्॥

(२१) अहिः। 'इण् गतौ (अदा० प०),' 'इन् सार्वधातुभ्य (उ० ४, ११४)'—इतीन्प्रत्ययः, गुणायादेशौ, यकारस्य हकारो व्यत्ययेन। पत्वान्तरिक्षे। अयतेरेव गत्यर्थादिन्प्रत्यये पूर्ववद् व्यत्ययः। यद्वा, 'अहि गतौ' भौवादिकः (आ०), इन्प्रत्ययः, बाहुलकान्नलोपः, आगमानित्यत्वाद्वा नुम् न क्रियते। इप्रत्ययाधिकारे श्रीभोजदेवः—'आहिकुण्डलिकं पाश्वलोपश्च'—इति। यद्वा, 'अङ्क्व्याप्तौ' स्वादिः (प०), इन्, अश्नोति व्याप्नोति आकाशं दिगन्तराणि वा। यद्वा, आङ्पूर्वाद्धन्तेः हिंसार्थाद् गत्यर्थाद्वा 'आङि श्रिहनिभ्यां ह्रस्वश्च (उ० ४, १३३)'—इति इण्प्रत्ययो डिच्च, आ समन्तात् हन्ति भिनत्ति जलमाभिमुख्येन, हन्ति गच्छत्यन्तरिक्षम्। यद्वा, केवलादेव हन्तेर्बाहुलकादिण्प्रत्ययो डिच्च, हिः हन्ता, न हन्ता अहन्ता, अहिः अहिंसक इत्यर्थः, सर्वदा लोकस्य वर्षप्रद-

त्वात्। माधवेन तु—'त्वमपामपिधाना वृणोरप (ऋ० सं० १, ४, ८, ४)'—इत्यत्र, वाजसनेये तु 'सोऽग्निषोमावभिसम्बभूव सर्वा विद्या सर्वं यशः सर्वमन्नाद्यं सर्वां श्रियं स यस्सर्वमेतत् समभवत् तस्मादहिः'—इति प्रदर्शितम्। तेन चैतद् युक्तम्। अहिशब्दोऽसुरवाचक आद्युदात्तः। "यदिन्द्राहन् प्रथमजामहीनाम् (ऋ० सं० १, २, ३६, ४)"—इति। नदीवचनोऽन्तोदात्तः। "इन्द्रोदत्तं परि जानाद्दहीनाम् (ऋ० सं० ८, ७, २७, ६)"—इति। अत्राहिशब्दमपि घनामत्वेनाभाषयत् स्कन्दस्वामी। "दासपत्नीरहिगोपा अतिष्ठन् (ऋ० सं० १, २, ३८, १)"—इति निगमः।

(२२) अभ्रम्। 'अभ्र गतौ (भू० प०),' पचाद्यच् (३, १, १३४), अभ्रत्यन्तरिक्षे। आपो राती(ति)ति वा अप्शब्दे कर्मण्युपपदे रातिदानार्थात् 'आतोऽनुपसर्गे कः (३, २, ३),' पकारस्य भकारो व्यत्ययेन (३, ४, ८८)। न भ्रंश्यत्यस्मादापो वर्षासमयादन्यत्रेति वा। यदुक्तं—'न भ्रंशति यतस्तेभ्यो जलान्यभ्राणि नामतः'—इति। नञ्पूर्वात् 'भ्रसभ्रंस अधःपतने (भू० आ० '—इत्यस्मात् 'अन्येष्वपि दृश्यते (३, २, १०१)'—इति डप्रत्ययः। न भ्राजते वा वर्षासु मलिनवर्णत्वात् भ्राजतेः पूर्ववत् डः (३, २, १०१)। "प्रार्पः पिन्व विद्युदभ्रेव रोदसी (ऋ० सं० ७, २, १, २)"—"उदभ्राणीव स्तनयन्नियर्त्ति (ऋ० सं० ४, ७, १८, २)"—इति च निगमौ॥

(२३) बलाहकः। बलाकाभिर्हीयते गम्यते इति बलाहकः, वारिवाहको वा, पृषोदरादित्वात् (६, ३, १०९) वर्णागमादिना साधुः। वराहशब्दाद्वा 'संज्ञायां कन् (५, ३, ७५)', रेफस्य लकारः। अन्यार्थो वराहशब्दः (१३), विकृतव्याख्याधारत्वार्थमर्थप्रदर्शनाय पुनः पाठः। निगमोऽन्वेषणीयः॥

(२४) मेघः। 'मिह सेचने (भू० प०)', पचाद्यच् (३, १, १३४), न्यङ्क्वादित्वात् कुत्वम्। मेहति सिञ्चति वर्षणभूमिं मेघः। "वृषा वां मेघो वृषणा पीपाय (ऋ० सं० २, ४, २६, ३)"—"अस्मिन् मेघे विद्युत्"—इति च निगमौ॥

(२५) दृतिः। 'दृ विदारणे (क्र्या० प०)'। 'दृणातेर्ह्रस्वश्च (उ० ४, १७८)'—इति तिप्रत्ययः, ह्रस्वविधानसामर्थ्याद् गुणो न भवति। दीर्यते इन्द्रेण, दृतिवत् स्यन्दमानाधारत्वाद्वा। "दृतिं सुकर्षं विषितं न्यञ्चम् (ऋ० सं० ४, ४, २८, २)"—"ईशानो विसृजद् दृतिम्"—इति च निगमौ॥

(२६) ओदन.। उदकशब्दे उपपदे ददातेः 'कृत्यल्युटो बहुलम् (३, ४, ११३)'—इति कर्त्तरि ल्युट्। ओदनः उदकदातेत्यर्थः। यद्वा, 'उन्दी क्लेदने (रु० प०', 'उन्देर्नलोपश्च (उ० २, ७२)—इति युच्प्रत्यय', गुणः, उनत्ति वनभूमिम् ओदनः। "धारयत् पृक्षमोदनम् (ऋ०/सं० ६, ५, २०, १)"—इति निगमः॥

(२७) वृषन्धिः। 'वृष सेचने (भू० प०)', 'कनिन्युवृषितक्षि' इत्यादिना (उ० १, १५४) कनिन्, वृषा। शत्रुजयादिसाधनत्वात् कामानां वर्षिता यश्च, स विधीयतेऽस्मिन्निन्द्रेण प्रहारकाले 'कर्मण्यधिकरणे च (३,३, ९३)'—इति किप्रत्यय, नलोपाभावश्छान्दसः। "विषन्धिः"—इति केषुचित् कोशेषु दृष्टम्। तदा विष जलं धीयतेऽस्मिन्निति निर्वाह, सुगागमश्छान्दसः। निगमदर्शनाभावश्च।। "वृषा वृषन्धिंचतुरश्रिमस्यन् (ऋ० सं० २, ६, ७, २)"—इति मेघनाम न वेति सन्दिग्धम्॥

(२८) दृवः। दृणोतेराच्छादनार्थात् (स्वा० प०) 'अभिचिमिमिदिशसिभ्यः क्त्रन् (उ० ४, १५९)'—इति क्त्रन्प्रत्ययो बाहुलकाद् भवति, आच्छादयति सूर्यो वृत्रश्च नभः।

वर्त्ततेर्वा गतिकर्मणः (निघ० २, १४) 'स्फायितञ्चिवञ्चि (उ० २, १२)'—इत्यादिना रक्प्रत्ययः, गच्छत्यसौ जलं नभः। वर्धतेर्वा वृद्ध्यर्थात् (भू० आ०) बाहुलकात् वन्, धकारस्य तकारो व्यत्ययेन, वर्धते हि वर्षासु मेघः। ब्राह्मणोक्ता चास्मो ग्योऽप्यर्थः—'यदिमांल्लोकानवृणोत् तद् वृत्रस्य वृत्रत्वम्, स इषुमात्रमिषुमात्रं विष्वङ् अवर्धत'—इति। "इन्द्राय वृत्र सोमानः क्रियेधाः (ऋ० सं० १, ४, २८, २)"—"अनुत्यद् वृत्रहन्धं त्रिवेरपः (ऋ० सं ८, ८, ५, १)"—इति च निगमौ॥

(२८) असुरः। 'असु क्षेपणे (दि० प०)', 'असिमसोरुरन् (उ० १, ४२,—४३)'—इति उरन्प्रत्ययः, अस्यति क्षिपति भूमौ जलम्। यद्वा, अस्यते क्षिप्यते स्थाने इन्द्रेण वर्षार्थम्। यद्वा, असि (भू० प०) तिष्ठति 'शृस्वृस्निहित्रप्यसिवसि (उ० १, १०)'—इत्यादिना उप्रत्ययः असुः। शरीरे वसतीत्यसुः प्राणः। 'प्राणा वा आपः'—'पानीयं प्राणिनां प्राणाः'—इत्यादिदर्शनात् असुशब्देनाथ जलमुच्यते। तद्राति, 'आतोऽनुपसर्गे कः (३, २, ३)'। यद्वा, जलवान् प्राणवान् वा। रो मत्वर्थीयः। यद्वा, 'अस गतिदीप्त्यादानेषु' भौवादिकः स्वरितेत्, पूर्वस्मादेव सूत्रादुरन्। असति, गच्छत्यन्तरिक्षे, दीप्यते स्वयम्, आदत्ते वा जलं वर्षितुम्। यद्वा, 'सुर ऐश्वर्ये (तुदा० प०)', इगुपधलक्षणः कः (३, १, १३५), सुरतीति सुर ईश्वरः, स्वतन्त्र इत्यर्थः, असुर अनीश्वरः, इन्द्रादिपरतन्त्र इत्यर्थः। "त्रिर स्पेनासो असुरस्य नीनयः (ऋ० सं० ८, ४, २४, १)"—"द्रीर्घाधियोरक्षमाणा असुर्यम् (ऋ० सं० २, ७, ६, ४)"—इति च निगमौ॥

(३०) कोशः। कोशते शब्दकर्मणः (भू० प०) पचाद्यच् (३, १, १३४) पृषोदरादित्वात् (६, ३, १०९) रेफलोपः कोशः।

मेघो हि गर्जितलक्षणं शब्दं करोति। कुष्यतेर्वा इवार्थात् (दि० प०), अभिनिवार्थे पकारस्य शकारः, इषुमात्रमवर्धतेत्यु-क्तम्। क्रोशतिश्छादनार्थ इति माधवः, पूर्ववदत्रच्छा-दयत्यसौ कृत्स्नं नभः। जलस्य कोशस्थानीयत्वात् कोश इत्यन्ये। यद्वा, 'कु शब्दे (तु० आ०)', 'कुदापाभ्यः शः'— इति श्रीभोजदेवः, कौति (अदा० प०) गर्जितशब्दं करोति कोशः। "द्रुघ्ना न कोशासो अभ्रवर्षाः (ऋ० सं० ७, ३, २४, ६)"—"महान्तं कोशमुदचा नि षिञ्च (ऋ० सं ४, ४, २८, ३)"—इति च निगमौ॥

इति त्रिंशन्मेघनामानि ॥ १० ॥

श्लोकः(१)। धारा(२)। इळा(३)। गौः(४)। गौरी(५)। गान्धर्वी(६)। गभीरा(७)। गम्भीरा (८)। मन्द्रा(९)। मन्द्राजनी (१०)। वाशी (११)। वाणी(१२)। वाणीची (१३)। वाणः (१४)। पविः (१५)। भारती (१६)। धमनिः (१७)। नालीः (१८)। मेना (१९)। मेळिः (२०)। सूर्या (२१)। सरस्वती (२२)। निवित्(२३)। स्वाहा(२४)। वग्नुः(२५)। उपब्दिः(२६)। मायुः(२७)। काकुत्(२८)। जिह्वा (२९)। घोषः(३०)। स्वरः(३१)। शब्दः(३२)। स्वनः(३३)। ऋक्(३४)। होत्रा(३५)। गीः (३६)। गाथा(३७)। गणः(३८)। धेना(३९)।

ग्नाः(४०)। विपा(४१)। नम्ना(४२)। कशा (४३)। धिषणा(४३)। नौः(४५)। अक्षरम् (४६)। मही(४७)। अदितिः(४८)। शची (४९)। वाक्(५०)। अनुष्टुप्(५१)। धेनुः(५२)। वल्गुः(५३)। गल्दा(५४)। सरः(५५)। सुपर्णी (५६)। बेकुरा (५७)। इति सप्तपञ्चाशद् वाङ्नामानि ॥ ११ ॥

'आ उपर उपल इत्येताभ्यां साधारणानि पर्वतनामभिः। वाङ्नामान्युत्तराणि (निरु० २, २१—२३)'—इति भाष्ये स्कन्दस्वामी—'उत्तराणि सप्तपञ्चाशत् श्लोक इत्यादीनि वाङ्नामानि। उच्यते इति वाक् इन्द्रियम्, तत्कार्यः शब्दोऽप्युच्यते इति वाक्, उच्यतेऽनया अर्थः इति वाक्, स्तनयित्नुलक्षणा माध्यमिका साप्युच्यते इति वाक्, तदधिष्ठात्र्यपि देवता वागित्युच्यते। सर्वतयास्या मेघहेतुत्वात् मेघनामस्य उत्तराणीति। स च वाक्शब्दः 'वचि परिभाषणे (अदा० प०)'—इत्यस्मात् धातोः 'क्विप् वचि (उ० २, ५४) (३, २, १७८ वा०)'—इत्यादिना क्विपि दीर्घत्वे सम्प्रसारणाभावे च व्युत्पन्नः॥

(१) श्लोकः। 'श्रु श्रवणे (भू० प०)' 'इण्भीकापाशल्यतिमर्चिभ्यः कन् (उ० ३, ४१)'—इति कन्प्रत्ययो बाहुलकाद्भवति, गुणः, कपिलकादित्वात् लत्वम्, श्रूयते इति श्लोकः। यद्वा, श्लोक सङ्घाते (भू० आ०)' 'पुंसि सञ्ज्ञायां घः (३, ३, ११८), श्लोक्यते पद्यते क्रमेण संहन्यते कविभिः श्लोकः 'पद्ये यशसि च श्लोकः (३, ३, २)'—इत्यमरसिंहः। "ऋतस्य श्लोको बधिरा ततर्द (ऋ० सं० ३, ६, १०, ३)"—"श्लोको न

ग्रातामग्रि वीजो चचित्रं (ऋ० सं० ७, ६, ११, ५)"—इति निगमौ॥

(२) धारा। 'धृञ् धारणे (भू० उ०)' 'हेतुमति च (३, १, २६)'—इति णिचि 'एरजण्यन्तानाम् (३, ३, ५६ भा०)'—इत्यस्याप्रापकत्वादेव 'कृत्यल्युटो बहुलम् (३, ३, ११३)'—इति कर्त्तरि भवति। यद्वा, धारेः पचाद्यच् (३, १, १३४), लोकस्य धारयित्री वर्षप्रदानेन स्वाभिधेयस्य वा। "तनमष्टे सुधारा"—इत्यत्र धारा वाङ्नाम। "धारा सुतस्य रोचते (ऋ० सं० ७, ५, २४, १)"—"यः मधाह धारासुतस्य (ऋ० सं० १, ५, ११, ४)"—इति च निगमौ।

(३) इला। 'इल क्षेपणे( तु० प०)' इगुपधेभ्यः (३,१,१३५) कर्त्तरि विधीयमानः कः प्रत्ययो बाहुलकात् (३, ३, १) भवति। क्षिप्यते प्रेर्य्यते उच्चारणकाले प्राणेन, इला। वस्तु-धाना लत्वमुक्तं पूर्वमेव। यद्वा, 'ईड स्तुतौ (अदा० आ०)'—'जि इन्धी दीप्तौ (रु० आ०)' धातुभ्यां पूर्ववत् कः (३, ३, १), पृषोदरादिः (६, ३, १०९), ईडति स्तूयतेऽनया देवता ईड्यते वा या स्वयं देवतात्वात्, दीपयति प्रयोक्तारं, दीप्यते वा येन तेजसा। यद्वा, इलेत्यन्ननाम (निघ० २, ७), मकारो मत्वर्थीयः यजमानानां दैवेनान्नेन हविर्लक्षणेन वा तद्वती इला। "अभि नु इलो यूथस्य माता (ऋ० सं० ४, २, १६, ४)"—इति निगमः॥

(४) गौः। व्याख्याता पृथिवीनामसु (१)। गच्छति यज्ञे-व्याहृता, गीयते स्तूयते वा। "अयं स शिङ्क्ते येन गौ रभी-वृता (ऋ० सं० २, ३, १८, ४)"—इति निगमः॥

(५) गौरी। रोचतेर्ज्वलतिकर्मणः (निघ० १, १६)। 'ऋज्रेन्द्राग्रवज्रविप्रकुब्र (उ० २, २७)'—इत्यादिसूत्रेण रन्-

प्रत्ययान्तो गौरशब्दो निपातितः, तस्मादृचेर्धातोर्गावादेशः, 'षिद्गौरादिभ्यश्च (४, १, ४१)'—इति ङीष्। स्वयं दीप्ता ज्वलति वाग्देवतात्वात्। यद्वा, 'गूरी उद्यमने (तु० आ०)' अस्मात् इनि पूर्वविप्रिपातनादुकारस्यौकारः, 'रोरि (८, ३, १४)'—इति रेफलोपः, ङीष्, गुरते उद्यच्छति सममभिधेयम्, उद्यमनं चात्र प्रकाशनम्। यद्वा, 'गुङ् अव्यक्ते शब्दे (भू० आ०)'—इत्यस्मान्निपातनादिनि वृद्धिः, गवते गर्जितलक्षणमव्यक्तशब्दं करोतीति गौरी। यद्वा, शुक्लवर्णत्वात् गौरी, 'भास्वत्कपर्दां शशिकलासिन्दुकुन्दावदाताम्'—इत्याद्यार्या, 'सर्वशुक्ला सरस्वती'—इति च। "गौरीर्मिमाय सलिलानि तक्षति (ऋ० सं० २, १, २२, १)"—"सोमो गौरी अधिश्रितः (ऋ० सं० ६, ७, २८, ३)"—इति च निगमौ॥

(६) गान्धर्वी। गविगन्धश्शब्दो वः। 'धृञ् धारणे (भू० उ०)'—इत्यस्मात् गोशब्दोपपदाद्वा वप्रत्ययः, उपपदस्य गवादेशः, गन्धर्वः, गोर्यस्य धारयितेन्द्रः। भोजस्तु 'गन्धेरक् च'—इति वप्रत्ययोऽधिकृतः धातोरगागमश्च। गन्धयते अर्दयति हिनस्ति देवशत्रूनिति गन्धर्वः इन्द्रः। 'गन्ध अर्दने'—इति धातुश्चुरादिरात्मनेपदी। 'तस्येदम् (४, ३, १२०)'—इत्यण्, ङीप् (४, १, १५), गान्धर्वी। ऐन्द्रीत्यर्थः। तथाच ब्राह्मणम्—'अथ यैन्द्रवायवी तस्यै यदेन्द्रं पदं तेन वाचं कल्पयति, वागुपेन्द्री (ऐ० ब्रा० २, ४, २)'—इति। यद्वा, गन्धर्वा देवानां गायकाः, तेषामियम्। तथाचैतरेयब्राह्मणे—'सोमो वै राजा गन्धर्वेष्वासीत् (ऐ० ब्रा० १, ५, १)'—इत्यस्मिन् खण्डे वाचो गान्धर्वीत्वं स्पष्टमुक्तम्। 'मां गन्धर्वोऽवदीत् गर्भे अन्तः'—इति श्रुतिः। "पुनिगान्धर्वी पृथ्वी मृतस्य (ऋ० सं० ८, ३, १५, ६)"—इति निगमः॥

(७) गभीरा, (८) गम्भीरा। भीयन्ति (दि० प०) रातीति (अदा० प०) भीराः। 'आतोऽनुपसर्गे कः (३, २, ३)'। गवां भीरा गभीरा गम्भीरा च। पृषोदरादित्वात् (६, ३, १०८) गोशब्दस्य गभावो गम्भावश्च। स्तनयित्नु-लक्षणा हि माध्यमिका वाक् श्रूयमाणैव सर्वप्राणिनां भियमादधाति। यद्वा, उणादौ गभीरादिसूत्रेण गमेर्धातोरीरन्प्रत्यये नुमागमो भकारस्य विकल्पेन लोपो निपात्यते (उ० ४, ३४)। गच्छति यत्नैः, अधिगम्यते वा ज्ञानार्थिभिः। यद्वा, 'गाधृ प्रतिष्ठालिप्सयोर्ग्रन्थे च' भौवादिकः (आ०), अस्य कुटलं, अयामाध्येदंशः, धा च नुम् निपात्यते। प्रतिष्ठिता यस्मिन् स्थाने, लिप्यन्ते वा प्राणिभिः, ग्रथिता वा गद्यपद्यादिरूपेण गभीरा गम्भीरा। उभयोरपि निगमावन्वेषणीयौ॥

(९) मन्द्रा। 'मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु (भ्वा० आ०)'। गच्छति स्वाभिधेयं प्राप्नोति, अधिगम्यते वा तद्विभिः। "स मन्द्रया च जिह्वया (ऋ० सं० ५, २, २२, ३)"—इति निगमः॥

(१०) मन्द्राजनी। मन्द्रशब्दो व्याख्यातः। 'अज गतिक्षेपणयोः (भ्वा० प०)' ल्युट्। मन्द्रमजनं गमनं क्षेपणं प्रेरणमुच्चारणं वा यस्याः सा मन्द्राजनी, पिप्पल्यादिषु द्रष्टव्यम्। (४, १, ४१ ग०) "मन्द्राजनी चोदते गुणवासन्ति (ऋ० सं० ७, २, २१, २)"—इति निगमः॥

(११) वाशी। 'वाशृ शब्दे दैवादिकः (आ०)'। 'वसिवपियजिराजिव्रजिसदिहनिकमिवाशिवादिवारिभ्य इञ् (उ० ४, १२१) कर्मणि कारके वा दृश्यते, वाशिः। 'कृदिकारादक्तिनः (४, १, ४५ वा०)'—इति ङीष्, वाशी। "ते वाशीमन्त इष्मिणो अभीरवो (१, ६, १२, ६"—"वाशीभि-

स्तर्यतार्ममर्यो भिः (ऋ० सं० ८, ५, १८, ४)"—इति च निगमौ ॥

(१२) वाणी । "वणि शब्दे (भू० प०)' । वाहुलकादिञ् (उ० ४, १२१) (३, ३, १), ङीप् (४, १, ४५ वा०) । "वाणीः पुरुहूतं धर्मन्ती. (ऋ० सं० १, २, २, १०)"—"अभिवाणीर्ऋषीणां सप्त नूषत (ऋ० सं० ७, ५, ६, ३)"—इति निगमौ ॥

(१३) वाणीची । वाणीं स्तुतिरूपां वाचमञ्चति गच्छतीति विग्रह्य 'ऋत्विगित्यादिना (३, २, ५८) क्विनि, नलोपे, 'अचः (६, ४, १३८)'—इत्यकारलोपे 'अञ्चतेश्चोपसङ्ख्यानम् (४, १, ६ वा०)'—इति ङीप् । "रथे वाणीच्याहिता (ऋ० सं० ४, ४, १५, ४)"—इति निगमः ॥

(१४) वाणः । वण्यते शब्द्यते वाणः । 'अकर्तरि च कारके सञ्ज्ञायाम् (३, ३, १९)'—इति घञ् । । यद्वा, वणनं शब्दनं वाणः, भावे घञ् (३, ३, १८), अर्शआदित्वादच् (५, २, १२७) । स्तुतिमती हि वाक् । "दोग्रा दना वि दुहन्ति प्र वाणम् (ऋ० सं० ३, ६, १२, ४)"—इति निगमः ॥

(१५) पविः । 'पूञ् पवने (क्र्या० उ०)' 'अच इः (उ० ४, १३४)'—इति इप्रत्ययः । पुनाति हि वाक् । 'पावका नः सरस्वती (ऋ० सं० १, १, ६, २)'—इति मन्त्रः । पूयते वा सङ्कीर्तनादिना, 'वाच यौरिकथालापप्रसङ्गे पुनीमहे' इत्युक्तेः । पूयतेऽनयेति वा शुद्धिकरण हि वाक् । 'पवित्रं हि वाग् विदुषाम्'—इति माधवः । "वाणस्य चोदया पविम् (ऋ० सं० ७, १, ७, १)"—इति निगमः ॥

(१६) भारती । 'डु भृञ् धारणपोषणयोः (भू० उ०)' 'भृमृदृशियजिपर्विपच्यमितमिनमिहर्यिभ्योऽतच् (उ० ३, १०७)' । भरतशब्दात् 'प्रज्ञादिभ्यश्च (५,४,३८)'—इति स्वार्थि-

कीऽण्, ङीप् (४, १, १५)। बिभर्त्ति जगद्धविःप्रदानेन, स्वाभिधेयं वा भ्रियते प्राणिभिः व्यवहारसाधनत्वेन। अथवा 'अग्निर्भरतः, प्राणो भूत्वा हवींषि बिभर्त्ति'—इति वाजसनेयकम्, तदीया भारती। तथाच 'अग्निर्वाक् भूत्वा मुखं प्राविशत्'—इत्युपनिषत् (ऐ० उ० १, ८)। अथवा 'भरतः' (निघ० ३, १८)'—इति ऋत्विङ्नाम, तदीया, स्तुतिसाधनत्वात् भारती। "आ भारती भारतीभिः सजोषा (ऋ० सं० २, ८, २३, ३)"—इति निगमः॥

(१७) धमनिः। धमतिर्गतिकर्मा (निघ० २, १४), 'अर्त्तिसृधृधम्यम्यश्यवितृभ्योऽनिः (उ० २, ८५)'—इत्यनिप्रत्ययः। गत्यर्था बुद्ध्यर्थाः। गम्यते ज्ञायते अनया अर्थः, ज्ञायते वा विद्वद्भिः साध्वसाधुविभागेन। यद्वा, 'धमति'—इति वधकर्मस्वपि पठ्यते (निघ० २, १९)। हन्त्यनया शापाक्रोशादिरूपयेति। तथाच 'वध्य एव वाक्'—इति ब्राह्मणम् (ऐ० ब्रा० २, ३, ३)। 'वाङ्मायका वदनान्निःसरन्ति पौराङ्गताः'—इति च महाभारतम्। "इन्द्रे पिता धमनिं पप्रथन्नि (ऋ० सं० २, ६, ४, २)"—इति निगमः॥

(१८) नालीः। 'नल गन्धे (भू० प०)' 'वसिवपियजिराजिव्रजि (उ० ४, १२१)'—इत्यादिना विहितः इञ्प्रत्ययो बाहुलकात् भवति, 'कृदिकारात् (४, १, ४५ वा०)'—इति ङीप्, व्यत्ययेन सोविसर्जनीयः। 'गन्ध अर्दने (चु० आ०)' 'अर्द हिंसायाम् (भू० प०)'—इति पठ्यते। गन्धनं हिंसात्मकं सूचनम्, सूचयति परमर्माणि। "श्वर्मस्य धमते नालीः (ऋ० सं० ८, ७, २२, ७)"—इति निगमः॥

(१९) मेना। 'मान पूजायाम् (चु० आ०)'—इत्यस्मात् 'बहुलमन्यत्रापि' इनच् भवति (उ० २, ४६)'—इति वचना

दिनन्, बहुलग्रहणाद्वलोपः। पूज्यतेऽनया गुर्वादिरूपदेशवाक्येन, पूज्या वा देवतात्वात्। "धान्ये नी कृत्स्नवन्तो भुवृद्धाः (ऋ० सं० ८, ६, १०२)"—इति निगमः। 'मेना गर्वितशब्दम्'—इति माधवः॥

(२०) मेलिः। सम्पर्कार्थो धातुः (चु० आ०)। पूर्ववत् बाहुलकादिञ्। सम्पृक्ता अर्थेन वाक्। तथाच—'वागर्थाविव सम्पृक्तौ'—इति (रघौ १, १) कालिदासः। 'मेलि मदन्त पित्रोरुपस्थे (ऋ० सं० ३, १, २०, ४)"—इति निगमः। मत्वर्थीयस्य लुकि वाग्मिनमित्यर्थः। "मेलिः स्यात् तद्योजनात्"—इति माधवः॥

(२१) सूर्या। सर्त्तेर्गत्यर्थात् (भू० प०), सुवतेर्वा प्रेरणार्थात् (तु० प०) 'राजसूयसूर्य' (३, १, ११४)'—इत्यादिना निपातनात् क्यपि सर्त्तेरुत्वं सुवतेर्वा रुडागमः। सरति गच्छति स्तोतृन् प्रति, कर्मण्यकुर्वि वा सुवति प्रेरयति चोदनारूपा पुरुषादीनिह कुर्विति। यद्वा, सपूर्वादीरतेः 'कृत्यल्युटो बहुलम् (३, ३, ११३)'—इति कर्मणि क्यपि निपातनाद्रूपसिद्धिः। सुष्ठु ईर्यते उच्चार्यते इति सूर्या। यद्वा, 'षु प्रेरणे (स्वा० उ०)' 'सुसूधागृधिभ्यः क्रन् (उ० २, २३)'—इति क्रन्प्रत्ययः। प्रेर्यते उच्चारणकाले प्राणेन सूरा 'छन्दसि स्वार्थे,—इति यत्प्रत्ययः, सूर्या। यद्वा, सूरयो मेधाविनः, मानर्हति 'छन्दसि च (५, १, ६७)'—इति यत्प्रत्ययः। यद्वा सूरिषु साधुः 'तत्र साधुः (४, ४, ९८)'—इति यत्। निगमोऽन्वेषणीयः॥

(२२) सरस्वती। सर्त्तेरसुन् (उ० ४, १८४) सरः। गद्यपद्यादिरूपेण प्रसरणमस्यास्तीति 'अस्मायामेधास्रजो विनिः (५, २, १२१), 'बहुलं छन्दसि (५, २, १२२)'—इत्युक्ते मतुपि

लोप्। यद्वा, सर इत्युदकनाम (निघ० १, १२)। तत्संस्कृतो ह्यधिदैवतात्वादुदकवती हि माध्यमिका वाक्। सैव चासौ नदी सरस्वती। तदुक्तं भाष्यकारेण—'तत्र सरस्वतीत्येतस्य नदीवत् देवतावच्च निगमा भवन्ति (निरु० २, २३)'—इत्यादिना। "पावका नः सरस्वती (ऋ० सं० १, १, ६, ४)" इति निगमः देवतायाः। "इयं शुष्मेभिः (ऋ० सं० ४, ८, १०, २)"—इत्येषा नद्याः॥

(२३) निवित्। 'विद ज्ञाने (अदा० प०)', निपूर्वः। 'सत्सूद्विषद्रुहदुह '३, २, ६१,'—इत्यादिना क्विपि [अन्तर्णीतण्यर्थश्चात्र विदि] नितरां वेदयति ज्ञापयति स्वमभिधेयम्। "तान् पूर्वया निविदा हूमहे वयम् (ऋ० सं० १, ६, १५, ३)"—इति निगमः॥

(२४) स्वाहा। यस्य नाम्नो यास्कनिर्वचनं दृष्टं तत्सर्वं तद्रूपेणैव लिख्यते। अत्र निरुक्तम्—'स्वाहेत्येतत् सु आहेति वा स्वा वागाहेति वा स्वं प्राहेति वा स्वाहुतं हविर्जुहोतीति वा (निरु० ८, २०)'—इति। अस्य स्कन्दस्वामी—स्वाहेत्येतत् स्वाहाकृतिशब्दस्य पूर्वपदं स्वाहाकारान्तो होममन्त्राणां कर्त्तव्य', 'न ह वै आहुतयो देवान् गच्छन्ति य अवषट्कृता वा अस्वाहाकृता वा भवन्ति (शत० ब्रा० ८, १, ६, १४)'—इतिश्रुतिः। स्वाहाकारस्य सम्प्रदानत्वेन मन्त्रान्तेऽवश्यम्भावित्वात्। अयमर्थः यस्यान्ते श्रूयते स होममन्त्रः शोभनमर्थमाह। अथवा प्रजापतिः स्वा आत्मीया वागाहेति स्वाहाकाररूपा वाक् प्रजापतिसृष्टेत्यर्थः। अथवा स्वं प्राहेति यजमानस्य, स्वं हविः देवतायै दत्तं तदुद्देशेन त्यागात्, तस्य यजमानो सौवं प्राहेति स्वाहा, सम्प्रदानत्वं स्वाहाकारस्य अष्टमनेन प्रकारेण दर्शितं स्वाहुतमित्यादिना। अथवा यद-

नेन स्वाहाकारेण जुहोति तदेव सुष्ठुमर्यादया जुहोतीति, एवञ्च सति पूर्वकाणि निर्वचनानि ब्रूमः । इदन्तु जुहोतेरिति । अत्र भास्करमिश्रः—'स्वयं सरस्वती आह ब्रूते' । 'स्वैव ते वागित्यब्रवीत्'—इति ब्राह्मणम् । स्वयमेवाहेत्यस्यार्थस्य द्योतकोऽयं निपातः प्रदेशान्तरेऽपि विभक्त्यन्तसमुदायात्मनिपातः स्वाहेति । संस्कारविशेषानवधारणामावगच्छामो । अत्र क्षीरस्वामी—'सुष्ठु आह्वयति स्वाहा' । अत्र 'स्वाहाशब्दो नाव्ययम् अप्यग्निजायावाचित्वमित्यर्थः । भाष्ये तु स्वाहाशब्दस्य वाङ्नामत्वेनाभिव्यक्ते ष्टानि निर्वचनानि लिखितानि, तेषु यद्योचितं तद् गृह्णन्तु विद्वांसः । तस्याः वाचः सटो पृथिवो वाग्निश्चेति वाचोऽग्नेश्च कारणकार्यभावः श्रूयते । 'अग्निर्वाक् भूत्वा मुखं प्राविशत् (ऐ० उ० १, ८)'—इति । तस्मादग्नेर्वाचश्च सम्बन्धात् अग्नायी स्वाहा वागित्युच्यते । वाति वाताभत्वेन वागुच्यते इति सन्देहः । निगमः सुलभः स्वाहाकारपक्षे, अन्यत्रान्वेषणीयः ॥

(२५) वग्नुः । 'वच भाषणे (अदा० प०)', 'वचेर्गश्च (उ० ३, ३२)' इति नुप्रत्ययः, चकारस्य गकारश्च । वग्नुः वाचा समानोऽर्थः । "वग्नु सियर्षि यं विदे (ऋ० सं ६, ८, ३, १)" —"इर्ष्यैव वग्नुरा ऊं ख श्यानो (ऋ० सं० ७, ४, १२, ३)" —इति च निगमौ ॥

(२६) उपब्दिः । उपपूर्वात् पदेर्गत्यर्थात् (दि० आ०) 'इन् सर्वधातुभ्यः (उ० ४, ११४)'—इतीन्प्रत्ययो बाहुलकादुपधालोपः, 'न पदान्तद्विर्वचन (१, १, ५८)'—इत्यनेन जश्विधिं प्रति स्थानिवद्भावनिषेधात् 'झलां जश् झशि (८, ४, ५३)'—इति पकारस्य बकारः । उप समीपे भक्तानां गच्छति, उप आचार्यसमीपे गम्यते इति वा । यद्वा, उपपूर्वात् ददातेः

(जु० उ०), द्यतेः (दि० प०), दयतेः (भू० आ०) वा 'कृत्यल्युटो बहुलम् (३, ३, ११३)'—इति बहुलवचनात् 'उपसर्गे घोः किः (३, ३, ९२)'—इति किप्रत्ययः कर्तरि भवति यकारश्चोपजनः। उपेत्य ददातीत्यभिलषितम्, प्रयोक्तॄणां, खण्डयत्यङ्गानं तर्कादिसमये प्रतिवादिनां वा, रचति भक्तानिति वा उपब्दिः। "ग्रावाणोपर्यन्ताः पृथिवीमुपब्दिभिः (ऋ० सं० ८, ४, २९, ४)"—"उपब्दिरियर्ति सोमः (ऋ० सं ७, ३, २४, ५)"—"शृण्व आयुता सुपब्दिः (ऋ० सं० २, ४, ८, २)"—इति निगमाः।

(२७) मायुः। 'डु मिञ् प्रक्षेपणे (क्र्या० उ०)'। कृवापाजिमिस्वदिसाध्यशूभ्य उण् (उ० १, १)', 'मीनातिमीनोतिदीङां ल्यपि च (६, १, ५०)'—इत्यात्वम्, 'आतो युक् चिण्कृतोः (७, ३, ३३)'—इति युक्। क्षिप्यते प्रेर्यते उच्चार्यते इति मायुः, प्रक्षिपति हव्युदकं भूमाविति वा। "मिमाति मायुं द्युमतावधिश्रिता (ऋ० सं० २, ३, १९, ४)"—इति निगमः॥

(२८) काकुत्। 'कैगैरै शब्दे (भू० प०)'। सम्पदादित्वात् (३, ३, ९४ वा०) क्विप्। कार्यं शब्दं करोतीति का, मृगय्वादित्वात् कुः (उ० १, ३६) बाहुलकात् तकार उपजनः। यद्वा, 'कक वक लौल्ये (भू० आ०)', 'क्षयोरुतिन् (उ० १, ९१)'—इत्येव बाहुलकात् (३, ३, १) धातोरद् भवति णिच काकुत्। ककते चञ्चला भवति एकस्मिन्नर्थे न प्रतितिष्ठतीत्यर्थः, तथाहि शब्दा अनेकार्था बहवः, एकार्थाय काकादिनाभिधीयमाना अनेकार्था भवन्ति। ककुदुच्चस्थानमस्यास्तीति काकुत्। मत्वर्थीयस्य लुक्, छान्दसो दीर्घः, सर्वथा पृषोदरादिरयं शब्दः। "या ते काकुत् सुकृता या वरिष्ठा

(ऋ॰ सं॰ ४, ७, १३, २)"—इति निगमः।

(२८) जिह्वा। 'शेवयह्वजिह्वाग्रीवाप्वामीवा'—इति निपातः। 'लिह आस्वादने (अदा॰ उ॰)', वप्रत्यये, अस्या देर्जकारो निपात्यते। लेह्यास्वादयत्यनया अन्नविषयावसा-रान्। यद्वा आह्वयते (भू॰ उ॰) जुहोते (जु॰ प॰) वाय यङन्तस्य वा, सम्प्रसारणम् 'अभ्यस्तस्य च (६, १, ३३)'—इति, सम्प्रसारणे च 'न धातुलोप आर्धधातुके (१, १, ४)'—इति गुणनिषेधादुवङादेशे रूपम्। जोहुवाति पुनः पुन राह्वयति शब्दं करोति रसान् वादत्ते जुहोत्यस्यामिति, जोहुवा सति ओकारस्येकारादेशे उकारलोपे च जिह्वा। "पुरो विप्रा दधिरे मन्द्रजिह्वम (ऋ॰ रु॰ ३, ७, २६, १)"—"अनर्वाणं वृषभं मन्द्रजिह्वम (ऋ॰ सं॰ २, ५, १२, १)"—इति च निगमौ।

(३०) घोषः। 'घुष शब्दार्थे (भू॰ प॰)', 'हलश्च (३, ३, १२१)'—इति घञ्। घुष्यते शब्द्यते घोषः। "घृतो पृथिव्या मुविदात् घोषम् (ऋ॰ सं॰ ३, १, २, १)"—"इन्द्रे घोषा अस-क्षत (ऋ॰ सं॰ ६, ४, ४३, १)"—इति च निगमौ।

(३१) स्वरः। 'स्वृ शब्दोपतापयोः (भू॰ प॰)', पुंसि सञ्ज्ञायां घ (३, ३, ११८)। स्वर्यते शब्द्यतेऽनेन देवता, उप तप्यतेऽनया ममंस्पृकप्रयुक्तयेति वा। स्वरतिरर्चतिकर्मा वा (निघ॰ ३, १४)। स्वर्यते स्तूयते देवतात्वात्। 'गोचरसञ्चर (३, ३, ११९)'—इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वात् घ। यद्वा, स्वरति देवतामिन्द्रादिम्, पचाद्यच् (३, १, १३४)। "स्वरश्च मे श्लोकश्च मे (य॰ वा॰ सं॰ १८, १)—इति निगमः।

(३२) शब्दः। शपत्याक्रोशे आशपित्वा दानी। अस्य हर्सिषञ्च—'शपते अनेनेति शब्दः' सङ्कता वाक्। अथवा

तृतीये इति योगविभागात् भवत्यर्थेऽपि तृतीयं भवति'—इति । 'शब्दनं शब्दः'—इति क्षीरस्वामी । खेऽन्तरिक्षे शब्दं करोतीति वा । "शब्दो रोगिणो मीमांसा च"—इति निगमः ॥

(३३) स्वनः । 'स्वन शब्दे (भ्वा० प०)' 'स्वनहसोर्वा (३, ३, ६२)'—इत्यप् । स्वन्यत इति स्वनः । "सिन्धोरूर्मेरिव स्वनः (ऋ० सं ७, १, ७, २)"—इति निगमः ॥

(३४) ऋक् । ऋच्यते (तु० प०) स्तूयतेऽनया । यद्वा, स्तूयते स्वयं देवतात्वात् । 'ऋच स्तुतौ (तु० प०)'—इत्यस्मात् सम्पदादित्वात् (३, ३, ९४ वा०) क्विप् । "ऋचा वंभे सुम्नयः (ऋ० सं० ८, ५, २०, ३)"—इति निगमः ॥

(३५) होत्रा । 'हु दानादानयोः (जु० प०)' 'हुयामाश्रुभसिभ्यस्त्रन् (उ० ४, १६८)' । हूयतेऽनया मन्त्ररूपया हविः, हूयतेऽस्यां प्राणः, हूयते वा प्राणः । तथाच—'वाचि हि प्राणं जुहुमः प्राणे वा वाचम्'—इत्युपनिषत् (ऐ०) । यद्वा, होत्रेति यज्ञनाम (निघ० ३, १७), हूयतेऽस्मिन् हविरिति यज्ञस्य वागित्युच्यते तत्साध्यत्वात् । 'वाच यच्छति वाग्वै यज्ञः'—इति ब्राह्मणम् (ऐ० ब्रा० १,४,१,४,५) । ऋतुयाजप्रैषेषु दशमे प्रैषे—"वनेम तद्धोत्रया चितन्त्या (ऋ० सं० २, १, १७, २)" —इति निगमः, "वीतिहोत्रं त्वा कवे (ऋ० सं० ४, १, १८, ७)"—इति च निगमः ॥

(३६) गीः । गृणातिरर्चतिकर्मा (निघ० ३, १४), औणादिकः क्विप्, 'ऋत इद्धातोः (७, १, १००)' 'र्वोरुपधाया दीर्घ इकः (८, २, ७६)'—इति दीर्घः, हल्ङ्यादिलोपः (६, १, ६८), रेफस्य विसर्जनीयः । गृणात्यनया गीः । "समिद्धं यन्तु नो गिरः (ऋ० सं० ६, १, १०, २)"—इति निगमः ॥

(३७) गाथा। 'गै शब्दे (भू० प०)' अर्चतिकर्मा च (निघ० ३, १४), 'उषिकुषिगार्तिभ्यस्थन् (उ० २, ४)'। गायन्त्यनो देवताः, गायन्ति तामिति वा गाथा। "तं गाथया पुराण्या (ऋ० सं० ७, ४, २५, ४)"—"युञ्जन्ति हरी इषिरस्य गाथया (ऋ० सं० ६, ७, २, ३)"—इति निगमौ ॥

(३८) गणः। गण 'गणने' चुरादिरदन्तः (प०)। 'अकर्तरि च कारके सञ्ज्ञायाम् (३, ३, १९)'—इति घञ्। 'अतो लोपः (६, ४, ४८)'। गण्यते या गणः, अतो लोपस्य स्थानिवद्भावात् वृद्धिर्न भवति। गणेति केचित् पठन्ति। निगमोऽन्वेषणीयः।

(३९) धेना। दधातेर्लटः शानचि व्यत्ययेन एत्वाभ्यासलोपौ दधाना स्तमभिधेयं वर्णप्रदानेन लौकिकाय वा। यद्वा, 'धेट् पाने (भू० प०)' 'धेट इच्च (उ० ३, १०)'—इति नप्रत्ययः इकारश्चान्तादेशः, गुणः, धयन्ति तामिति धेना। पानमत्र स्वीकारः। यद्वा, आस्वादः। धीयते पीयते आस्वाद्यते वानेन, धयन्ति प्राणमिति वा धेना। तथाच—'तं माता रेळ्हि स उ रेळ्हि मातरम्'—इति श्रुतिः (ऋ० सं० ८, ६, १६, ४)। यद्वा, 'धिवि: प्रीणनार्थः (भू० प०)' बाहुलकात् नप्रत्ययो नकारवकारयोर्लोपश्च, गुणः, धेना। प्रीणयति हि वाक् सुष्ठु प्रयुक्ता। 'धेना वाक् प्रीणमाना वा'—इति माधवः। "धेनां जिगाति दाशुषे (ऋ० सं० १, १, ३, ३)"—"जनानां धेना अवचाकशद्वृषा (ऋ० सं० ७, ८, २५, १)"—इति च निगमौ ॥

(४०) ग्नाः। गमेर्धातोः (भू० प०) 'धापॄवस्यज्यतिभ्यो नः (उ० ३, ६)'—इति बाहुलकात् नप्रत्ययो भवति टिलोपश्च। टाप् (४, १, ४)। गत्यर्था बुद्ध्यर्थाः। जानन्ति काममिति ग्नाः। यद्वा, गच्छति यद्यप्यभूत्। 'अभि यज्ञं गृणीहि नो ग्नावः (१, १, २८, ३)' इत्यत्र 'छन्दांसि वै ग्नाः'—इति

आम्नायम्'—इति माधवः। तस्मात् छन्दसां गायत्र्यादीनां वाग्रूपत्वात् ग्नाव्यपदेशः। निगमोऽन्वेषणीयः॥

(४१) विपा। 'विप् प्रेरणे (चु० प०)'। सम्पदादित्वात् (३, ३, ९४ वा०) क्विप्। तृतीयैकवचनम्। प्रेर्यते मनसा विपा। 'मनसा वा इषिता वाग्वदति (ऐ० ब्रा० २, १५)'—इति ब्राह्मणम्। "वर्हणाय विपा गिरा (ऋ० सं० ४, ४, ६, १)"—इति निगमः। गिरेति पदं निवृत्त्या योजनीयम्॥

(४२) नना। न गच्छति पितृकुलात् बाल्यात्, अनावरणापि न गच्छति लज्जामिति वा। 'नञिकाऽनागतासंवा'—इत्यसरः (२, ६, ८)। नग्ना कन्या। ग्नाशब्दः पूर्वमेव निरुक्तः, इह नपूर्वः। नायं नञ्, किन्तु प्रतिषेधार्थोऽयं निपातः, अतः 'न लोपो नञः (६, ३, ७३)'—इति न भवति। "नना"—इति केचित्। नमतेर्नप्रत्ययो बाहुलकाम्मकारलोपश्च। नमयत्यनयेति नना। निगमोऽन्वेषणीयः॥

(४३) कशा। 'काशृ दीप्तौ (भू० आ०)'। अन्तर्णीतण्यर्थः। पचाद्यच् (३, १, १३४)। आकारस्य ह्रस्वत्वं छान्दसम्। प्रकाशयत्यर्थान्। यद्वा, शेभया सती वर्णव्यत्ययादिना कशा, वागपि सुखात् काशते तत उपलब्धेः। यद्वा, 'काश शब्दे (भू० प)'। भश शब्दायते कशा। यद्वा, 'कश गतौ (भू० प०)' अच् (३, १, १३४)। गच्छति गन्तव्यम्। "या वां कशा मधुमती (ऋ०सं० १, २, ४, ३)"—इति निगमः॥

(४४) धिषणा। धारयत्यर्थमिति धीः बुद्धिः। धारयति कर्त्तारं फलप्रदानेनेति धीः कर्मबुद्धिः कर्म वा। सनोति सम्भजते इति सनोतिः (षणु स० उ०) पचाद्यचि (३, १, १३४), पृषोदरादित्वात् (६, ३, १०९) पूर्वपदह्रस्वत्वे च धिषणा। यद्वा, 'ञि धृषा प्रागल्भ्ये (स्वा० प०)'। 'धृषेर्धिष् च सञ्ज्ञा-

याम् (उ० २, ८०)'—इति क्युप्रत्ययो धिषादेशश्च धिषणा। प्रगल्भसमर्था रचितुं जगद् वर्षप्रदानेनेत्यर्थः। यद्वा, 'दिधिषाम्नि विक्षु: (ऋ० सं० २, ७, २३, १२)'—इत्यत्र स्कन्दस्वामिना पठितात् 'धिषि धारणे'—इत्यस्मात् 'धिष शब्दे (जु० प०)'—इति . धातुपाठपठिताद्वा बाहुलकात् क्युप्रत्ययो धिषणा वाचि स्वाभिधेयं धारयति सम्बन्धस्य नित्यत्वात्। शब्दायते वा मेघे अधिश्रिता 'निर्माति मायुं धिषणावधिश्रिता (ऋ० सं० २, ६, १८, ३)'—इति श्रुतिः। "पार्थस्य मिथं धिषणा च साधन् (ऋ० सं० १, ७, १, १)"—इति निगमः।

(४५) गौः। 'गुद प्रेरणे (तु० आ०)' 'ग्लानुदिभ्यां डौ (उ० २, ६०)'—इति डौप्रत्ययः। नुद्यते प्रेर्यते मूलाधारादिस्थानेभ्यः प्राणेन। गमतेर्वा (भू० प०) बाहुलकात् (१, ३, १) डौ, गम्यते वा देवतालात्। "सुतर्माणमधिनावं रुहेमेति यज्ञो वै सुतर्मा नौः कृष्णाजिनं वै सुतर्मा नौर्वाग्वै सुतर्मा नौः (ऐ० ब्रा० १, २, २)"—इति ब्राह्मणम्, "समितो नुव्याहितम् (ऋ० सं० ८, ७, २३, ४)"—इति च निगमौ॥

(४६) अक्षरम्। 'अशू व्याप्तौ (स्वा० आ०)' 'अश भोजने (क्रया० प०)'। 'अशेः सरन् (उ० ३, ६७)'—इति सरन्प्रत्ययः, व्रश्चादिना (८, २, ३६) षत्वम्, 'षढोः कः सि (८,२, ४१)'। अश्नुते श्रोतुं स्वाभिधेयम्, व्याप्नोति वा अश्नाति वा हविः। अक्षेर्वा (रु० प०) बाहुलकात् सरन् नकारलोपश्च। 'खरि च (८, ४, ५५)'—इति चर्त्वम्। अनक्ति व्यक्षयति सेचयति वर्षेण भूमिम्। यद्वा, नञ्पूर्वात् क्षरतेः (भू० प०) पचाद्यच् (३, १, ११३)। न क्षरति, सर्वदा सर्वैः प्रयुज्यमानापि न क्षीयतइत्यक्षरा। 'यावद् ब्रह्म विष्ठितं तावती वाक् (ऋ० १०, ११४, ८)'—इति

(ऐ० ब्रा० ५, ३, १) ब्राह्मणम् । "प्रचरेण प्रति मिम एताम् (ऋ० सं० ७, ६, १४, ३)"—इति निगमः । 'वाचा विरूपनित्यया'—इत्यर्थे माधवोऽवादीत् । "उपाचरा सद्रिणी (ऋ० सं० ५, २, १८, ४)"—इति च निगमः ॥

(४७) मही । व्युत्पादिता पृथिवीनामसु (१, १२) । महाते पूज्यतेऽनया देवता इति वा । "धमाव' त्वा ध्रिपर्णा तितोपि मही (ऋ० स० १, ७, १५, २)"—इत्यत्र वाङ्नामत्वमपि युज्यते ॥

(४८) अदितिः । व्युत्पादिता पृथिवीनामसु (१, १४) । अदीना, सर्वदा सर्वैः प्रयुज्यमानापि न क्षीयत इत्यर्थः । "अनागसो अदितये स्याम (ऋ० सं० १, २, १५, ५)"—इति निगमः ॥

(४९) शची । अत्र चीरस्वामी—'शच श्वच गतौ' । शचतीति तु धातुपाठे गत्यर्थो न दृष्टः । 'शच व्यक्तायां वाचि (भू० आ०)' 'इन् सर्वधातुभ्य (उ० ४ पा० ११४) । 'कृदिकारात् (४, १, ४५ वा०)'—इति ङीप् । शचते गच्छति यज्ञम्, शच्यते गम्यते ज्ञायतेऽनयार्थ, शचते व्यक्तां वाच वदतीति वा । "शचीभिर्दस्म' उत दक्षिणाभिर्निऋत्यायन्त्यो नरकं पताम (निरु० १, ११)"—इति निगम. ॥

(५०) वाक् । निरुक्ता पूर्वमेव (पृ० ६२) । "यद्वाग् वदन्त्यविचेतनानि (ऋ० स० ६, ७, ५, ४)—इति निगम. ॥

(५१) अनुष्टुप् । स्तौभर्तिर्हृदार्थः (भू० आ०) । क्विप् । अनुपूर्वेण क्रमेण, पूर्वमकारात्मना ततः स्पर्शादिभिर्व्यज्यमाना वर्तते । तथाचोपनिषत्—'अकारो वै सर्वा वाक् सैष स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा 'परा' 'पश्यन्ती' 'मध्यमा' 'वैखरी' इति । तथाच 'विरूप वस्ति वाक् तावक

वपुः'—इति 'सवितृप्रकाशे वामनदत्त.। 'ध्वनि वर्णाः पदं वाक्यमित्याहुः पदचतुष्टयम्। यस्याः सूक्ष्मादिरूपेण वाग्देवीं तामुपास्महे'—इति श्रीभोजदेवः। श्रुतिस्तुतिषु 'चत्वारि वाक्परिमितानि पदानि (निरु० १३, ८)'—इत्यत्र निरुक्ता एव वा वृद्धिः प्रतिपादिता। यद्वा, पूर्वं पश्चाग्दवरात्मना ततो गद्यपद्यादिरूपेण वर्तते। तथाहि—'परिमिता वर्णा अपरिमिता वाचो गतिमाप्नुवन्ति'—इति भगवानाश्वलायनः। यद्वा, स्तौभतिरर्चतिकर्मा (निघ० ३, १४)। आनुपूर्व्येण स्तौति देवताः। "अनुष्टुभमनु च चर्यमाणमिन्द्रम् (ऋ० सं० ८, ७, १०, ४)"—इति निगमः॥

(५२) धेनुः। 'धेट्पाने (भू० प०)'। 'धेट इच (उ० ३, ३४)'—इति नुप्रत्यय, इकारोऽन्त्यादेश। धयति तामिति धेनु, पीयते हि वा तत्प्रवृत्तहष्टिद्वारेण, धेनुवद्दोग्ध्री सर्वकामान् इति वा। 'अधेन्वा चरति मायये॒ष वाचं शुश्रुवाँ अफलामपुष्पाम् (ऋ० सं० ८, २, २३, ५)'—इति श्रुतिः। "गौर्गौः कामदुघा सम्यक् प्रयुक्ता स्मर्यते बुधै"—इति दण्डी। तथा चागम.—'एक शब्दः सम्यक् ज्ञातः सुष्ठु प्रयुक्तः स्वर्गे लोके कामधुग् भवति (यि० भा०)'—इति। '"अभि सुम धेनवः (ऋ० सं० ७, ३, १६, ५)"—"नेष्टुः सचन्त धेनवः (ऋ० सं० २, ५, २६, ५)"—इति च निगमौ॥

(५३) वग्नुः। 'वल संवरणे (भू० आ०)'। 'वलेगुक् च (उ० ३, ३८)'—इत्युप्रत्ययः। सहघोलादष्क्रादयति जगत् व्याप्नोतीति यावत्। यद्वा, वल्गतिः शब्दार्थ. (भू० प०), बाहुलकादुप्रत्ययः। गर्जितादिलक्षण शब्दं करोति वग्नुः। "अय नाभा वदति वग्नुर्वो गृहे (ऋ० सं० ८, २, १, ४)"—इति निगम॥

(५४) गल्दा । 'गल अदने' भौवादिः (प०) । गलनं पूरणं कामानां, गलः पूरणार्थः स्कन्दस्वामिनोक्तः, तद्ददाति । 'आतोऽनुपसर्गे कः (३, २, ३)' गल्दा । निगमोऽन्वेषणीयः ॥

(५५) सरः । 'सृ गतौ (भू० प० )' असुन्प्रत्ययः ( उ० ४, १८४) । गत्यर्थाः बुद्धार्थाः । सरति जानाति सर्वं देवतात्वात्, स्रायते वा विद्वद्भिः, सरति गच्छत्येव वाङ्मता । "सरो न पर्णमुभितो वदन्तः (ऋ० मं० ५, ७, ४, २)"—इति निगमाः । अत्र प्रकरणात् स्तोत्रयज्ञात्मिका वागुच्यते एवं माधव ऐच्छत् ॥

(५६) सुपर्णी । सुपर्णशब्दो रश्मिनामसु व्याख्यातः (१, ५) । 'पाककर्णपर्णपुष्पफलमूल (४, १, ६४)'—इत्यादिना ङीप् । निगमोऽन्वेषणीयः ॥

(५७) बेकुरा । 'भा दीप्तौ (अदा० प०)' कान्तिं करोतीति क्विबन्त् विग्रह्य आरोतीरीत्यादिवे वामत्वये कृते 'छदोऽग्रपूर्वस्य (७, १, १०२)'—'बहुलं छन्दसि (७, १, १०३)'—इति ऋकारस्यापोष्ठ्यपूर्वस्यापि उकारो भकारस्य बकारेण भाकारस्य एकारेण च व्युत्पत्तिश्छान्दसत्वात् बेकुरा दीप्तिकारिणी प्रयोक्तुः । "बेकुरानामासि जुष्टा (ता० म० ब्रा० १, १, ३)"—इति निगमः । छन्दोगानां सामकल्पे पठितोऽयं मन्त्रः । 'अचेर्व्यासिकर्मणः बेकुरा'—इति भरतस्वामिभाष्यम् ॥

इति सप्तपञ्चाशत् वाङ्नामानि ॥ ११ ॥

अर्णः (१) । क्षोदः (२) । क्षद्म (३) । नभः (४) । अम्भः (५) । कबन्धम् (६) । सलिलम् (७) । वाः (८) । वनम् (९) । घृतम् (१०) । मधु (११) । पुरीषम् (१२) । पिप्पलम् (१३) । क्षीरम् (१४) ।

त्रिपम्(१५)। रेतः(१६)। कर्णः(१७)। जन्म(१८)। वृबूकम् (१९)। बुसम् (२०)। तुग्र्या (२१)। बुवुरम् (२२)। सुक्षेम (२३)। धरुणम् (२४)। सिरा (२५)। अरविन्दानि (२६)। ध्वस्मन्वत् (२७)। जामि(२८)। आयुधानि(२९)। क्षपः (३०)। अहिः (३१)। अक्षरम् (३२)। स्रोतः (३३)। तृप्तिः(३४)। रसः(३५)। उदकम्(३६)। पयः(३७)। सरः(३८)। भेषजम् (३९)। सहः (४०)। शवः(४१)। यहः(४२)। ओजः(४३)। सुखम् (४४)। क्षत्रम् (४५)। आवयाः (४६)। शुभम्(४७)। यादुः(४८)। भूतम्(४९)। भुवनम्(५०)। भविष्यत्(५१)। महत्(५२)। आपः (५३)। व्योम(५४)। यशः(५५)। महः(५६)। सर्णीकम् (५७)। स्वृतीकम् (५८)। सतीनम् (५९)। गहनम्(६०)। गभीरम्(६१)। गम्भरम् (६२)। ईम् (६३)। अन्नम्(६४)। हविः (६५)। सद्म(६६)। सदनम्(६७)। ऋतम्(६८)। योनिः (६९)। ऋतस्य योनिः(७०)। सत्यम् (७१)। नीरम्(७२)। रयिः(७३)। सत् (७४)। पूर्णम् (७५)। सर्वम्(७६)। अक्षितम्(७७)। बर्हिः

(७८)। नाम (७९)। सर्पिः (८०)। अपः (८१)। पवित्रम् (८२)। अमृतम् (८३)। इन्दुः (८४)। हेम (८५)। स्वः (८६)। सर्गाः (८७)। शम्बरम् (८८)। अभ्वम् (८९)। वपुः (९०)। अम्बु (९१)। तोयम् (९२)। तूयम् (९३)। कृपीटम् (९४)। शुक्रम् (९५)। तेजः (९६)। स्वधा (९७)। वारि (९८)। जलम् (९९)। जलाषम् (१००)। इदम् (१०१)। इत्येकशतमुदकनामानि ॥१२॥

'उदकनामान्युत्तराण्येकशतम् (निरु० २, २४)'—

(१) अर्णः। 'ऋ गतौ (भू० प०)'। 'उदके नुट् च (उ० ४, १९२)'—इति असुन्प्रत्ययस्य नुडागमः। अर्यते तत् प्राणिभिरित्यर्णः। ऋच्छति निम्नं प्रदेशमिति वा अकारान्तोऽप्यस्ति। 'ऋ गतौ (क्र्या० प०)' पचाद्यच् (३, १, १३४)। ऋणाति गच्छति दिवो भूमिं तदर्णम्। "सृजदर्णांस्यव यद्युधा (ऋ० सं० २, ४, १६, ४)"—"अर्वं द्रिवो अर्णं सच्छा जिगासि (ऋ० सं० ३, १, २२, ३)"—इति निगमौ॥

(२) क्षोदः। 'क्षुदिर् सम्प्रेषणे' भौवादिः स्वरितेत्। असुन् (उ० ४, १८४)। क्षुद्यते क्षोदः। क्षुण्णं हि जलं पर्वतादिभ्यः शिलादिष्वधःपतनात्। "नावा न क्षोदः प्रदिशः पृथिव्याः (ऋ० सं० ८, १, १८, ७)"—"याभी रसां क्षोदसोद्नः पिपिन्वथुः (ऋ० सं० १, ७, ३१, २)"—इति च निगमौ॥

(३) चद्म। 'चद स्थैर्ये (सौ०)'—इति स्कन्दस्वामी। 'चद गतिहिंसनयोः (सौ०)'—इति सुबोधिनीकारः। 'अन्येभ्योऽपि दृश्यते (३, २, ७५)'—इति मनिन्। चदतीति पिपासादनिवर्त्तने। स्वकार्ये स्थिरं भवति जलाशयं व्याप्य स्थिरं भवतीति वा। तथाच 'स्थावराद् गृह्णामि'—इति श्रुतिः, गतावर्षसोरसमित्यर्थः। हिनस्ति पिपासामुष्णं वा अतीप्सित वा पुरुषम्। "चद्मेवार्येषु तस्तीय उमा (ऋ० सं० ८, ६, २, २)"—इति निगमः॥

(४) नभः। 'णह बन्धने (दि० उ०)' 'नहेर्दिवि भश्च (उ० ४, २०५)'—इति विधीयमानोऽसुन् भकारादेशश्च बाहुलकादुदकेऽपि भवतः। नह्यते हि तन्मेघैर्दिवि भूमौ सेवादिभिः, नह्यति प्राणिनां मनांसीति वा। प्राणिनो हि यत्रोदकं विद्यते तत्रैव स्वास्थ्यं मनः कुर्वते। तथा—'समनसः खलु वै पशवोऽनाहतास्ते पशवो हि समनसः'—इति श्रुतिः। न न भातीति वा, एकस्य नञो लोपः इतरस्य नलोपाभावः। भातिरस्मिन् टिलोपश्च बाहुलकात्। भात्येव स्वया दीप्त्या देवतात्वात्। यद्वा, नभ इव नभः। तथाम्बरनिर्वचने 'अम्बुवद्भाजते'—इत्यादिना ग्रन्थेन आकाशस्य जलसाम्यमुक्तम्, साम्यस्योभयनिष्ठत्वात् अत्र जलमप्याकाशसदृशमित्युच्यते। "मदच्युतमौशान नभोजाम् (ऋ० सं० ७, ७, २४, ४)"—"नभोवर्षाणः परियास्यध्वरम् (ऋ० सं० ७, ३, ८, ५)"—इति च निगमौ॥

(५) अम्भः। 'आप्लृ व्याप्तौ (स्वा० प०)'। उदके नुम्भौ च (उ० ४, २०४), अत्रापो ह्रस्वोऽसुन्निति (उ० ४, २०२) च वर्त्तते। व्याप्नोति सर्वमम्भः। तथाचाथर्वणी श्रुतिः—'सर्वमिदमम्भः (अथ० ब्रा०)'—इति, 'आपो वा इदं सर्वम् (अथ०

सं०)'—इत्यादिरनुवाकाख । "अम्भः किमासीद् गहनं गभीरम् (ऋ० सं० ८, ७, १७, १)"—इति निगमः ॥

(६) कवन्धम् । बन्धिरनिभृतत्वे (निरु० १०, ४), निभृतं चञ्चलमतोऽन्यदनिभृतमचञ्चलम् तदनिभृतं, कवन्धः कमनीयश्च तद्बन्धं चेत्यर्थः । कमेर्डप्रत्यये कः, बन्धेः पचाद्यचि बन्धः इति निर्वाहः । यद्वा, कं सुखं बध्नाति स्नानपानादिना । कर्मण्यन् । बवयोरविशेषात् वकारः, कवन्धम् । नीचीनबारं वरुणः कवन्धम् (ऋ० सं० ४, ४, ३०, ३)"—"वयमग्नो न मरुतः कवन्धिनः (ऋ० सं० ४, ३, १५, ३)"—इति च निगमौ ॥

(७) सलिलम् । 'सल गतौ (भू० प०)' । 'सलिकल्यनिमहिभडिभण्डिशण्डिपिण्डितुण्डिकुकिभूभ्य इलच् (उ० १, ५४) । सलति गच्छति निम्नं देशं, गम्यते प्राणिभिरिति वा । "गौरीर्मिमाय सलिलानि तक्षति (ऋ० सं० २, ३, २२, १)" —इति निगमः ॥

(८) वाः । 'वृञ् वरणे (स्वा० उ०)' । स्वार्थिकोऽण् छान्दसः, तदन्तात् क्विप्, णिच लोपः, हल्ङ्यादिलोपः, रेफस्य विसर्जनीयः । वृतं हि तदिन्द्रेण । तथाच श्रुतिः— 'अपकामं स्यन्दमाना अवीवरत वाहिकम्'—इति । इन्द्रो दिव्यः प्रक्षिभिर्देवः तस्मादर्णमयो हितमिति । "वार्ण पथा रथ्येव स्वानीत् (ऋ० सं० २, ५, २५, १)"—इति निगमः ॥

(९) वनम् । "वन षण सम्भक्तौ (त० आ०)' । 'पुंसि सञ्ज्ञायां घः प्रायेण (३, ३, ११८)' । वन्यते सेव्यते वनम् । "यथा वातो यथा वनम् (ऋ० सं० ४, ४, २०)"—"सोमो विश्वान्यतसा वनानि (ऋ० मं० ८, ४, १४, ५)"—इति च निगमौ ॥

सं०)'—इत्यादिरनुवाकश्च। "अम्भः किमासीद् गहनं गभीरम् (ऋ० सं० ८, ७, १७, १)"—इति निगमः।

(६) कबन्धम्। वन्धिरनिभृतत्वे (निरु० १०, ४), निभृतं चञ्चलमतोऽन्यदनिभृतमचञ्चलम् तदनिभृतं, कबन्धः कमनीयश्च तद्बन्धं चेत्यर्थः। कर्मेर्डप्रत्यये कः, बन्धेः पचाद्यचि बन्धः इति निर्वाहः। यद्वा, कं सुखं बध्नाति स्नानपानादिना। कर्मण्यण्। बवयोरविशेषात् वकारः, कवन्धम्। "नीचीनबारं वरुणः कवन्धम् (ऋ० सं० ४, ४, ३०, ३)"—"अर्यमणो न मरुतः कबन्धिनः (ऋ० सं० ४, ३, १५, ३)"—इति च निगमौ॥

(७) सलिलम्। 'सल गतौ (भू० प०)'। 'सलिकल्यनिमहिभडिभण्डिशण्डिपिण्डितुण्डिकुकिभूभ्य इलच् (उ० १, ५४)। सलति गच्छति निम्नं देशं, गम्यते प्राणिभिरिति वा। "गौरीर्मिमाय सलिलानि तक्षति (ऋ० सं० २, ३, २२, १)" —इति निगमः॥

(८) वाः। 'वृञ् वरणे (स्वा० उ०)'। स्वार्थिकोऽण् छान्दसः, तदन्तात् क्विप्, अपि लोपः, हल्ङ्यादिलोपः, रेफस्य विसर्जनीयः। वृतं हि तदिन्द्रेण। तथाच श्रुतिः— 'अपकामं स्यन्दमाना अचीयरत वाहिकम्'—इति। इन्द्रो दिव: शक्तिभिर्देवः तस्मादर्णमयो हितमिति। "वार्ण पृथा रथ्येव खानीत् (ऋ० सं० २, ५, २५, १)"—इति निगमः॥

(९) वनम्। "वन षण सम्भक्तौ (त० भा०)'। 'पुंसि सञ्ज्ञायां घः प्रायेण (३, ३, ११८)'। वन[illegible]वनम्'— [illegible]८८)'—इत्युपधालोपः, "यथा वातो यथा वनम् (ऋ० सं० [illegible] इकारस्य ककारः, 'शानि- विश्वान्यतुला वनानि (ऋ० सं० ८, [illegible] त्वम्। यदस्ति तदिति च निगमौ।

चौरम्। 'चर भक्षणे (भू॰ प॰)'—इत्यस्माद् बाहुलकात् ईरन्प्रत्ययः टिलोपश्च। चरति हि तत् मेघात्। "क्षीरिर्वा कुर्वन्तु योषे (ऋ॰ सं॰ १, ७, १८, ३)"—इति निगमः॥

(१५) विषम्। 'विष्लृ व्याप्तौ (जु॰ उ॰)'।'विषेर्व्यासिकर्मणि'—इति कप्रत्ययः। वेवेष्टि व्याप्नोति सर्वं विषम्। यद्वा, विपूर्वात् 'षा मोचे (अदा॰ प॰)'—इत्यस्मात् 'अन्येष्वपि दृश्यते (३, २, १०, १)'—इति जनेर्विधीयमानो डप्रत्ययो बाहुलकाद् भवति, आकारलोपोऽपि बाहुलकादेव। विशेषेण स्नात्यनेनेति विषम्, तद्धि प्रथमं मोचसाधनम्। विपूर्वात् सपतेर्वा पूर्ववत् डप्रत्ययः। तद्धि स्नानपानावगाहनार्थिभिः सेव्यते। "जात विश्वाचो अद्रत विषेण (ऋ॰ सं॰ १, ८, १६, १)"—"केशी विषम् केशी विषम् (ऋ॰ सं॰ ८, ७, २४, १)"—इति च निगमौ॥

(१६) रेतः। 'रि रीङ् स्रवणे' दैवादिक (धा॰)।'स्रुरिभ्या तुट् च (उ॰ ४, १८७)'—इत्यसुन्प्रत्ययो तुडागमश्च गुणः। रीयते स्रवति रेतः। यद्वा, इष्टिलक्षणानामपां देवानां रेतस्त्वाद्रेत उच्यते तथाचोपनिषत्—'देवानां रेतो वर्षम्'—इति। "भुवो रेतः सिञ्चत यथानु हितम् (ऋ॰ सं॰ ५, १, १४, २)"—"समाईगर्भो भुवनस्य रेतः (ऋ॰ सं॰ २,३,२१,१)"—इति निगमौ।

(१७) कशः। 'कश गतौ (भू॰ प॰)' 'कश शब्दे (भू॰ प॰)' उभयोरसुन् (उ॰ ४, १८४)। कशति गच्छति निम्न प्रदेशम्, मेघेभ्यः पतत् शब्दं करोतीति वा कशः। "याभिर्मूर्धानमतिथिग्वं कशो अवम् (ऋ॰ सं॰ १, ७, ३५, ४)"—इति निगमः॥

(१८) अम्बा। 'जनी प्रादुर्भावे (दि० आ०)'। 'अन्येभ्योऽपि दृश्यन्ते (३, २, ७५)'—इति मनिन्, औणादिको वा (उ० ४, १४०)। जायते सृष्टिकाले स्वकारणात्। 'अम्बेरापः (तै० उ०)'—इत्युपनिषत्। जायन्ते यस्मिन् जलचारिणो मत्स्यादयः। निगमोऽन्वेषणीयः॥

(१९) हृबूकम्। ब्रवीतेः शब्दार्थात् (अदा० उ०), भ्रंशतेरधःपतनार्थात् (भू० आ०), उभाभ्यां समुदिताभ्यां वा 'उलूकादयश्च (उ० ४, ४०)'—इति ऊकप्रत्यये निपातनाद्रूपसिद्धिः। 'ऊकप्रत्यये धातुद्वयस्य हृबूभावः,—इति श्रीनिवासः। क्रमेणार्थः—तद्धि विपतत् साध्याकारं शब्दं करोति, भ्रश्यति दिवोऽन्तावरणत्वात्, मेघेभ्यो भ्रश्यति शब्दयतेति "द्रा हृबूकं बृहतः पुरीषम् (ऋ० मं० ७, ७, १८,-२)"—इति निगमः॥

(२०) बुसम्। विपूर्वात् स्यतेः (अदा० प०) 'आतश्चोपसर्गे (३, १, १०६)'—इति कप्रत्यये उपसर्गकारस्योकारो बाहुलकाद् भवति, धातोर्नकारलोपोऽपि बाहुलकादेव। विशेषेण स्यत्यनेनेति बुसम्। तद्धि प्रथमं शोषसाधनम्। अथ गतिर्वा पचाद्यचि (३, १, १३४), पृषोदरादित्वादूहनीयं रूपम्। पूर्ववदर्थः। यद्वा, 'बुस उत्सर्गे (दि०.प०)'। 'गेहे कः (३, १, १४४)'—इति बाहुलकादस्मादपि भवति। बुस्यते उत्सृज्यते मेघैरिति बुसम्। "आविः स्वः कृणुते गूहते बुसम् (ऋ० मं० ७, ७, १८, ४)"—इति निगमः॥

(२१) तुग्रा। तुजतिर्हिंसायाम् (भू० प०)। 'क्विप् च (३, २, ७६)'—इति क्विप्। तुजन्ति हिंसन्ति तम औष्ण्येन अन्नानिति वा तुजो रश्मयः। तद्वान् तुग्रः। रो मत्वर्थीयोऽतिशायने। तुग्र आदित्यः, तत्र भवा तुग्रा। 'भवे छन्दसि (४, ४, ११०)'—इति यत्। 'आदित्याज्जायते वृष्टि-

वृष्टेरन्नं ततः प्रजाः।'—इति मनुः (३ अ० ७६ श्लो०)। यद्वा, तुग्रशब्देन ग्रीष्म उच्यते, अतिशयेनादित्यकिरणवान् हि ग्रीष्म कालः। 'तत्र साधुः (४, ४, ९८)'—इति यत्। तुग्र्या। 'अन्धाकाशयज्ञवरिष्ठेषु तुग्रशब्दः'—इति वृत्तिकारः। तत्र भवे इत्यर्थे 'तुग्राद् घन् (४, ४, ११५)'—इति घन्प्रत्यये प्राप्ते व्यत्ययेन 'भवे छन्दसि (४, ४, ११०)'—इति यत्। 'तुग्र्या आपः'—'तुग्रसुदकम्' उभयमपि दृश्यते। 'अग्ने रापः (तै० ब्रा०)'—इत्यपां कारणत्वेन अग्नेः श्रुतत्वात्, अग्नेर्वै धूमो जायते, धूमादभ्रम्, अभ्राद् वृष्टिः (सु० ब्रा० २, ५)—इति क्रमेण वा, आकाशे वृष्टिलक्षणेनापां विद्यमानत्वात्, यत्र स्थापि 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिः'—इति (मनु. ३ अ० ७६ श्लो०) पारम्पर्येण वृष्टिहेतुत्वात्। सर्वैश्वर्यवत्तया वरिष्ठ इन्द्रो विवक्षितः, वृष्टिप्रदानाच्च, तस्मात् तत्र भवइत्यर्थे योऽर्थः सर्वत्र यथाकथञ्चित् वक्तुं शक्यते। "आवः शर्म वृषभ तुग्र्यासु (ऋ० सं० १, ३, २, ५)"—"तूत यस्तुग्रेर सचा (ऋ० सं० ६, २, ४, ५)"—इति च निगमौ॥

(२२) बुर्बुरम्। 'पॄ पालनपूरणयोः (जु० प०)'। 'गेहे कः (३, १, १४४)'—इति बाहुलकात् कः। 'उदोष्ठ्यपूर्वस्य (७, १, १०२)'। पुरम्।' वपुषः शरीरस्य पूरकं पालकं वा वपुः पुरं सत्। पृषोदरादित्वात् (६, ३, १०९) वकाराकार-लोपेन पकारद्वयस्य बकारादेशो विसर्जनीयस्य रेफादेशेन बुर्बुरम्। बुर्बुरमस्मिन्नस्तीति वा मत्वर्थीयोऽकारः (५, २, १२७), बुर्बुरवत्। निगमोऽन्वेषणीयः॥

(२३) क्षेम। 'क्षि निवासगत्योः (तु० प०)' 'क्षि क्षये (भू० प०)'—इत्यस्माद्वा 'अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदि

क्षिनीभ्यो मन् (उ० १, १३७) बाहुलकादभिधानलक्षणाद्वा। 'क्वचिदकारस्येत्सञ्ज्ञा न भवति'—इति उणादिवृत्तिः। क्षियन्ति निवसन्त्यनेन प्राणिनः, गच्छन्त्यनेन पन्थानमिति वा, उपरिभागेन क्षीयते वा। यद्वा, पूर्वस्माद् धातुद्वयान्म निनि रूपसिद्धिः। 'सुक्षेम'—इति माधवः पठति, निगमदर्शनान्निर्णयः। 'इष्यै त्वा क्षेमाय त्वा (य०)'—इत्यत्र क्षेमशब्द उदकनामापि भवितुमर्हति ॥

(२४) धरुणम्। 'धृञ् धारणे (भू० उ०)'। 'हेतुमति च (३, १, २६)'—इति णिच्। धारेर्णिलुक् क्युन्प्रत्ययः। धारयति जगत् धरुणम्। "पृथा विमृगे धरुणेषु तस्थौ (ऋ० सं० ७, ५, २२, ६)"—"धीरा इच्छेकुर्धरुणेष्वारभम् (ऋ० सं० ७, २, २८, ३)"—इति निगमौ ॥

(२५) सिरा। 'सृ गतौ (भू० प०)' पचाद्यचि (३, १, १३४) टाप् (४, १, ४), सरा, अकारस्येकारो व्यत्ययेन (३, १, ८५)। "वृत्र माशयान सिरासु (ऋ० सं० १, ८, २६, १)"—इति निगमः। 'सरणशीलास्वप्सु'—इति माधवभाष्यम्। 'सुरा'—इति केचित् पठन्ति। 'षुञ् अभिषवे (स्वा० उ०)' 'अभिषव क्लेदनम्'—इति तद्वृत्तिः। 'षु प्रसवे भ्वादिर दादिश्च (प०)। 'सुसूधाग्रधिभ्यः क्रन् (उ० २, २३)'—इति क्रन्प्रत्ययः। सुनोति क्लेदयति भूमिमिति। प्रसौति अनुजानाति सस्याद्युत्पत्तिं स्वसत्तया, सूयते वा परेषां स्वामिना विनियोगाय। यद्वा, 'षुर ऐश्वर्ये' तुदादि० (प०)। सुरति ईश्वरं भवति जगत् कर्तुं समर्थो भवतीत्यर्थः। निगमोऽन्वेषणीय ॥

(२६) अररिन्दानि। 'रा दाने (अदा० प०)'। 'आदृगमहनजन. किकिनौ लिट् च (३, २, १७१)'—इति किन्

त्यय.। लिङ्गद्वावात् द्विवचनादिः। ररिर्दाता। ररिर्यस्य न विद्यते तदररि, अन्यैरदत्तमित्यर्थः। तद्दाति 'आतोऽनुपसर्गे कः (३, २, ३)' अररिदम्। नकार उपजनः अररिन्दम्। अथवा 'कृत्यल्युटो बहुलम् (३, ३, ११३)'—इति कर्मणि किर्भवति। ररि=दत्तम्, न ररि अररि=अदत्तम् पृथिव्यादिभिः, किन्तत्? सुखम्।' अररि ददातीति पूर्ववत्। तदुक्तेन यद्दीयते सुखादिकं तथान्यैः पृथिव्यादिभिः दातुमशक्यत्वाददत्तमित्युच्यते। "अधारयदररिन्दानि सुक्रतुः (ऋ० सं० २, २, ४, ५)"—इति निगमः। अत्र 'अदत्तदानसुदर्शे.', —इति माधवनिर्वचनानुक्रमणी॥

(२७) ध्वस्मन्वत्। 'ध्वसु गतौ च (भू० आ०)'। चकारादधःपतनेऽपि। औणादिको मनिन् भावे (उ० ४, १४०)। बाहुलकादुलोप. (१, २, १)। अथ ध्वंसनं मेघेभ्यः पर्वतादिभ्यो वा अधःपतन निम्नप्रदेशगमनम्। जलाधिकर्तृकं वा गमनमस्यास्तीति मतुप्, 'मनो नुट् च (८, २, १६)'—इति मतुपो नुडागम', नुटोऽसिद्धत्वात् (८, २, १) तस्य च वत्व' भवति (८, २, ९)। 'ध्वस्मन्वत् स्यात् ध्वंसनवत्'—इति' माधवनिर्वचनानुक्रमणी। "सं त्वा ध्वस्मन्वदभ्येतु पाथः (ऋ० सं० ४, ५, १९, २)—इति निगमः। माधवस्तु 'समभ्येतु त्वां मरोवे वर्तमानं ध्वसनक्रियायुक्तमत्र वचन स्तुहवीयं संहसहस्राकम्'—इत्यभाषयत्॥

(२८) जामि। जामेर्गतिकर्मणः (निघ० २, १४) 'वसिवपियजि (उ० ४, १२१)'—इत्यादिना विहित इञ् बाहुलकाद् भवति। जमति गच्छति निम्न' प्रदेशं, गम्यते वा जलार्थिभिः। यद्वा, 'जनी प्रादुर्भावे (दि० आ०)'। अस्मात् 'जनिघसिभ्यामिण् (उ० १२६)'—इति इण्प्रत्ययो बाहुलकान्नकारा-

देशश्च दीर्घः (३, २, १)। जायतेऽस्मात् पृथिव्यादि, जायते वा स्वकारणात् 'अग्नेरापः अद्भ्यः पृथिवीति (तै० उ०)' श्रुतेः। "जामिवत्"—इत्यन्ये पठन्ति। निगमदर्शनान्निर्णयः॥

(२९) आयुधानि। 'युध सम्प्रहारे (दि० आ०)'। 'घञर्थे कविधानम् (३, ३, ५८ वा०)'—इति कः। आयुध्यत्यनेनेत्यायुधम्। यद्वा, 'इगुपधज्ञाप्रीकिरः कः (३, १, १३५)'—इति कर्त्तरि कः। आयुध्यते सम्प्रहरति रक्षांसि। असि आयुधानि। "इन्द्रे सन्तिष्ठ जनयायुधानि (ऋ० सं० ७, ४, ८, २)"—जामि ब्रुवाण आयुधानि वेति (ऋ० सं० ७, ६, ४, २)"—इति च निगमौ॥

(३०) क्षपः। 'क्षप प्रेरणे (चु० प०)'। कथादिष्वपठितोऽपि 'बहुलमेतन्निदर्शनम् (चु० ग० सू०)'—इत्यस्योदाहरणत्वेन धातुवृत्तौ पठ्यते। असुनि णिलोपः। क्षिपयति प्रेरयति नाशयति पिपासाम्। "क्षपो जिन्वन्तः पृषतीभिर्ऋष्टिभिः (ऋ० सं० १, ५, ७, ३)"—इति निगमः॥

(३१) अहिः। मेघनामसु निरुक्तम् (१, १०)। गच्छन्ति निम्नं प्रदेशम्, आभिमुख्येन हन्ति तापम्, अहिंसको वा प्राणिनाम्। "पृथिव्या निशशाना अहिम् (ऋ० सं० १, ५, २८, १)"—इत्यत्र 'भ्रश स्रुतगतौ (भू० प०)', अन्तर्णीतण्यर्थः, निर्गमभूमौ पातयत्युच्यते, अहिम् मेघं हतमित्यर्थः'—इति स्कन्दस्वामिभाष्यम्। उदकं भवितुमर्हति। अन्वेषणीयो निगमः॥

(३२) अक्षरम्। निरुक्तं वाङ्नामसु (१, ११)। व्याप्नोति जगत्, अश्यते भुज्यते वा प्राणिभिः, अनक्ति सेचयति भूमिं वा, न क्षरति क्षीयते कदाचिदपीति वा। "ततः क्षरत्यक्षरम् (ऋ० सं० २, ३, २२, २)"—इति निगमः॥

(३३) स्रोतः। 'स्रु गतौ (भू० प०)'। 'स्रुरीभ्यां तुट् च

(उ० ४, १८७)'—इत्यसुन्। स्रवति निम्नं देशम्। "धन्वन्‌ स्रोतः कृणुते गातुं भूमिम् (ऋ० सं० १, ७, २, ५)"—इति निगमः॥

(३४) तृप्तिः। 'तृप् प्रीणने (दि० प०)'। क्तिन्। यद्वा, 'क्तिच्क्तौ च संज्ञायाम् (३, ३, १७४)'—इति क्तिच्। तृप्यन्ति हि देवतास्तेन तर्पिताः, तृप्यन्ति तेन पीतेन प्राणिन इति वा। तथाच श्रुतिः—'मन्ये भेजानो अमृतस्य तर्हि हिरण्यवर्णा अतृपं यदा वः' (अथ० सं० ३, १३, ६)'। निगमोऽन्वेषणीयः॥

(३५) रसः। रसतिः शब्दार्थे (भ्वा० प०)। पचाद्यच् (३, १, १३४)। रसति हि तस्मेघपर्वतादिभ्य. पतत्। यद्वा, 'रस आस्वादने (चु० प० अ०)'। 'पुंसि संज्ञायां घः (३, ३, ११८)'। रस्यते आस्वाद्यते जिह्वया लिह्यते इति रस.। यद्वा, रसोऽपां गुणः, गुणगुणिनोरभेदोपचारेणाख्यायते, मत्वर्थीयस्य लुग् वा रसवान् रसः। यद्वा, रसतिरर्चतिकर्मा (३, १४), पचाद्यच् (३, १, १, १३४), अर्च्यते देवतात्वात्, अर्च्यतेऽनेन देवता इति वा। "आ त्वा विशन्त्विन्दव. (ऋ० सं० ६, ६, १९, २)"—इति निगमः॥

(३६) उदकम्। 'उदकञ्च (उ० २, ३६)'—इत्युणादिसूत्रेण उदकशब्दो निपात्यते। क्वुन्प्रत्यये खनतेरुत्पूर्वस्य धातुलोपः। उत्खायते तद् वायुना विभज्यमानं कर्म, उत्खनति वा भूमिं स्वेन वेगेन कर्त्री। उत्पूर्वस्य वाञ्छतेर्वाऽय उदकमिति, उदञ्चतीत्युदकम्। "उदानिषुर्महीरिति तस्मादुदकमुच्यते (अथ० सं० ३, १३, ४)"—इति, "समानमेतदुदकम् (ऋ० सं० २, ३, २३, ५)"—इति, "मण्डूका इवोदकात् (ऋ० सं० ८, ८, २४, ५)—इति, "मण्डूका उदकादिव (ऋ०

सं० ८, ८, २४, ५)"—इति च निगमाः ।

(३७) प्रयः । 'प्रीञ् तर्पणे (क्र्या० प०)' । असुन् (उ० ४, १८४) । प्रीयन्तेऽनेन देवताः । यद्वा, प्रपूर्वात् यमतेः (भ्वा० प०) असुनि टिलोपो बाहुलकात् । प्रकर्षेण गच्छन्ति प्रयः । "आपो न द्वीपं दधति प्रयांसि (ऋ० सं० २, ४, ८, ६)"—इति निगमः ।

(३८) सरः । 'सृ गतौ (भ्वा० प०)' । असुन् (उ० ४, १८४) । सरति स्रियते वा सरः । "सत्रा सरांसि द्रियनम् (ऋ० सं० ६, ५, २८, ४)"—इति निगमः ॥

(३९) भेषजम् । 'भिषज् चिकित्सायाम्' कण्ड्वादिः (प०) । पुंसि संज्ञायां घः (३, ३, ११८) । भिषज्यत्यनेन भेषजम्, 'अनन्तावसथेतिह भेषजात्'—इति निर्देशात् साधु । "आपु इद्वा उ भेषजीरापो (ऋ० सं० ८, ७, २५, ६)"—इति श्रुतिः । 'भेष रोग जयति'—इति दुर्गः । यद्वा, भेषजमस्तिन-स्तीति भेषजम् । अर्श आदित्वादच् (५, २, १२७) । तथा "शुक्र मे सोमो यन्नरोदृन्तर्विश्वानि भेषजा (ऋ० सं० १, २, ११, ५)"—इति श्रुतिः । निगमोऽन्वेषणीयः ॥

(४०) सहः । सहिरभिभवार्थः (दि० प०), अभिभवति शत्रुमग्निं वा । यद्वा, सहो बलं (निघ० २, ९), तदस्यास्तीति मत्वर्थीयस्य लुक् (१, ४, १९ वा०) । बलवत् हि बलम् । "मुहुर्दातु पुरुहूत विप्रसो (ऋ० सं० २, २, ३, ३)"—इति निगमः । सकारलोपश्छान्दसः ।

(४१) शवः । 'टु ओ श्वि गतिवृद्ध्योः (भ्वा० प०)' । 'सर्वधातुभ्योऽसुन् (उ० ४, १८८)'—इत्यसुन् । श्वयति गच्छति वर्धते वा वर्षाकाले । शवतिर्वा गतिकर्मणः (निघ० २, १४) असुन् । शवति गच्छति शवः । निगमोऽन्वेषणीयः । आम्र-

वेन स्वीये नामनिघण्टौ 'शव.'—इत्येतन्नापाठि, 'शिवम्'—'शपम्' इत्येते पठिते। द्वितीयमाद्यमशिवास्तु मातृषु प्रतीपशपत्तयो वदन्ति। शिवमिति सनिगमं दृष्टमपि भाषायामपि जलपर्यायत्वात् अत्र तत्पर्यायेण तस्य पाठे प्रयोजनं मन्दम्, शपमित्येतत्त्वत्यन्तापसिद्धम् प्रायः पूर्वाचार्य्यैः समाम्नाये अपठितम्। अस्य च उदकनामत्वेनाप्रसिद्धत्वात्, शवस्य ओजः सहः इत्याभ्यां सह प्रसिद्धपाठोऽत्र दृष्टत्वात्, प्रायोऽक्षरसाम्याच्च लेखकैः प्रायेण शव इति लिखितमिति। शपन्त्यनेनेति शपम्। 'अकर्त्तरि च कारके सञ्ज्ञायाम् (३, ३, १९)'—इति घञ्। एतदुदकमादाय शपन्ति मुनय इति श्रूयते ॥

(४२) यहः। 'यातं प्रातं पिपासितैः', हुतं च यज्ञे देवतात्वात्। अहनि यातेर्ह्वयतेश्च द्विधातुजं रूपम्, पृषोदरादिः (६, ३, १०९)। निगमोऽन्वेषणीयः ॥

(४३) ओजः। 'उब्ज आर्जवे (तु० प०)'। 'उब्जेर्बलोपश्च (उ० ४, १८७)'—इत्यसुन्, बाहुलकादुदकेऽपि भवति। उब्जतेरुत्पत्ते न्यग्भावार्थस्य। उब्जतेर्वा गैकत्तधातोर्वृद्धिकर्मणोऽसुन्प्रत्ययः। उब्जत्यनेनेत्युक्। न्यग्भावयति वा स्ववेगेमानतप्रदेशं, वर्द्धते वा वर्षासु बलवत्ता। निगमोऽन्वेषणीयः ॥

(४४) सुखम्। सुखावहत्वात् सुखम्। 'सुखं कस्मात्? सुहितं खेभ्यः (निरु० ३, १३)'—इति भाष्ये स्कन्दस्वामी। सुष्ठु हितं खेभ्यः। नेयं हितयोगलक्षणा चतुर्थी (१, ४, ४४ वा०), इन्द्रियाणामचैतन्यात् सुखादिभिरसम्बन्धात्, अत एवं हेतौ पञ्चमी (२, ३, २५), इन्द्रियविषयसन्निकर्षस्य सुखहेतुत्वात् उपपद्यते इन्द्रियाणां हेत्वर्थकयथाश्रुतसम्बन्धानुपपत्तेश्च सम्बन्धयोग्यपदार्थान्तराध्याहारः। अतिशयेन हितं पुरुषस्य,

क्षेष्ठः अहेतुकमित्यर्थः। छिद्रं वा पुरुषे आत्मधर्मत्वात् सुखादीनां धर्माधिकरणत्वाच्च धर्मिणाम्। अथवा क्षेष्ठ इति चतुर्थ्यन्त, अयस्केन च आत्मा मनसा संयुज्यते मन इन्द्रियेणेति सम्बन्धिसम्बन्धात् पुरुष एवोच्यते इति यथाश्रुतसम्बन्धः। तथाचोपनिषत्—'यस्त्वं स एव इह प्रविष्ट आनखाग्रेभ्यो यथा क्षुरः'। क्षुराधाने अव्यवहितं खादित्युपलक्ष्य प्राणास्ते च प्राणानां भवतीति प्राणादिशब्देन्द्रियोऽस्तीति दर्शयति—'खं पुन: खनतेः (निरु० ३, ११)' तत्पूर्वस्य उत्खनति विनाशयति, किम्? परब्रह्मणामात्मसुखम्, कथम्? कार्यसुखप्रवृत्तेरधोगमनात् इति सुखम्। निगमोऽन्वेषणीयः॥

'(४५) खनम्। 'खदिः स्रौव.'। 'खद स्थैर्ये' इति स्कन्दस्वामी। माधवपक्षे खदिः शफलीकरणार्थो हिंसार्थश्च। 'खद गतिहिंसनयोः'—इति सुबोधिनीकार.। 'गुधृवीपचिवचियमि[सनि]सदिचदिभ्यस्त्र. (उ० ४, १६२)'। वर्षाव्यतिरिक्तेषु ऋतुषु सूर्यरश्मिभिराहृता आपो मेघेषु घनीभूताः पाषाणवत् स्थिरा भवन्ति, जलाशयं प्राप्य वा, अद्यते भुज्यते वा, अतिपीते खे आदि जनयित्वा प्राणिनो हिनस्ति वा, गच्छति निम्नं गम्यते वा तदर्थिभिः। यद्वा, खत्रशब्दो बलनाम। अर्श आद्यच् (५, २, १२७)। बलवद्धि जलम्। धननाम वा (निघ० २, १०), तद्धेतुत्वात्ताच्छब्द्यम्। क्षतादवग्रहदिकत्तृत्वात् त्रायन्ते इति वा क्षतशब्दात् त्रायतेश्च क्षत्रम्, पृषोदरादि. (६, ३, १०९)। "युवं गो ये्षुं वरुण क्षत्रम् (ऋ० सं० ४, ४, २, ६)"। वृहच्च बल सन्त वेति माधवभाष्यम्। "उत द्यावापृथिवी क्षत्रमुरु (ऋ० सं० ४, ८, ८, ३)"—इत्यत्र च क्षत्रं धनमिति इष्टम्। उभयमप्युदकं भवितुमर्हति॥

(४६) आवयाः। आङ्पूर्वात् 'वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु (अदा० प०)'—इत्यस्मात् 'इणवासिः (उ० ४, २१६)'—इति बाहुलकादासिप्रत्ययः। उपसर्गश्च धात्वर्थानुवर्त्तकः आभिमुख्यार्थो वा, अस्यते वीयते आभिमुख्येन गम्यते इति वा आवयाः। निगमोऽन्वेषणीयः॥

(४७) शुभम्। 'शुभ दीप्तौ (भू० आ०)'। क्विप्प्रत्ययः। शोभते दीप्यते स्वेन तेजसा देवतात्वात्। द्वितीयैकवचनस्य प्रयोगो यथादृष्टम्। "शुभं पृक्षमिषमूर्जं वहन्ता (ऋ० सं० ५, १, १,४)"—"इषं जनाय वहथः शुभस्पती (ऋ० सं० ७, ८, १८, ४)"—"द्रवत्पाणी शुभस्पती (ऋ० सं० १, १, ५, १)"—इति च निगमाः॥

(४८) यादुः। 'या प्रापणे (अदा० प०)'। 'भृमृशीतॄचरित्सरितनिधनिमस्जिभ्य उः (उ० १, ७)'—इति बाहुलकादुप्रत्ययो दुडागमश्च। याति निम्नं प्रदेशं यादुः। 'यादुः स्याद् गमनक्रियम्'—इति माधवः। तदानीमुप्रत्ययो बाहुलकात्। "ददाति मह्यं यादुरी (ऋ० सं० २, १, ११, ६)" इत्यत्र स्कन्दस्वामी—'यादुरित्युदकनाम, री मत्वर्थीयः'—इति॥

(४९) भूतम्। 'भू सत्तायाम् (भू० प०)' निष्ठातकारः कर्त्तरि। पूर्वमेव सत् भूतम् प्रथमदृष्टत्वात्। 'अप एव ससर्जादौ तासु वीजमवासृजत् (१अ० ८श्लो०)'—इति मनुः। अथवा 'भू प्राप्तौ (वा आ०)'—इति धातुः। प्राप्यं पिपासितैः। यद्वा, पञ्चसु पृथिव्यादिषु महाभूतेष्वन्तर्भावात् भूतमित्युच्यते। 'खातान्तरिक्षं निर्मीयन्ते अस्मिन् भूतानि (२, ८)'—इति निरुक्त एवोदाहरणम्। निगमोऽन्वेषणीयः॥

(५०) भुवनम्। 'भू सत्तायाम् (भू० प०)'। 'भूसूधूभ्रस्जिभ्यश्छन्दसि (उ० २, ७१)'—इति क्युन्प्रत्ययः, उवङा-

देशः। भवत्यनेन सर्वे पदार्था इति भुवनम्। "य इमा विश्वा भुवनानि जुह्वत् (ऋ० सं० ८, ३, १६, १)"—"इमा च विश्वा भुवनान्यस्य (ऋ० सं० ३, ३, ३१, ४)"—इति च निगमौ ॥

(५१) भविष्यत्। भवतेरेव। 'लृट् शेषे च (३, ३, १३)' —इति लृट्, 'लृटः सद्वा (३, ३, १४)', 'स्यतासी लृलुटोः (३, १, ३३)' इडागमः (७, २, ३५)। जलं हि भागामिन्यपि काले विद्यते, प्रलयेऽपि जलत्वस्य नाशाभावात्। निगमोऽन्वेषणीय. ॥

(५२) महत्। 'मह पूजायाम्' भूवादिः (प०)' कथादिश्च (चु० प०)। अस्मात् 'वर्त्तमाने पृषद्बृहन्महज्जगच्छतृवच्च (उ० २, ७८)'—इति निपातनम्। महति महयति वा देवता अनेन पुरुषस्येति महत्, मह्यते वा देवतात्वात्। यद्वा, मानेन स्वगतेन परिमाणेन अन्यान् स्वस्मादूनप्रमाणान् पदार्थान् जहाति अतिक्रामति 'दशोत्तराण्यावरणानि सप्त'—इत्यत्र विष्णुपुराणे सर्वमहत्त्वं जलतत्त्वस्योक्तम्। मानशब्दाज्जहातेश्च पृषोदरादित्वाद्रूपसिद्धिः। "महत्त उल्बं स्थविरं तदासीत् (ऋ० सं० ८, १, १०, १)"—इति निगम. ॥

(५३) आपः। एतदुक्तसमानार्थम्। कृत्स्नं ताभिर्हि व्याप्तम्, आप्नोतेः सकर्मकत्वात्। तथाचाथर्वणिका श्रुतिः—आपो अग्रे विश्वमावन् (अथ० सं० ४, २, ६)'—इति। यद्वा, कर्मणि क्विप्, इन्द्रेण आप्ता आपः, तदाप्नोतीन्द्रो वा। 'तदाप्नोदिन्द्रो वो यतीस्तस्मादापो अनु ष्टन (अथ० सं० ३, १३, २)'—इति श्रुति.। "आपो हि ष्ठा मयोभुवः (ऋ० सं० ७, ४, ५, १)"—इति निगमः ॥

(५४) व्योम। निरुक्तमन्तरिक्षनामसु। (३) व्ययति प्राणिनः संवृणोति भूमिमिति वा। निगमोऽन्वेषणीयः॥

(५५) यशः। 'अशू व्याप्तौ (स्वा० आ०)'—'अश भोजने (क्र्या० प०)'। 'अशेर्देवने युट् च (उ० ४, १८६)'—इत्येन-स्माद् बाहुलकादुटकोऽपि भवति। 'अशेर्युट् च'—इत्येव श्रीभोजदेवः। अश्नुते व्याप्नोति जगत्, अश्नाति वा प्राणिभिः। "तिर्यग् बिलश्चमस ऊर्ध्वबुध्नो यस्मिन् यशो निहितं विश्वरूपम्। तदासत ऋषयः सप्त साकं ये अस्य गोपा महतो बभूवुः (अथ० सं० १०, २६, ८)"—इति निगमः॥

(५६) महः। महदित्यनेन समानम्। असुन्प्रत्ययः (उ० ४, १८४)। "स्तुषा जिगाति महिनि (ऋ० सं० ४, ४, २८, १)"—इति निगमः। 'महो अर्णः (ऋ० सं० १, १, ६, २—निरु० ११, २०)'—इत्यत्र 'मह उदकनाम'—इति स्कन्द-स्वामी। "महोभ्यः स्वाहा"—इति च॥

(५७) सर्णीकम्। 'सृ गतौ (भू० प०)'। 'सर्त्तेर्नुम् च (उ० ४, २३)'—इतीकन्प्रत्ययः। अधिकृतं किन्त्वन्तु बाहुल-कात् भवति, गुणः, सरति सर्णीकम्। "सलिलाय त्वा सर्णीकाय त्वा मतीकाय त्वा"—इति निगमः॥

(५८) स्तीकम्। 'स्तृ शब्दोपतापयोः (भू० प०)', स्वर-तिर्गत्यर्थः (निघ० २, १४), अर्चतिकर्मा च (निघ० ३, १४)। 'अलीकादयश्च (उ० ४, २५)'—इतीकन्प्रत्ययान्तेषु स्व-निपातनात्सुगागमः। शब्दं करोति, गच्छति, पूज्यन्ते देवताः, पूज्यते वा स्वयं देवतात्वात् इति स्तीकम्। मोऽन्वेषणीयः॥ "स्तीकम्"—इति केचित् पठन्ति। विशरणगत्यवसादनेषु (भू० तु० प०)'—पूर्ववदीकन् (उ० २५), दकारस्य तकारः। गच्छति अवसीदति ।

अनेनेति वा। "सतीकाय त्वा"—इति पूर्वमुक्तो निगमः। अत्र संप्रत्स्वेऽवग्रहकरणं पदकाराणामभिप्रायस्य वैचित्र्यात् ॥

(५८) सतीनम्। पूर्ववत् सर्वम्, टकारस्य तकारोऽपि निपातनात्। यद्वा, सतो शोभना असौ, सामर्थ्यान्माध्यमिका वाक्, सा इना ईश्वरा अस्य तत् सतीनम्, 'सञ्ज्ञापूरण्योश्च (६, ३, ३८)'—इति पुंवद्भावनिषेधः। "अयो सुतीन कङ्कतः (ऋ० सं० २, ५, १४, १)"—इति निगमः। "सुतीन सत्वा-श्व्यो भरेषु (ऋ० मं० १, ६, ८, १)"—इति च ॥

(६०) गहनम्। 'गाहू विलोडने (भू० आ०)'। 'युच् बहुलम् (उ० २, ७४)'—इति युच्प्रत्ययः, बहुलवचनाद्भ्रस्वत्वम्। अवगाह्यते प्राणिभिः गहनम्। "अम्भः किमासीद् गहनं गभीरम् (ऋ० सं० ८, ७, १७, १)"—इति निगमः। अत्रोभयं गभीरमित्येते निरुक्त्या योजनीये ॥

(६१) गभीरम्। गमेर्धातोः 'गभीरगम्भीरौ (उ० ४, २४)'—इति युगागमः ईरन्प्रत्ययो भकारलोपश्च निपात्यते। गच्छति यस्मिन्नाहृतं वसतीवर्यादिरूपेण। "पथि द्रोणे गभीर आ (ऋ० सं० ६, ४, ५३, १)"—"न तं हन्ति स्रवतो गभीराः (ऋ० सं० ८, ६, ५, ४)"—इति च निगमौ ॥

(६२) गम्भरम्। 'कदरादयश्च (उ० ५, ४२)'—इत्यरप्रत्ययान्तेषु द्रष्टव्यः। निपातनाद् गमेरन् भडागमश्च। पूर्ववदर्थः। यद्वा, 'भृञ् उपादाने (क्र्या० उ०)' पूर्ववदरम्, 'हृग्रहोर्भश्छन्दसि' (सि० कौ० वै० ३अ०)। रेफस्य मकारो बाहुलकात् स चाकारात् परः। उह्यते वसतीवर्यादिर्भिन। "गम्भरेषु प्रतिष्ठाम् (ऋ० सं० ८, ६, २, ४)"—इति निगमः ॥

(६३) ईम्। अव्ययमिदम्। "वि यदर्थ्या अजेगुनाददृ यथा (ऋ० सं० ४, २, १४, ४)"—इति निगमः। बहुषु पाठेषु

"कम्"—इति दृश्यते, तल्लिपिभ्रमतः। अत ईमित्येव पठितव्यम् ॥

(६४) अन्नम्। 'अन प्राणने (अदा॰ प॰)'। 'कृवृजृसिद्रुपन्यनिस्वपिभ्यो नित् (उ॰ ३, ९)'—इति नप्रत्ययः। अन्यते प्राण्यते प्रजाभिः, न हि कदाचिदपि जलेन विना जीवन्ति प्राणिनः 'अस्य शोषादयो दोषा भवन्ति यदलाभतः। न हि तोयाद् विना वृत्तिः स्वस्थस्याप्यातुरस्य च"—इति वाग्भटः। अत्तेर्वा निष्ठातकारः, अन्नाच इति निर्देशात् जग्ध्यादेशाभावः, अद्यते च। अत्रईत्तुल्यार्थः अन्नमित्युच्यते। "हिरण्यदा देदृत्यन्नमस्मे (ऋ॰ सं॰ २, ७, २१, ५)"—इति निगमः ॥

(६५) हविः। 'हु दानादानयोः (जु॰ प॰)'। 'अर्चिशुचिहुसृपिच्छादिच्छर्दिभ्य इसिः (उ॰ २, १०९)'—इति इसिप्रत्ययः। दीयते पिपासितेभ्यः, आदीयते वा जनैरुपभोगाय। अथवा हूयते देवतोद्देशेन, प्रक्षिप्यते वैश्वानरे हविरिदं जुहोमीत्यादिमन्त्रैः। "हविर्धानारो अपा पिपर्ति (ऋ॰ सं॰ २, १, ११, ४)"—"विश्वकर्मन् हविषा वावृधानः (ऋ॰ सं॰ ८, २, १६, ६)"—इति च निगमः ॥

(६६) सद्म। (६७) सदनम्। 'षद्लृ विशरणगत्यवसादनेषु (भू॰ तु॰ प॰)'। पूर्वत्र, 'मनिन् (उ॰ ४, १४०)'—इति मनिन्प्रत्ययः। उत्तरत्र, 'युच् बहुलम् (उ॰ २, ७४)'—इति युच्। विशीर्यते शिलादिषु पातात्, विशीर्यन्तेऽनेन कूलादय इति वा, गच्छति आगच्छति निम्नं, गम्यते वा प्राणिभिः, अवसादयति पिपासायुक्तं वा। 'हविरिद्धि विष्णो मह्नि सद्म देव्यम् (ऋ॰ सं॰ ७, २, ८, ५)"—इति निगमः।

(६८) ऋतम् ॥

(६९) योनिः। 'यु मिश्रणे (अदा० प०)'। 'वहिश्रियुद्रुग्लाहात्वरिभ्यो नित् (उ० ४, ५१)'—इति निप्रत्ययः। युतं मितं सम्पृक्तं सर्वपदार्थैः। यद्वा, वेतेर्वकारस्य उकारः, स च ईकारात्परः यथादेशः, स एव प्रत्ययः। परिवीतं हि जलं वायुना तीरेण वा। यद्वा, योनिः कारणमस्य। 'तृष्टेरन्नं ततः प्रजाः (मनुः ३, ७६)'—इति हि स्मृतिः। "वर्धत् प्रियस्य योनिषु प्रियः सन् (ऋ० सं० ८, ७, ७, ५)"—"त्वचं पृश्न्युपरस्य योनौ (ऋ० सं० १,५, २७, ३)"—इति च निगमौ॥

(७०) ऋतस्य योनिः। यज्ञस्य योनिः, नह्युदकेन विना कश्चिदपि यज्ञ कर्तुं शक्यते, ऋतस्य वागामिनो वर्षजलस्य योनिर्वा,—आदित्यो भौमं रसं रश्मिनादत्ते पुनर्वर्षाकाले वर्षति, तथा—'सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः'—इत्युक्तम्। 'अस्य योनिर्भवति'—इति माधवः। "ऋतस्य योनिमा सद (ऋ० सं० ४, १, १२, ४)"—"ऋतस्य योनावगर्भे सुजातम् (ऋ० सं० १, ५, ८, २)"—इति निगमौ॥

(७१) सत्यम्। सत्सु भवम् 'भवेच्छन्दसि (४, ४, ११०)'—इति यत्। यद्वा, सत्सु साधुः 'तत्र साधुः (४, ४, ९८)'—इति यत्। सतोऽर्हमिति वा 'छन्दसि च (५, १, ६७)'—इति य.। "विद्युदसि विद्यामयात्ञ्जानमृताल्सत्यमुपैति"—"ऋतात् सत्यमुपागात् इति च निगमौ॥

(७२) नीरम्। 'णीञ् प्रापणे (भू० उ०)'। 'स्फायितञ्चिवञ्चिशकि (उ० २, १२)'—इत्यादिना रक्प्रत्ययः। नयति प्रापयति शुद्धिं नीयते वा शुद्धेण स्वाभिमतकार्यसम्पादनाय। निगमोऽन्वेषणीयः॥

(७३) रयिः। 'रीङ् गतौ। 'अच इः (उ० ४, १३४)'—इति इप्रत्ययः, गुणः। रीयते गच्छति रयिः। यद्वा, रातेः (अदा०

प०) इप्रत्यये बाहुलकात् युगागमो धातोर्ह्रस्वश्च। दीयते पिपासितेभ्यः। निगमोऽन्वेषणीयः ॥

(७४) सत्। 'अस भुवि (अदा० प०)'। लटः शतरि 'श्नसोरल्लोपः (६, ४, १११)' सत्। सर्वदा विद्यमानं प्रलयेऽपि नाशाभावात् 'सदसि भूयाः'—इति निगमः ॥

(७५) पूर्णम्। 'पॄ पालनपूरणयोः (जु० क्र्या० प०)'। निष्ठातकारः। 'उदोष्ठ्यपूर्वस्य (७, १, १०२)' 'हलि च (८, २, ७७),' 'रदाभ्याम् (८, २, ४२)'—इति निष्ठानत्वम्, 'रषाभ्यां नो णः (८, ४, १)'—इति णत्वम्, पूर्णम्। रचितं सेत्वादिना, तदर्थिभिः पूरितं वा तटाकादिषु। यद्वा, 'पूरी आप्यायने' दिवादिचुरादिषु। 'वादान्तशान्तपूर्णदस्त (७, २, २७)'—इत्यादिना निपातितम् उपभोगयोग्यं आप्यायितम्। "पर्णं पर्णं ने चिच्यते (अथ० सं० १०, ८, २८)"—इति निगमः ॥

(७६) सर्वम्। 'सृ गतौ (भ्वा० प०)'। 'सर्वनिघृष्वरिष्वलष्वशिवपद्वप्रह्वेष्वा अतन्त्रे (उ० १, १५१)'—इति निपातितम्। अतन्त्रे अकर्त्तरीत्यर्थः। सृतमनेन। यद्वा, बाहुलकात् कर्त्तरि भवति, सर्वम्। उभयत्रापि पचाद्यच् (३, १, १३४)। छिनत्ति पिपासामुष्णं वा। 'सर्वमसि सर्वे मे भूयाः'—इति निगमः ॥

(७७) अक्षितम्। 'क्षि क्षये (भ्वा० प०)'। भावे निष्ठातकारः। क्षितं क्षयः, स यस्य न विद्यते, तदक्षितम्। सर्वदा सर्वैरुपभुज्यमानमपि अमृतत्वया उपर्युपरि वर्षणादा क्षयरहितमित्यर्थः। क्षियः 'निष्ठायामण्यदर्थे। वाक्रोशदैन्ययोः (६, ४, ६०—६१)'—इति विहितो दीर्घः, अत्र च भावो ण्यदर्थः, तस्मात् स न भवति, दीर्घाभावात् 'क्षियोऽदीर्घात् (८, २, ४६)'—इति निष्ठानत्वमपि न भवति।

अर्चन्ति (अथ० सं० ४, २७, २)"—"समानमर्थमर्चितम् (ऋ० सं० २, १, १८, ५)"—"अर्चितमल्वे जुहोमि स्वाहा"—इति च निगमाः ॥

(७८) बर्हिः। निगमोऽन्वेयः। बृंहेर्नलोपश्च (उ० २, १०२)'—इत्यादिना पूर्ववत् साध्यम् ॥

(७९) नाम। 'नमतेः (भू० प०), 'मनिन् (उ० ४, १४०)' —इति मनिन्प्रत्यये धातोर्मलोपो दीर्घश्च निपात्यते। नम्यते पुरुषैर्देवतात्वात्। णिजन्ते वा निपातनम्। नमयति नदीतीरनिकटवर्त्तिनो वेतसादीन्। अथवा 'अम गत्यादिषु' भूवादिः 'अम रोगे' चुरादि, नञ्पूर्वः, अच्चानिपातनं पूर्ववत्। न अमन्ति गच्छन्त्यनेन। न हि स्नानपानोपयोगिजले विद्यमाने प्राणिनोऽन्यत्र गच्छन्ति। तथाहि—ग्रोष्मियजलनदीप्रभृतिषु विद्यमानेष्वेव वासो विधत्ते श्रुतिः। न आमयत्यनेन रोगी न भवत्यनेनेत्यर्थः। 'आपो अमीवचातनीः (ऋ० सं० ८, ७, २५, ६)—इति श्रुतिः। "नामानि युक्ते अधि येषु वर्त्तते (ऋ० स० ७, २, ११, १)"—"दधाना नाम यज्ञि यम् (ऋ० स० १, १, ११, ४)"—इति च निगमौ।

(८०) सर्पिः। 'सृप्लृ गतौ (भू० प०)'। 'अर्चिशुचिहुसृपिच्छादिच्छर्दिभ्य इसिः (उ० २, १०१)'—इति इसिप्रत्ययः। सर्पति द्रवद्रव्यत्वात्। निगमोऽन्वेषणीयः ॥

(८१) अपः। 'आप्लृ व्याप्तौ (स्वा० उ०)'। आपः कर्माख्यायां ह्रस्वो नुट् च वा (उ० ४, २०२)'—इत्यसुन्प्रत्ययो बाहुलकात् जलेऽपि भवति, अपः। आप इत्यनेन समानार्थम्। "बृहतीनां गर्भो अपसामुपस्थात् (ऋ० सं० १, ७, १, ४)"—"जामीनामग्निरपसि स्वसॄणाम् (ऋ० सं० २, ८, १४, १)"—इति च निगमौ ॥

(८२) पवित्रम्। 'पूञ् पवने (क्रा० उ०)'। 'पुवः संज्ञायाम् (३, २, १८५)'—इति करणे इत्रप्रत्ययः। पुनात्यनेनात्मानं स्नातः। अथवा 'कर्त्तरि चर्षिदेवतयोः (३, २, १८६)'—इत्यपां देवतात्वात् कर्त्तरि इत्रप्रत्ययः। पुनाति पापकृतः। तथाच मनुः—'ज्ञानं तपोऽग्निराहारो मृन्मनो वार्युपाञ्जनम्। वायुः कर्माकंकालौ च शुद्धेः कर्त्तॄणि देहिनाम् (५म० १०५ श्लो०)'—इति। "घृतपवित्राः सवन्तु मदन्तीः (ऋ० सं० ५, ४, १४, ३)"—इति निगमः॥

(८३) अमृतम्। नञ्पूर्वात् म्रियतेर्धातोः 'तनिमृङ्भ्यां किच्च (उ० ३, ८५)'—इति तन्प्रत्यय। न म्रियन्ते हि प्राणिनोऽनेन पीतेन। अथवाऽत्यन्तस्वादुरसत्वादमृतमित्युच्यते, तथा 'अमृता आपः'—इति श्रुतिः। "यत्रा सुपर्णा अमृतस्य भागम् (ऋ० सं० २, ३, १८, १)"—इति निगमः॥

(८४) इन्दु। 'त्रि इन्धी दीप्तौ (रु० आ०)'। अस्मात् 'उन्देरिच्चादेः (उ० १, १२)'—इति विधीयमान उप्रत्ययो बाहुलकाद् भवति, धकारस्य दकारश्च। इन्धे दीप्यते स्वेन तेजसा देवतात्वात्। यद्वा, 'उन्दी क्लेदने (रु० प०)'। 'उन्देरिच्चादेः (उ० १, १२)'—इत्युप्रत्ययः आदेरिदादेशश्च उनत्ति भूमिमिन्दुः। यद्वा, 'इदि परमैश्वर्ये (भू० प०)'। अस्मादुप्रत्ययः। परमैश्वर हि जलं देवतात्वात्, प्राणिनां प्राणनस्य जीवनस्य च तदायत्तत्वाच्च। निगमोऽन्वेषणीयः॥

(८५) हेम। हिरण्यनामसु व्याख्यातम्। (२) हिनोति गच्छति निम्नं प्रदेशं, गम्यते वा तदर्थिभि, वर्द्धते वा वर्षासु। निगमोऽन्वेषणीयः॥

(८६) स्व'। सुपूर्वादर्त्तेरन्तर्भावितण्यर्थात् 'अन्येभ्योऽपि दृश्यन्ते (३, २, ७५)'—इति विच्, गुणः, 'स्वरादिनिपातमव्य-

यम् (१, १, ३०), सुपो लुक्, रेफस्य विसर्जनीयः। घना-द्यस्यादिजनितं क्लेशं सुष्ठु शोभनं गमयति नाशयति, स्वः। यद्वा, केवलादेव स्वार्थे णिच्, 'अपिशब्दः सर्वोपाधिव्यभिचारार्थः'—इत्युक्तेरिष्टार्थसिद्धिः। अरणं गमनं दोषरहितत्वेन शोभनं यस्य, सुष्ठु गच्छति निम्नं प्रदेशमिति वा, सुष्ठु प्राणिभिर्गम्यते इति वा, स्वः। अकारान्तमप्यस्ति। सुपूर्वादृमतेव बाहुलकाद् भवति। "प्राविः स्वः कृणुते गूहते-बुसं (ऋ० सं० ७, ७, १८, ४)"—"स्वर्: सिंधामवयिरो गविष्ठिषु (ऋ० सं० ७, २, १, २)"—इति च रेफान्तस्य निगमौ। "भ्राजस्वासु वंसगः (ऋ० सं० ८, ८, २, ३)"—इत्यकारान्तस्य। समाम्नायपाठः उभयत्र समानः॥

(८७) सर्गाः। 'सृज विसर्गे (तु० प०)'। कर्मणि घञ्। सृज्यते मेघैर्विसृज्यत इति सर्गाः, जलं सर्गाः। यद्वा, सर्गो वेगः, 'अर्शआदित्वादच् (५,२,१२७)'। वेगवन्ति हि जलानि। "सर्गासो वृताईव (ऋ० सं० ७, ७, ११, ४)"—इति निगमः॥

(८८) शम्बरम्। सम्पूर्वाद् वृणोतेः 'ग्रहवृदृनिश्चिगमश्च (३, ३, ५८)'—इत्यप्। संव्रियते मेघैः। यद्वा, पचाद्यच् (३, १, १३४), वृणोति हि भूमिं संवरम्। पृषोदरादित्वात् (६, ३, १०९) शम्बरम्। यद्वा, शम्बो वज्रः निरुक्तो मेघनामसु (१०)। तद्दानपीन्द्रः शम्बः, मत्वर्थीयस्य लुक्। 'रा दाने (अदा० प०)' शम्बेनेन्द्रेण दीयते शम्बरः। 'घञर्थे कविधानम् (३, ३, ५८वा०)'—इत्यस्योपलक्षणार्थत्वात् कः। यद्वा, शम्ब तदरश्च शम्बरः। शमनं च रोगाणामुत्कर्षश्च सर्वपदार्थेषु इत्यर्थः। 'शम्बरं सम्बरं अलम्'—इति माधवः। "श्रुतिर्विग्वायु शम्बरं गिरेरुग्रो अवाभरत् (ऋ० सं० २, १, १९, २)"—इति निगमः॥

(८९) अभ्वम्। आङ्पूर्वाद् भवतेः क इत्येव बाहुलकाद् भवति, उपसर्गस्यलश्च। 'छन्दस्युभयथा (६, ४, ८६)'—इति सुपि भूसुधियोर्विधीयमानो यणादेशो व्यत्ययेन कप्रत्ययेऽपि भवति। आ समन्ताद् भवति विद्यते अभ्वम्। 'अभ्वमा भवति'—इति माधव.। "सनेम्यभ्वं मरुतो जुनन्ति (ऋ० सं० २, ४, ८, ३)"—इति निगमः॥

(९०) वपुः। 'टु वप बीजतन्तुसन्ताने (भू० उ०)'। 'अर्तिपृवपियजितनिधनितपिभ्यो नित् (उ० २, ११०)'—इत्य,सिप्रत्ययः। उतेऽनेन बीजम्, बीजवपने हि जल साधकतम भवति। "चरित्रुष्ट चिर्वपुषामिदेकम् (ऋ० सं० १, ५, ७, ४)"—इति निगमः॥

(९१) अम्बु। अन्तरिचनाम्नोऽम्बरशब्दस्य निर्वचने विस्तरेणोक्तम्। (१) निगमोऽन्वेषणीयः॥

(९२) तोयम्। तवतेर्वृद्धिकर्मण. (निरु० ९, २५) 'अघ्न्यादयश्च (उ० ४, १०८)'—इति यत्प्रत्ययौ निपातितौ द्रष्टव्यः। वर्द्धते वर्षासु। 'तुदति तोयम्'—इति चीरस्वामी। तुदतेः पूर्ववत् यत्प्रत्यये निपातनाद् दकारलोपो गुणः। यद्दा, तुदिः सौत्र आवरणार्थः। "तोयेन जीवन्न. ससर्ज भूम्याम्"—इति निगमः॥

(९३) तूयम्। पूर्ववन्निपातनाद्रूपसिद्धिः। उकारस्य दीर्घः (६, २, १३१)। निगमोऽन्वेषणीय.॥

(९४) कपीटम्। 'कृपू सामर्थ्ये (भू० आ०)'। 'कृतकपिभ्यः कीटन् (उ० ४, १८०)'—इति कीटन्प्रत्ययः। 'कृपो रो लः (८, २, १८)'—इत्यत्र, काशिकावृत्ति—'कृपणकृपीटकर्पूरादयोऽपि कृपेरेव द्रष्टव्य.'। 'उणादयो बहुलम् (३, ३, १)'—इति च कृपेरेव बाहुलकाल्लाभावः। भाष्ये तु—

'क्षपणादीनां प्रतिषेधो वक्तव्यः (८, २, १८ भा०)'—इति लत्वाभावः। क्षप्यते तापनिवारणाय। "यत्रा क्षपीदृमसु तद्दहन्ति (ऋ० सं० ७, ७, २१, २)"—इति निगमः ॥

(९५) शुक्रम्। 'शुच दीप्तौ (निघ० १, १७)'। अस्मात् 'ऋज्रेन्द्राग्रवज्रविप्र (उ० २, २८)'—इत्यादिना ककारान्तादेशो रप्रत्ययो गुणाभावश्च निपात्यते। शोचते शुक्रः। यद्वा, शोचते ज्वलतिकर्मणः (निघ० १, १७) सम्पदादित्वात् (३, ३, ९४ वा०) क्विप्। शुचि, तदस्य, रो मत्वर्थीयः। दीप्तमित्यर्थः। शुक्र तेजःशब्दो वा, रेतःपर्यायत्वात् 'देवानां मे रेतो वर्षम्'—इति श्रुतेः उदकनामत्वमपि बोद्धव्यम्। "शुक्रास्ते शुक्रमायुनाम्"—इति निगमः ॥

(९६) तेजः। 'तिज पालने' भ्वादिः परस्मैपदी। असुन् (उ० ४, १८४)। तेजयति पालयति प्राणिनः पिपासादिनिवारणात्। यद्वा, 'तिज निशाने (भ्वा० आ०)' असुन्। अग्निजत्वादपां कार्य्यकारणयोरभेदोपचारात् तेज इत्युक्तिः। निगमोऽन्वेषणीयः ॥

(९७) स्वधा। स्वशब्द उपपदे 'डु धाञ् दानधारणयोः (जु० ३०)'—इत्यस्मात् 'आतोऽनुपसर्गे कः (३, २, ३)'। स्वमात्मनं सर्वान्तर्यामिणं भगवन्तं नारायणं धारयति 'आपो नारा इति प्रोक्ता आपो वै नरसूनवः। अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः। (मनुः १ अ० १० श्लो०)'—इति। स्व धनं ददातीति वा, धनस्योत्पत्तिहेतुत्वात्। निगमोऽन्वेषणीयः ॥

(९८) वारि। वृणोतेः इण्प्रत्ययः। वार्य्यते तत् सेव्यादिभिः पुरुषैः। वाजसनेये सौत्रामणीप्रैषे—"देवं बर्हिर्वारितीनाम् (य० वा० सं० २१, ५७)"—इति निगमः। अत्र भाष्यकृदुवटः—'वारितीनामुदकवतीनां वारिभवानां वा ओष-

शीनां सम्बन्धिनि अध्वरे स्तोर्यम्'—इत्यादि ॥

(९९) जलम्। 'जल घातने (भू॰ प॰)' 'घातनं तैक्ष्ण्यम्' —इति वृत्तिः। जलति शीतं भवति। यद्वा, जायत इति जः। 'अन्येष्वपि दृश्यते (३, २, १०१)'—इति डो निरुपपदा-दपि जनेर्भवति। जैः जातैः प्राणिभिः लायते आदीयते इति जलम्। 'ला आदाने (अदा॰ प॰)'। निगमोऽन्वेषणीयः॥

(१००) जलाषम्। जैः जातैः लष्यते वाञ्छ्यते (भू॰ उ॰) इति जलाषम्। जशब्दे उपपदे लषेः कर्मणि घञ्। 'जलाषं जलपितं जातैः'—इति माधवः। यद्वा, जलाषमिति सुख-नाम, सुखहेतुत्वादपां तद्धेतौ ताच्छब्द्यम्। "कुदं जलाषभेष-जम् (ऋ॰ सं॰ १, ३, २६, ४)"—इति निगमः। 'जलाषमुद-कनाम वा'—इति माधवोऽभाषयत्॥

(१०१) इदम्। 'इदि परमैश्वर्ये (भू॰ प॰)' इतित्वा-नुम्। 'इन्देः कमिर्नलोपश्च (उ॰ ४, १५२)'—इति कमि-प्रत्ययः। देवत्वादपां परमैश्वर्यं विद्यते। 'इणो दमुग्'— इति श्रीभोजदेवः, ईयते निम्नं प्रदेशं गम्यते वा। यद्वा, इन्धेः कमिन् बाहुलकान्नलोपो धकारस्य दकारश्च। इन्धे दीप्यते इदम्। "सधुरा या इदं ग्रयु (ऋ॰ सं॰ २, ५, २६, ५)"—"ता जिह्वया सदमेदं सुमेधाः (ऋ॰ सं॰ ५, १, १०, ३)"—"कृपामिभानो घर्णीदिदस्तः (ऋ॰ सं॰ ४, २, १९, ३)"—इति च निगमाः॥

इत्येकशतमुदकनामानि (१०१) ॥१२॥

अवनयः(१)। यव्ह्याः(२)। खाः(३)। सीराः (४)। स्रोत्याः (५)। एन्यः (६)। धुनयः (७)। रुजानाः (८)। वक्षणाः (९)। खादोअर्णाः

(१०)। रोधचक्राः(११)। हरितः(१२)। सरितः (१३)। अग्रुवः(१४)। नभन्वः(१५)। वध्वः(१६)। हिरण्यवर्णाः(१७)। रोहितः(१८)। सस्रुतः (१९)। अर्णाः(२०)। सिन्धवः(२१)। कुल्याः (२२)। वर्यः(२३)। उर्व्यः(२४)। इरावत्यः(२५)। पार्वत्यः (२६)। स्रवन्त्यः (२७)। ऊर्जस्वत्यः (२८)। पयस्वत्यः(२९)। सरस्वत्यः(३०)। तरस्वत्यः(३१)। हरस्वत्यः(३२)। रोधस्वत्यः(३३)। भास्वत्यः(३४)। अजिराः(३५)। मातरः(३६)। नद्यः(३७)। इति सप्तत्रिंशन्नदीनामानि ॥१३॥

(१) अवनयः। पृथ्वीनामसु व्याख्यातः। (१) अवन्ति जगत् स्वोदकेन, अव्यन्ते प्राणिभिस्तीरादिनिर्माणेन। "आसिञ्चन्तीरवनयः समुद्रम् (ऋ० सं० ४,४, २१, १)"—"गा न व्राणा अवनीरमुञ्चत् (ऋ० सं० १, ४, २८, ५)"—इति च निगमौ। निगमेषु बहुवचनान्तत्वेन प्रायशः श्रवणात् सर्वत्र बहुवचनान्तत्वम् ॥

(२) यह्वः। 'या प्रापणे (अदा० प०)'। 'शेवयह्वजिह्माग्रीवाप्वामीवा (उ० १, १५२)'—इति निपातनात् वप्रत्ययो धातोर्ह्रस्वत्वं हुगागमश्च। बाहुलकादापः स्थाने ङीप् गौरादित्वाद् द्रष्टव्यम्। याति तांस्तान् प्रदेशान् प्राप्यन्ते वा प्राणिभिः। यद्वा, 'यह्वः'—इति महन्नाम (निघ० ३, ३), पूर्ववत् ङीप्। यह्वः महत्यो नद्यः। छिपातुजं वा इदं नाम,—यातेर्ह्वन, पृषोदरादिः (६, ३, १०९)। यातास्व

नि—१०

प्राणिभिः कृताश्च यत्रेष्वित्यर्थः। "स्वयमत्कैः परिदीयन्ति युद्धैः (ऋ० सं० २, ७, २४, ४)"—"अवर्द्धयन्त्सुभगं सप्त यह्वीः (ऋ० सं० २, ८, १३, ४)"—इति च निगमौ॥

केषुचित् कोशेषु "यव्याः"—इतीदं नाम दृष्टम्। 'यु मिश्रणे (अदा० प०)' पृथग्भावोऽप्यस्यार्थः—इति नैगमकाण्डे 'वियुते (निरु० ४, २१)' इत्यस्य निर्वचने स्कन्दस्वामिना प्रतिपादितः। 'यु मिश्रणे'—इति अथ पठ्यते, प्रयुज्यते च— 'जनयत्यै त्वा संयौमि'—इति, तथापि पृथग्भावेऽपि वर्त्तते। न चायं वेरुपसर्गस्यार्थः, केवलस्यापि दर्शनात्—'युतं धनमस्य' 'युतं भोजनमस्य' 'युतोऽयम्'—इति पृथग्भूत इति गम्यते'—इति। अस्मात् 'अचयुवयिरथिलपित्तपिचमश्च (३, १, १२६)'—इति ण्यति प्राप्ते 'कृत्यल्युटो बहुलम् (३, ३, ११३)'—इति 'अचो यत् (३, १, ९७)' गुणे, 'वान्तो यिप्रत्यये (६, १, ७९)' वर्षासु मेघैरुदकेन मिश्रणीयाः, अन्येषु सूर्य-रश्मिभिराकृष्टेन पृथग्भवन्तो वा। अथवा 'युञ् बन्धने (क्र्या० उ०)' अस्मात् अघ्न्यादित्वात् (उ० ४, १०८) यक् द्रष्टव्य। बध्यते आसु सेतुरिति, यव्याः। यद्वा, यवेभ्यो धान्यविशेषेभ्यो हिता. 'खलयवमाषतिलवृषब्रह्मणश्च (५, १, ७)'—इति यत्। नदीजलेनापि वर्द्धन्ते यव्याः। "वावॄंत्ता गव्याभिः (ऋ० सं० ६, ७, २, २)"—इति निगमः। 'ऊदमिव कुल्याभिः'—इति माधवभाष्यम्। अनयोर्युक्त रञ्जन्तु सूरयः॥

(१) खाः। 'खन अवदारणे (भू० उ०)' 'अन्येष्वपि दृश्यते (३, २, १०१)'—इत्यत्र 'अपिशब्दः सर्वोपाधिव्यभिचारार्थः (३, २, १०१ भा०)'—इत्युक्तेर्निरुपपदादपि जनिव्यतिरिक्ताद‍पि खनेर्डः प्रत्ययः, टाप्। इतरखननादिन्द्रेण खाताः।

तथा च श्रुतिः—'अपां बिलमपिहितं यदासीद् वृत्रं जघन्वाँ अप तद्ववार (ऋ० सं० १, २, ३८, १)'—इति, 'इन्द्रो अस्मा अरदद् वज्रबाहुः (ऋ० सं० ३, २, १३, १)'—इति च नदीवाक्यम्। यद्वा, खनन्ति भूमिं वेगेन वहन्त्यः। अथवा। 'खै दाने'। 'घञर्थे कविधानम् (३, ३, ५८)'—इत्यस्योपलक्षणार्थत्वात् कः, टाप्। 'खै स्थैर्ये हिंसायाञ्च (भू० प०)'—इति वा। खायन्ति स्थिरा भवन्ति हवेण वहा, हिंस्यन्ते वा तेन, खाः। "सदायस्खासुर्पु स्रजा गृणानः (ऋ० सं० ४, ७, ८, ४)"—"ऋध्यामं ते वरुण खामृतस्य (ऋ० सं० २, ७, ८, ५)"—इति च निगमौ॥

(४) सीराः। 'षिञ् बन्धने' भौवादिकः क्रैयादिकश्च। 'शुसिचिमीनां दीर्घश्च (उ० २, २४)'—इति रक्प्रत्ययः। सीयन्ते बध्यन्ते आसु सेत्वादिभिः शिलादिभिरवसारा वा। 'सरणात् सीरः'—इति सर्त्तेर्धातोः 'कृपॄवृकटिपटिशौटिभ्य ईरन् (उ०४, २९)'—इति बाहुलकाद् भवति टिलोपश्च। 'सीराशब्दो नदीवचनान्तोदात्तः, हलवचन आद्युदात्तः'—इति माधवः। "द्वितिर्त्र्णः पृथिव्यां सीरा अधि (ऋ० सं० ८, १, ८, ४)"—"स्रोता इन्द्रः सर्वितये पृथिव्या (ऋ० सं० ३, ६, २, ३)"—इति च निगमः॥ "सीरा युञ्जन्ति कवयः (ऋ० सं० ८, ५, १८, ४)"—इति हलवचनः॥

(५) स्रोत्याः। स्रोतसि भवाः। 'स्रोतसो विभाषाड्ड्यौ (४, ४, ११३)'—इति ड्यप्रत्ययः। स्रोतोऽनुसरणाद्धि नद्यो भवन्ति। "नवति स्रोत्या नवं स्रवन्तो (ऋ० सं० ८, ५, २५, ३)"—इति निगमः॥

(६) एन्यः। 'इण गतौ (अदा० प०)'। 'वीज्याज्वरिभ्यो निः (उ० ४, ४८)'—इति बाहुलकान्निप्रत्ययः। 'कृदिका-

वात् (४, १, ४५ वा०)'—इति ङीप्। यन्ति एन्यः गमनस्वभावा हि नद्यः गम्यन्ते वा प्राणिभिः। "वि यद् वर्त्तन्त एन्यः (ऋ० सं० ४, ३, १२, २)"—इति निगमः। एनीशब्दो नदीवचनोऽन्तोदात्तः अन्यत्राद्युदात्तः इति माधवः। "एनी न एते हंहतो अभिश्रियो (ऋ० सं० २, २, १२, ६)"—इति अस्योदाहरणम्॥

(७) धुनयः। 'धूञ् कम्पने' भौवादिः। बहुलात्तुक्तः 'घृणिपृश्निपार्ष्णिचूर्णिभूर्णि (उ० ४, ५२)'—इत्युक्तेर्निप्रत्ययः किच्च। धुन्वन्ति कम्पयन्ति तीरवृक्षादीनि, कम्पन्ते वा स्वयं गमनशीलत्वात्। "द्विबर्हिषो धुनयो यन्त्यर्थम् (ऋ० सं० २, ७, १२, २)"—इति निगमः॥

(८) रुजानाः। 'रुजो भङ्गे' तुदादिः परस्मैपदी। व्यत्ययेन शानच्, अत्र च प्रथमासमानाधिकरणे शानच् भवति, मुगागमस्तु न क्रियते आगमानित्यत्वेन व्यत्ययेन वा। रुजन्ति कूलानि। "सं रुजानाः पिपिष इन्द्रशत्रुः (ऋ० सं० १, २, ३७, १)"—इति निगमः।

(९)। वक्षणाः। 'वक्ष रोषे (भू० प०)'। 'क्रुधमण्डार्थेभ्यश्च'—इति युच्। वक्षन्ति क्रुध्यन्तीव हि ताः वर्षासमये वेगेन गच्छन्त्यः। चित्स्वरं बाधित्वा व्यत्ययेन प्रत्ययस्वरः। यद्वा, 'वह प्रापणे (भू० उ०)'। वहाद् 'युच् बहुलम् (उ० २, ७४)'—इति युचि सुगागमो बाहुलकाद् भवति। स्वयं प्रवहन्ति हि ताः। 'वक्षतिः प्राप्तिकर्मणः स्यात्'—इति माधवः। युच्। प्राप्यन्ते हि ताः प्राणिभिः प्राप्नुवन्ति वा समुद्रं सिन्धुं वा। "प्र वक्षणा अभिनत् पर्वतानाम् (ऋ० सं० १, २, ३६, १)"—"अद्रिं ज्योतिर्षि हितं वक्षणासु (ऋ० सं ३, २, ३, ४)"—इति निगमौ॥

(१०) स्वादोअर्णाः । 'स्वाद भक्षणे (भू० आ०)' । कर्त्तर्यसुन् (उ० ४, १८४) अर्णशब्दोऽकारान्तोऽपि निरुक्त उदकनामसु (१२) । स्वादः, भक्ष्यमाणः । भक्षणेन चात्र बाधनं लक्ष्यते, तेन कूलं बाधमानोऽर्णो जलं यासामिति स्वादोअर्णाः, वेगवज्जला इत्यर्थः । 'प्रकृत्यान्तः पादमव्यपरे (६, १, ११५)' । तथा च माधवः—"धन्वर्णसो नद्यः॒ः स्वादो॑अर्णाः (ऋ० सं० ४, २, २६, २)"—इत्यत्र 'धन्वर्णसस्तद्वज्जलाः । स्वादोअर्णा जलान्विताः । स्वादो वेगवज्जलं यासां तास्तथोक्ताः भक्षितकूलोदकाः'—इति । "धन्वर्णसः (ऋ० सं० ४, २, २६, २)"—इत्ययं निगमः । अत्रार्णशब्दो विशेषणम्, अन्यो वा निगमोऽन्वेषणीयः ॥

(११) रोधचक्राः । 'रुधिर् आवरणे (रु० प०)' 'भावे (३३, १८)' घञ् । 'डु कृञ् करणे (तना० उ०)' 'घञर्थे कविधानम् (३, ३, ५८वा०)—इति कः । 'कृञादीनां के द्वे भवतः'—इति द्वित्वम् । चक्रम् करणम्, रोधः, रोधस्य निरोधस्य चक्रं करणं कृतिरासां विद्यते इति रोधचक्राः । नद्यो ह्यत्र प्राणिनां स्वैरसञ्चरणनिरोधकारिण्यः । यद्वा, रोधः तीरं, तस्य करणं निर्माणमासां विद्यते तीरवत्यो हि नद्यः । सकारलोपश्छान्दसः । यद्वा, रुधेः कारणे घञि (३, ३, १९) रुध्यतेऽनेन जलप्रवाह इति रोधः शब्दः करणं निर्माणमासां विद्यते । "समुद्रं न स्रवतो रोधचक्राः (ऋ० सं० २, ५, १३, २)"—इति निगमः ॥

(१२) हरितः । 'हृञ् हरणे' भूवादिः (उ०), 'हृ प्रसह्यकरणे' जुहोत्यादिः । 'हृसृरुहियुषिभ्य इतिः (उ० १, ९४)' । हरन्ति हृचगुल्मादीनि वेगेन, प्रसह्य हरन्ति वा । निगमोऽन्वेषणीयः ॥

(१३) सरितः। 'सृ गतौ (भू० प०)'। पूर्वेण सूत्रेण (१, ८४) इतिप्रत्ययः। एन्य इत्यनेन समानार्थः। "सुस्वक स्रवन्ति सरितो न धेना (ऋ० सं० ३, ८, ११, १)"—"यो समुद्रान्तसरितः पिपर्त्ति (ऋ० सं० ५, ५, १०, २)"—इति निगमौ॥

(१४) धमुवः। 'धवि गतौ (भू० आ०)'। 'जम्वादयश्च (उ० ४, १००)'—इति कुप्रत्ययान्तेषु निपातितेषु शब्दः, निपातनाच्चलोपः, 'तन्वादीनां छन्दसि बहुलम् (६, ४, ८६ वा०)'—इत्युवङ्। गच्छन्ति तांस्तान् प्रदेशान्। 'धमुवो गमनात् नद्यः'—इति माधव.। "समुद्रो समनेष्वज्रन् (ऋ० सं० ५, २, १, ५)"—इति निगमः॥

(१५) नभन्वः। 'णभ तुभ हिंसायाम्' भ्वादिरात्मनेपदी दिवादिः क्र्यादिश्च परस्मैपदी। 'दाभाभ्यां नुः (उ० ३ ३१)'—इति बाहुलकात् नुप्रत्यये मकार उपजनः। नभन्ते, नभ्यन्ति, नभ्नन्ति इति नभन्वः। 'जसादिषु छन्दसि वा वचन प्राङ् णौ चङ्युपधाया.'—इति विकल्पितत्वात् 'जसि च (७, ३, १०९)'—इति गुणाभावः। नद्यो हि बाधिकाः कूलादीनाम्। "प्रागुवो नभन्वो ३ नवक्रा: (ऋ० सं० ३, ६, २, २)"—इति स्त्रीलिङ्गे निगमः। "प्र पर्वतस्य नभनूँरचु-च्यवुः (ऋ० सं० ४, ३, २४, ७)"—इति पुलिङ्गे। अत्र 'सिन्धवः स्युर्नभन्व.'—इति माधवनिर्वचनानुक्रमणी॥

(१६) वध्वः। 'वह प्रापणे (भू० उ०)। 'वहो धश्च (उ० १, ८०)'—इति ऊप्रत्यय.। वहन्ति उह्यन्ते वा भूम्याम्। यद्वा, समुद्रस्य भार्यात्वात् वध्व इत्युच्यते। सरित्पतिर्हि समुद्रः। निगमोऽन्वेषणीयः॥

(१७) हिरण्यवर्णाः। हिरण्यशब्दो निघण्टौ (१।२।१) 'हर्यतेः

कन्यन् हिरश्च'—इत्यादिना। 'हृञ् वरणे (स्वा० उ०)'। 'कर्ब-न्द्रायवच्च (उ० २, २७)'—इत्यादिना रन्प्रत्ययान्तो निपा-तितः। हृणोति व्रियते वाऽसाविति वर्णः श्वेतादिः। हिरण्यः कान्त इष्टो वर्णो यासां ताः। यद्वा, हिता घर्मादौ रमणीया मनःप्रह्लादजनयित्र्यः, वारिकाश्च तापादिभूम्या वा इति। "हिरण्यवर्णाः परियन्ति यद्वीः (ऋ० सं० २, ७, २३, ४)"—इति निगमः॥

(१८) रोहितः। 'रुह बीजजन्मनि (भू० प०)'। 'हृस-रुहियुषिभ्य इतिः (उ० १, ८४)'। रोहन्त्याभिर्बीजानि, तज्जलेन हि बीजानि प्ररोहन्ति। निगमोऽन्वेषणीयः॥

(१९) सस्रुतः। सम्पूर्वात् 'स्रु गतौ (भू० प०)'—इत्य-स्मात् 'क्विप् च (३, २, ७६)'—इति क्विप्प्रत्ययः। सङ्गताः संस्रुतः। समोऽन्तलोपश्छान्दसः। क्षुद्रनद्यो महानद्यश्च परस्परं सङ्गता भवन्ति ततः सस्रुत इत्युच्यन्ते। सस्रुतः सङ्गता इति माधवः। यद्वा, स्रवतेः सम्पदादित्वात् (३, ३, ८४ वा०) क्विप्। स्रवणं स्रुतजलप्रवाहः स्रोत इत्यर्थः, तया सह वर्त्तन्ते इति सस्रुतः। 'सहस्य सः संज्ञायाम् (६, ३, ७८)'—इति सः, सस्रुतः। 'सस्रुतः स्रोतसा युक्ताः'—इति च माधवः। "ऋतस्य धेना अयनन्त सस्रुतः (ऋ० सं० २, २, ८, १)"—इति निगमः॥

(२०) अर्णाः। 'ऋण गतौ' तनादिः (प०)। 'पचाद्यच् (३, १, १३४)'। अर्णन्ति गच्छन्त्यर्णाः। यद्वा, अर्ण इत्यकारा-न्तमप्युदकनामेत्युक्तम्। (१२१पृ०) अर्ण आदित्वादच् (५, २, १२७)। जलवत्यो हि नद्यः। 'अर्णसोऽर्णांस्युपगाः'—इति माधव.। तत्र पक्षे 'धापृवस्यज्यतिभ्यो नः (उ० ३, ६)'—इति नप्रत्ययः। यद्वा, पचाद्यचि (३, १, १३४), अर्णः 'उदके

लुट् च (उ० ४, १८२)'—इत्यसुनि विहितो लुडागमो बाहुलकाद् भवति। "ऋतावरुपी अनवद्यार्याः (ऋ० सं० २, ४, १६, २)"—इति निगमः॥

(२१) सिन्धवः। 'स्यन्दूप्रस्रवणे (भ्वा० आ०)'। 'स्यन्देः सम्प्रसारणं धश्च (उ० १, ११)'—इत्युप्रत्ययः। स्यन्दनमर्थः। "यथो नु त्वाः सिन्धवः स्रोत्याभिः (ऋ० सं० ३, २, १२, २)"—"यस्य ते सप्त सिन्धवः (ऋ० सं० ६, ५, ७, २)"—इति च निगमौ॥

(२२) कुल्याः। 'कुल संस्त्याने (भ्वा० प०)'। कोलन्ति संस्त्यायन्त्यस्मिन् शिलादय इति कुलं पर्वतः। कुले प्रधानभूते पर्वते भवाः कुल्याः। 'भवे छन्दसि (४, ४, ११०)'—इति यत्। कुलिशनिर्वचने 'कुलशातनः (निरु० ६, १७)'। मेघस्य पर्वतस्य वा समुच्छ्रिताः प्रदेशाः, कुलाः, तेषां च शातनः इत्युक्तेः। मेघस्य पर्वतस्य वा समुच्छ्रिते प्रदेशे कुले भवन्तीति कुल्याः। क्षीरस्वामी तु 'कुलानि पर्वतानि प्रति पक्षच्छेदनेन तनूकरोति, कुलिशः'—इत्युक्तवान्। यद्वा, 'कुल्याऽल्पा कृत्रिमा सरित् (अम० १, १०, ३४)'—इत्यत्र क्षीरस्वामिनो व्याख्या—'कृत्रिमा अल्पा च सेकार्थी कुल्या'। कुले साधुः 'तत्र साधुः (४, ४, ९८)'—इति यत्। यदाहुः—'कुल्यादानं जलं विद्यात् कुल्यो मान्ये व्यवस्थितः। दायाद्यं कुलमित्यन्ये फलं वा कुलमुच्यते'—इति। "स्यन्दन्तां कुल्या विषिताः पुरस्तात् (ऋ० सं० ४, ४, २८, ३)"—"ह्रदं कुल्या इवाऽऽशत (ऋ० सं० ३, २, ९, ३)"—इति च निगमौ॥

(२३) वर्ष्यः। 'वृञ् वरणे (स्वा० उ०)'—'वृङ् सम्भक्तौ (क्र्या० आ०)'। 'अच इः (उ० ४, १३४)'—इति इप्रत्ययः, 'कृदिकारात् (४, १, ४५वा०)'—इति ङीष्। 'वरणीयाः सम्भ-

जनीया वा वर्ष्यः। निगमोऽन्वेषणीयः॥

इदं नाम माधवः "ऋतावर्य्यः"—इत्यपठत्। 'ऋतमित्युदकनाम (निघ० २, ५२)' 'छन्दसो वनिपौ च (५, २, १२२ वा०)'—इति मत्वर्थीयो वनिप्, 'वनो र च (४, १, ७)'—इति ङीब्रेफौ, 'अन्येषामपि दृश्यते (६, ३, १३७)'—इति दीर्घः, ऋतावर्य्यः। "ऋतावरीरुर्प सुम्नमिव": (ऋ० सं० ३, २, १२, ५)"—इति निगमः॥ अत्र स्कन्दस्वामिना 'नदीनाम'—इति नोक्तम्, युक्तं पश्यन्तु सूरयः॥

(२४) उर्व्यः। 'ऊर्णुञ् आच्छादने (अदा० उ०)'—इत्यस्मात् इयोतिव। उर्वी इति पृथिवीनामसु व्याख्यातम् (१, १, १०)। महत्यो नद्यः, छादयित्र्यो वा भूमेः स्वेनोदकेन॥

एतदादीनामुत्तरेषां नाम्नां निगमा अन्वेषणीयाः प्रायेण॥

(२५) इरावत्यः। 'इण गतौ (अदा० प०)'। 'ऋत्व्यन्धावव्यविध (उ० २, २७)'—इत्यादिना रप्रत्ययो गुणाभावो निपात्यते। इरा वर्त्तं, तदासामस्ति मतुप्, वत्वं, ङीप्॥

(२६) पार्वत्यः। पर्वतशब्दो निरुक्ते मेघपर्वतानां नामत्वेन (१, १०, ८)। 'तस्यापत्यम् (४, १, ९२)'—इत्यण्, ङीप् (४, १, १५)॥

(२७) स्रवन्त्यः। 'स्रु गतौ (भू० प०)'। लट्, शतरि ङीप्। सर्वदा गमनस्वभावः। "नुवतिं स्रोत्या नवं च स्रवन्तीः (ऋ० सं० ८, ५, २१, २)"—इति निगमः। अत्र स्रोत्या इति विशेषणम्॥

अस्य स्थाने "रेवल."—इति केषुचित् कोशेषु दृश्यते। तदा, 'रयिः'—इत्युदकनाम (१२, ७३)। रयिरासामस्तीति मतुप्, 'रयेर्मतौ बहुलम् (६, १, ३४ वा०)'—इति सम्प्रसारणम्। "पतिः सिन्धूनामसि रेवतीनाम् (ऋ० सं० ८, ८, ४८,

१)"—इति निगमः। सिन्धुशब्दो विशेषणम्॥

(२८) ऊर्जस्वत्यः। 'ऊर्ज बलप्राणनयोः' चुरादिः (प०)। असुन् (उ० ४, १८४)। ऊर्जयतीत्यूर्जो बलं तेन तद्वत्यः। 'अस्मायामेधास्रजो विनिः (५, २, १२१)'—'बहुलञ्छन्दसि (५, २, १२२)'—इत्यत्रोक्तमतुप, 'तसौ मत्वर्थे (१, ४, १९)'—इति भसञ्ज्ञा। बलवत्यो हि नद्य यतः स्ववेगेन स्थिरानपि द्रुमादीन् हरन्ति। 'ओजस्वा वा एता वहन्तीरिवोद्गतीरिव आकूलन्तीरिव धावन्तीरिव—इति श्रुतिः॥

(२९) पयस्वत्य.। 'पा पाने (भू० प०)'। पिबतेरी चासुन् (६, ४, ६६। उ० ४, १८४)। पीयत इति पयः। प्यायतेर्वा (भू० आ०) असुनि बाहुलकात्, 'प्यायः पी (६, १, २८)'—इति निष्ठायां विहितः पीभावो भवति। यद्वैतेनेन पीतेन प्राणिन इति पयः। उदकं तद्वत्यः॥

(३०) सरस्वत्यः। सर इत्युदकनाम्नि निरुक्तम् (१२, ३८), तद्वत्य. सरस्वत्य.॥

(३१) तरस्वत्य। 'तॄ प्लवनतरणयोः (भू० प०)'। असुन् (उ० ४, १८४)। तरन्त्यनेनापदमिति तरो बलं, तद्वत्यः॥

(३२) हरस्वत्यः। 'हृञ् हरणे (भू० उ०)'। असुन् (उ० ४, १८४)। 'उदकं हर उच्यते'—इति निरुक्तम् (४, १९)' तद्धि वहन्ती हरन्ति, सर्वं ह्रियते वा प्राणिभिरुपभोगाय, तद्वत्यः॥

(३३) रोधस्वत्यः। रोधसा तीरेण, तद्वत्यः। "चित्रा रोधस्वती रनु" (ऋ० सं० १, २, १७, १)"—इति निगमः॥

(३४) भास्वत्यः। 'भा दीप्तौ (अदा० प०)'। असुन् (उ० ४, १८४)। भा दीप्तिः, तद्वत्य, दीप्तिमत्यो हि नद्यः॥

(३५) अजिराः। 'अज गतिक्षेपणयोः (भू० प०)'। 'अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिराः (उ० १, ५३)'—

(६) गभस्ती । व्याख्यातौ रश्मिनामसु । (२८ पृ०)पुरुषाः अदन्ताभ्यामनादीन् । 'गृह्णीतेर्गभस्ती बाहू, गृह्णाति पदार्थाभ्यां पुरुषः'—इति माधवः । "गर्याविमिर्ने भरमाणो गभस्त्योः (ऋ० सं० ७, ५, २२, ५)"—इति निगमः ॥

(७) करस्नौ । करासीति कर्मनामसु करशब्दो व्याख्यातः । तस्मिन् कर्मण्युपपदे 'ष्णै वेष्टने (भू० प०)'—इत्यस्मात् 'आतोऽनुपसर्गे कः (३, २, ३)' 'आतो लोप इटि च (६, ४, ६४)' । 'कुर्मणां प्रस्नातारौ (निरु० ६, १७)' वेष्टयितारौ कर्मकारावित्यर्थः । "सुपर्कावसमतये (ऋ० सं० ६, ३, २, ३)"—इति निगमः ॥

(८) बाहू । 'बाहृ लोडने (भू० आ०)' । 'अर्जिदृशिकम्यमिपसिबाधामृजिपशितुक्धुकृदीर्घहकारश्च (उ० १, २६)'—इत्युप्रत्ययो हौऽन्तादेशश्च । गमयन्ताभ्यां कर्माणि, बाधते परानाभ्यामिति वा । "ऋत्वात इन्द्र स्थविरस्य बाहू (ऋ० सं० ४, ७, ३१, ३)"—इति निगमः ॥

(९) भुरिजौ । 'हृञ् हरणे (भू० उ०)' 'डु भृञ् धारणपोषणयोः (जु० उ०)' 'हृञ उच्च (उ० २, ७१)'—इति इजिप्रत्ययः । हरतो बिभृतो वा पदार्थान् कर्मकरणसामर्थ्यं वा । "तमंशम् भुरिजोर्धिया (ऋ० सं० ६, ८, १६, ४)"—इति निगमः ॥

(१०) क्षिपस्ती । 'क्षिप प्रेरणे' तुदादिः (प०), 'वसविवशेश्छिः'—इति बाहुलकात् तिप्रत्ययः धातोरसुगागमो गुणाभावश्च । प्रेर्यन्ते कर्मसु पुरुषैः ॥ 'क्षिपती'—इति पाठान्तरम् । तदा शतरि ङीपि 'वाच्छीनद्योर्नुम् (७, १, ८०)' 'वा छन्दसि (६, १, १०६)'—इति द्विवचनस्य पूर्वसवर्णः । क्षिपतः पदार्थान् इतस्ततश्च कर्मसु । यद्वा, क्षिपेः 'इगु-

नन्दिग्रीविप्राशिभ्यः शिदाशिषि (उ० ३, १२३)'—इति बाहुल-कात् झच्प्रत्यय. झोऽन्तादेशः। क्षिपतः पदार्थान्। निग-मदर्शनाद्विर्णयः॥

(११) शक्वरी। 'शक्लृ शक्तौ (स्वा० प०)' 'स्नामदिपद्यर्त्ति-पॄशकिभ्यो वनिप् (उ० ४, १०८)'—इति वनिप्प्रत्यय, 'वनो र च (४, १, ७)'—इति ङीब्रौ च पूर्ववत् पूर्वसवर्णादेशः। शक्नुतः कर्माणि कर्त्तुम्। "अङ्गुलयः शक्वर्यो दिशश्च मे यज्ञेन कल्पन्ताम् (य० वा० सं० १८, २२)"—इति निगमः॥

(१२) भरित्रे। बिभर्त्ति रश्मीनादित्य इव। 'अशित्रा-दिभ्य इत्रोत्रौ (उ० ४, १६८)'—इति इत्रप्रत्ययः। भृरिवदर्थः। "प्र॒ग्रं दु॑हन्ति ह॒स्तिनो॑ भ॒रित्रैः (ऋ० सं० ३, २, २०, २)" —इति निगमः॥

इति द्वादश बाहुनामानि ॥ ४ ॥

अ॒ग्रुवः॑(१)। अ॒ण्वीः॑(२)। व्रि॒शः॑(३)। क्षिपः॑(४)। शर्याः॑(५)। र॒श॒नाः॑(६)। धी॒तयः॑(७)। अ॒थर्यः॑(८)। विपः॑(९)। क॒क्ष्याः॑(१०)। अ॒वन॑यः(११)। ह॒रितः॑(१२)। स्वसा॑रः(१३)। जा॒मयः॑(१४)। सना॑भयः(१५)। योक्त्रा॑णि(१६)। योज॑नानि(१७)। धुरः॑(१८)। शाखाः॑(१९)। अ॒भी॑शवः(२०)। दीधि॑तयः (२१)। गभ॑स्तयः (२२)। इति द्वाविंशतिरङ्गुलिनामानि ॥ ५ ॥

(१) अग्रुवः। 'जत्वादयश्च (उ० ४, १००)'—इति रुप्रत्यया-न्तेषु निपातेषु द्रष्टव्यः। 'अगि गतौ (भू० प०)'—इति धातुः, निपातनान्नलोपः, तन्वादित्वादुवङ्। गच्छति कर्माणि प्रति।

यद्वा, अग्रशब्दे उपपदे गमेः पूर्ववन्निपातनात् कप्रत्यये पूर्वपद-प्रलोपः गमेष्टिलोपश्च। अग्रे गच्छन्ति ताः। "तमीं हिन्वन्त्यु-ग्रुवः (ऋ० सं० ६, ७, १७, ३)"—इति निगमः। अङ्गुलीनां बहुत्वात् सर्वत्र बहुवचनान्तता॥

(२) अण्व्यः। अणतिः शब्दार्थः' (भ्र॰ प॰), 'अणश्च (उ॰ १, ८)'—इति उप्रत्ययः। 'वोतो गुणवचनात् (४, १, ४४)'—इति ङीप्। अणन्ति स्फोटनादि शब्दं कुर्वन्ति, तालादि शब्दं कुर्वन्त्याभिरिति वा। यद्वा, अण्वः ह्रस्वपरिमाणापे-क्षयाल्पपरिमाणाः। तमीमण्वीः समर्यं आ (ऋ॰ सं॰ ५, ७, १७, ३)"—इति निगमः॥

(३) विशः। 'विश प्रवेशने (तु॰ प॰)'। 'क्विप् वचि (३, २, १७८ वा॰)'—इत्यत्र 'प्राक् प्रत्ययनिर्देशादिष्टसिद्धि.'—इत्युक्तेः क्विपि रेफ उपजनः विशन्ति साधनभावं कार्येषु। 'तमीं हिन्वन्ति धीतयो दश व्रिशः (ऋ० सं॰ २, २, १३, ५)"—इति निगमः। 'कर्मसु धीयमाना दशाङ्गुलयः'—इति माधवभाष्यम्॥

(४) क्षिपः। 'क्षिप प्रेरणे (दि॰ प॰)' औणादिकः क्विप्। क्षिप्यन्ते प्रेर्यन्ते पुरुषेण कर्मसु निक्षिपन्त्यासङ्गुलीयकादीन् इति वा। "मृजन्ति त्वा दश क्षिपः (ऋ० सं० ६, ७, ३०, ४)"—इति निगमः॥

(५) शर्याः। 'शॄ हिंसायाम् (क्र्या॰ प॰ प॰)'। 'अघ्न्या-देराकृतिगणत्वात् यत् (उ॰ ४, १०८)। शृणाति पायात्। "आ यः शर्याभिस्तुविनृम्णो अस्य (ऋ० सं॰ ८, १, २६, ३)"—इति निगमः॥

(६) रशनाः। रशिबन्धनार्थो धातुरित्युक्तं रश्मिनिर्वचने। (२७पृ॰) 'युच् बहुलम् (उ॰ २, ७४)'—इति युच्। बध्नन्ति

वन्धनीयं, बध्यते आभिरिति वा। युचप्रकरणे 'रशेरम् च'—इति श्रीभोजदेव.। अश्नुवते कर्माणि। "रशनाभिर्दशभिरभ्यधीताम् ऋ० स० ७, ५, २२, ६)"। "अच्छा बर्हीरशनाभिर्नयन्ति (ऋ० स० ७, ३, २२, १)"—इति च निगमौ ॥

(७) धीतयः। 'धो (दि० आ०)' धातो 'क्तिचक्तौ च सञ्ज्ञायाम् (३, ३, १७४)'—इति क्तिच् व्यत्ययेन दधातेरपि भवति, 'घुमास्थागापाजहाति (६, ४, ६६)'—इतीत्वम्। धीयन्ते विधीयन्ते पुरुषे. कर्मसु, धारयन्ति कर्मसाधनानि वा। अन्तर्णीतण्यर्थो दधातिः। "स मृजधीतिभिर्हित (ऋ० स० ६, ७, २२, ४)"—इति निगमः॥

(८) अथर्यः। 'अत सातत्यगमने (भू० प०)' 'इन् सर्वधातुभ्य (उ० ४, ११८)'—इतीन्प्रत्ययो बाहुलकात्, धातो रथरादेश, 'कृदिकारादक्तिन (४, १, ४५ वा०)'—इति ङीप्, अम्। 'उरुर्युर्भुमथर्यो १' न दन्तम् (ऋ० सं० ३, ५, ५, ३)'—इत्यत्र 'अथर्यो न स्त्रिय इव'—इति माधव। अथर्य इति तेनाप्यपाठि अङ्गुलिनामसु ॥

"अथर्यव"—इति पाठो बहुषु दृष्ट। तदङ्गुलिनामक वर्गा अदृष्टम्। निगमदर्शनाविर्णय.॥

(९) विप। 'विप प्रेरणे (चु० प०)' क्विपि, प्रेर्यन्ते पुरुषे कार्य्येषु। "विपो न शुक्रा निशुचे जनानाम् (ऋ० स० ६, १, ३५, २)"—इति निगमः॥

(१०) कक्ष्या। "दशावनिभ्य (ऋ० स० ८, ४, २०, २)"—इत्यत्र 'कक्ष्या प्रकाशयन्ति कर्माणि (निरु० ३, ९)'—इति भाष्यम्। कक्ष्या. प्रकाशयन्त्यनुष्ठानफलेन फलेन वा कर्माणि। 'ख्याते कक्ष्यशब्दनिर्वचनम्'—इति स्कन्दस्वामी। 'गाहते का इति नामकरण ख्यातेर्वा (निरु० २, २)'—कक्ष्यशब्द

निर्वचनपरे भाष्ये स्कन्दस्वामिना—'ख्या प्रकथने (अदा० प०)'—इत्यस्मात् सप्रत्यये निरर्थको निर्निमित्तकोऽसौ सः यकाराकारयोर्लोपोऽभ्यासविकारश्च द्रष्टव्य'—इति। अयमभिप्राय—प्रायेण 'इगुपधद्विनिकमिकषिभ्य स (उ० ३, ५८)'—इति ख्यातेर्बाहुलकात् सप्रत्यये बाहुलकादेव द्विर्वचने हलादिशेषे कुत्वे 'कुहोश्चुः (७, ४, ६२)' न भवति बाहुलकादेव, 'अभ्यासे चर्च (८, ४, ५४)' इति चर्त्वम्, उत्तरस्य ख्या इत्यस्य यकाराकारयोर्लोप, 'खरि च (८, ४, ५५)'—इति चर्त्वम् 'आदेशप्रत्यययोः (८, ३, ५९)—इति षत्वम्। प्रकथनेन प्रकाशन लक्ष्यते। अनेन नित्य प्रच्छादनात् प्रकाश्यते पुरुषेण। कक्षो बाहुमूलम्। 'तत्र भवः (४, ३, ५३)'—इत्यर्थे 'शरीरावयवाच्च (४, ३, ५५)'—इति यत्प्रत्यय। अङ्गुलयोऽपि परम्परया कक्षे भवा इति कक्ष्या उच्यन्ते, अनेन नित्य प्रच्छादितत्वात्, प्रकाश्यो हि सर्वदा कक्ष, तत्र भवा अङ्गुल्यस्तद्वत् प्रकाश्या किन्तु प्रकाशयन्ति कर्माणि अनुष्ठानेन फलेन वा, यथाऽऽधारस्थिते अरणौ अग्निना प्रकाश्ये तत्र भवोऽग्नि प्रकाशको भवति तद्वत्। यद्वा, कक्ष्या रज्जु तद्वन्धनसाधनत्वात् कक्ष्याशब्देनोच्यन्ते। "पार्श्व्यवस्तु दश कुर्म्माभि (ऋ० सं० ८, ५, १८, ४)"—"दशावनिभ्यो दशकक्ष्येभ्य (ऋ० सं० ८, ४, ३०, २)"—इति च निगमौ।

(११) अवनय। व्याख्यात पृथिवीनामसु। (८पृ०) अवन्ति कर्माणि, अव्यन्ते वा। "सनात सनीला अवनीरवाता (ऋ० सं० १, ५, २, ५)"—"दशावनिभ्य (ऋ० सं० ८, ४, ३०, २)"—इति च निगमौ।

(१२) हरित। व्याख्यात नदीनामसु। (११३पृ०) हरन्त्यभि पदार्थान् "एतं त्य हरितो दश (ऋ० सं० ६,८,

२८,३)"—इति निगमः ॥

(१३) स्वसारः । सुशब्दे उपपदे 'असु क्षेपणे (दि० प०)'—इत्यस्मात् 'सावसे ऋन् (उ० २, ९८)'—इति सुष्ठु अस्यते क्षिप्यते पदार्थं आभि, कार्य्येषु क्षिप्यते वा यद्वा, स्वशब्दे उपपदे 'षद्लृ विशरणे (भू० प०)' बाहुलकादृन् बाहुलकात् टिलोपश्च । स्वं स्वं व्यापारं प्राप्नुवन्ति, स्वस्मिन् स्वस्मिन् हस्ते सीदन्तीति वा । यद्वा, परस्परं भगिनीव दृश्यन्ते, एकहस्तप्रभवत्वात् स्वसार उच्यन्ते 'न षट्स्वस्रादिभ्यः (४, १, १०)'—इति स्त्रीप्रत्ययनिषेधः । "दुदुक्षन्ति स्वसारो अङ्क्यायम् (ऋ० सं० १, ५, २, ५)"—इति निगमः ॥

(१४) जामयः, सनाभयः । अनयो——————र्योऽङ्गुल-र्थे यः । जमतेर्गतिकर्मणः (निघ० २, १४) 'जनिघसिभ्यामिण् (उ० ४, १२६)'—इति बाहुलकादिण्प्रत्ययः । 'अलिमलिप-लिघसिजन्यणिपणिभ्य इण्'—इति श्रीभोजदेवः । जमन्ति गच्छन्ति कर्माणि प्रति अदन्त्याभिरन्नादीनि वा । जनेरेव वा बाहुलकान्नकारस्य मकारः, जाताः स्वकारणात् । "स्वं यामा यथि जामयः (ऋ० सं० ६, ८, १६, ५)"—इति निगमः ॥

(१५) सनाभयः । 'णह बन्धने (दि० उ०)' 'णहो भश्च (उ० ४, १२२)'—इति इञ्प्रत्ययः भोऽन्तादेशः । नह्यतेऽनया गर्भ इति नाभिः, समाना नाभिरासामिति सनाभयः । ज्योतिर्जनपदेऽन्यस्मात् समशब्दस्य सभावः । समाना हि मातुर्नाभिस्तासां, समा नाभिः मूलमासामिति वा । "सनाभयो वाजिनमूर्जयन्ति (ऋ०सं०७,३,२५,४)"—इति निगमः ॥

(१६) योक्त्राणि । (१७) योजनानि । 'युजिर् योगे (रु० उ०)' । 'दाम्नीशसयुयुजस्तुतुदसि (३, २, १८२)'—इति

इन्प्रत्यय: पूर्ववत्। 'युच् बहुलम् (उ० २, ७४)'— इति युच्। युञ्जन्ति पदार्थानाभिरिति, युक्ता वा हस्तेन, संयम्यते आभिः क्ले शादय इति वा। शब्दस्वाभाव्यात् नपुंसकलिङ्गता। "दर्शयोक्त्रेभ्यो दर्श्योजनेभ्यः (ऋ० सं० ८, ४, ३०, २)"—इति निगमः॥

(१८) धुरः। धुर्वतेर्वधकर्मणः (निघ० २, १८) वार्त्तं किपि (३, २, १७७), राल्लोप: (६, ४, २१)' इतिवलोपे रेफस्य विसर्जनीय, जसि धुर:। धूर्वन्ति प्रन्त्युपचयन्ति कर्माणीत्यर्थः। हिंसन्ति पराभिरिति वा। धारयतेर्वा औणादिके किपि बाहुलकात् आकारस्य उकारः। अङ्गुल्या हि धार्य्य सुवर्णादि धारयति। "दश धुरो दश युक्ता वहद्भ्यः (ऋ० स० ८, ४, २०, २)"—इति निगमः॥

(१९) शाखाः। 'खनु व्याप्तौ (स्वा० भा०)' अस्मात् खप्रत्यये विकृते 'अश्नोतेर्डित्'—इति औभोजदेवेन खप्रत्यये शाखशब्दो व्युत्पादितः। व्याप्तं हि सर्वम्। खशब्दाधिकरणे उपपदे शेतेः 'अधिकरणे शेतेः (३, २, १५)'—इति अच्प्रत्यय.। अङ्गुल्यो हि हस्ताग्रभागत्वात् खे आकाशे शेरते व्यवतिष्ठन्ते, आकाशस्यावकाशरूपत्वात् उपपन्नं हि तत्र शयनम्। खशया सत्याः पृषोदरादित्वात् (६, ३, १०९) यकारलोपेन शकाराकारयोः सवर्णदीर्घत्वे खशा इति भवति, ततोऽक्षरद्वयस्य स्थानविनिमय, टाप्, शाखा। शक्नोतेर्वा पचाद्यचि (३, १, १३४) उपधादीर्घः, ककारस्य खकारश्च। शक्नुवन्ति हि ता अङ्गुलयः पुस्तकादि धारयितुं कार्य्याणि कर्त्तुं वा। यद्वा, 'शाखृ व्याप्तौ (भू० प०)' पचाद्यच् (३, १, १३४)। शाखन्ति व्याप्नुवन्ति कर्माणि। यद्वा, 'शीङ् स्वप्ने (अदा० आ०), अस्मात् 'हस्तावयवार्थे'—

इति खप्रत्ययो बाहुलकात् हस्तावयवेऽपि भवति। शेरतेऽवतिष्ठन्ते आसु नखादयः इति शाखाः। 'शतेरिव वा'—इति श्रीभोजदेवः, खप्रत्ययोऽविकृतः, इकारादेशस्य विकल्पितत्वात् पक्षे शाखानिष्पत्त्या शाखास्थानीयत्वाद्वा शाखा इष्यन्ते। तथाचामरसिंहः—'अङ्गुल्यः करशाखाः स्युः (२, ६, ८२)'—इति। 'हस्ताभ्यां दशशाखाभ्याम् (ऋ० सं० ८, ७, २५, ७)"—इति निगमः॥

(२०) अभीशवः। व्याख्याता रश्मिनामसु। (२०पृ०) अभ्यश्नुवते कर्माणि, अभीशते वा कर्माणि कर्त्तुम्। "दशाभीशुभ्यो अर्चता जरेभ्यः (ऋ० सं० ८, ४, ३०, २)"—इति निगमः॥

(२१) दीधितयः। व्याख्याता रश्मिनामसु। (२०पृ०) अङ्गुरीयकादिधारणाद् दीप्यन्ते। दीव्यन्ति क्रीडन्त्याभिरिति वा दधातेर्व्युत्पन्नो दीधितिशब्दः। "भुजिं मृजे दीधितिभिरुरण्योः (ऋ० सं० ५, १, २३, १)"—निगमः॥

(२२) गभस्तयः। व्याख्याता रश्मिनामसु (२८पृ०) गच्छन्ति पदार्थानाभिः पुरुषाः इति गभस्तयः। "दीप्यते अधोरंशषु गभस्तिभिः"—इति निगमः।

"भुरस्याः"—इति केचित्।

एतस्य स्थाने "ससुतः"—इति च केचित् पठन्ति। तच व्याख्याता नदीनामसु। (११५ पृ०) संसरन्ति सह गच्छन्ति कर्माणि प्रति सङ्गता वा। अदृष्टनिगमदर्शनाविषयः॥

इति द्वाविंशतिरङ्गुलिनामानि॥ ५॥

वश्मि(१)। उशसि(२)। वेति(३)। वेनति(४)। वेनति(५)। वाञ्छति(६)। वष्टि(७)।

वनोति(८)। जुषते(९)। हर्यति(१०)। आचके (११)। उशिक्(१२)। मन्यते (१३)। छन्त्सत् (१४)। चाकनत्(१५)। चकमानः(१६)। कनति (१७)। कानिषत्(१८)। इत्यष्टादश कान्तिकर्माणः ॥ ६ ॥

'कान्तिकर्माणः (निरु० ३, ८)'—इच्छार्था धातवः—

(१) वश्मि। 'वश कान्तौ' अदादिः परस्मैपदी। लडुत्तमैकवचनम्। "तदहं वश्मि पवमान सोम (ऋ० सं० ७, ४, ६, ४)"—इति निगमः।

(२) उश्मसि। वशेर्लडुत्तमपुरुषबहुवचने मसि 'सार्वधातुकमपित् (१, २, ४)'—इति ङित्त्वाभावात् 'ग्रहिज्या (६, १, १६)'—इत्यादिना सम्प्रसारणम् 'इदन्तो मसिः (७, १, ४६)'—इति इकारः। "ता वां वास्तून्युश्मसि गमध्यै (ऋ० सं० २, २, २४, ६)"—इति निगमः।

(३) वेति। 'वी गतिप्रजनकान्त्यसनखादनेषु' अदादिः परस्मैपदी। "वेषि होत्रमुत पोत्रं यजत्र (ऋ० सं० १, ५, २४, ४)"—इति निगमः।

(४) वेनति। नैरुक्तो धातुः। "पुराणाऽ मर्तु वेनति (ऋ० सं० ८, ७, २३, १)"—"नासत्याभ्यां वि वेनतम् (ऋ० सं० ४, ४, १६, २)"—इति च निगमौ।

(५) वेसति। अयमपि नैरुक्तो धातुः। 'वेशति'—इति पाठान्तरम्। निगमदर्शनान्निर्णयः।

(६) वाञ्छति। 'वाछि इच्छायाम्' भौवादिकः (प०)।

विश्वेस्वा। ऊर्वी वावशन्तु (ऋ० सं० ८, ८, ३१, १)"—इति निगमः॥

(७) वष्टि। वशेः परस्मैपदप्रथमपुरुषैकवचनम्। "अस्मद्री गा सृजति यस्य वष्टि (ऋ० सं० १, ३, १, २)"—इति निगमः॥

(८) वनोति। 'वनु याचने' तनादि (प०), अनेकार्थत्वाद्धातूनामत्र कान्त्यर्थः। एवमन्यत्रापि। "अग्राईं यद्देकर्णं धर्मं वनोषि तत् (ऋ० सं० १, २, २४, ४)"—इति निगमः॥

(९) जुषते। 'जुषी प्रीतिसेवनयोः' तुदादिरात्मनेपदी, अत्र कान्तिकर्मा। "स पुष्टिं याति जोषमा चिकित्वान् (ऋ० सं० १, ५, २५, ५)"—इति निगमः। 'जुषते हर्यति इति पाठात् जोषः कामः'—इति स्कन्दस्वामिभाष्यम्॥

(१०) हर्यति। 'हर्य गतिकान्त्योः' भ्वादिः परस्मैपदी। "ता जुजुषाणो हर्यति जातवेदाः (ऋ० सं० ३, ८, ११, ३)" इति निगमः॥

(११) आचके। 'चक तृप्तौ' भ्वादिरात्मनेपदी, लडुत्तमपुरुषैकवचनम्। "अनुन्योजु आचके (ऋ० सं० ३, ४, ८, ५)"—इत्यत्र 'कर्मणि लिटि उत्तमे इटि अलोपश्छान्दसः'—इति भानुदत्तः। "त्वामवस्युराचके (ऋ० सं० १, २, १८, ४)"—इति निगमः। "यस्ते मनुत्वमाचके (ऋ० सं० ६, ३, ४२, ५)"—इति तु 'लोपस्त आत्मनेपदेषु (७, १, ४१)'। यथादृष्टं पाठः॥

(१२) उशिक्। वशेः 'वशः कित् (उ० २, ६८)'—इति चिक्प्रत्ययः, कित्त्वात् सम्प्रसारणम्। "उशिक् पावको अरतिः सुमेधाः (ऋ० सं० ७, ८, २९, १)"—इति निगमः॥

(१३) मन्यते। 'मन ज्ञाने' दिवादिरात्मनेपदी। "यामृषिवं मन्यमानस्तुरश्चित् (ऋ० सं० ५, ४, ८, २)"—"यदि मन्येतापमुक्षमिल्योदने"—इति च निगमौ॥

(१४) छनुसत्। 'छदि संवरणे' चुरादिः। पञ्चमलकारः, तिप्, 'लेटोऽडाटौ (३, ४, ९४), 'सिब्बहुलं लेटि (३, १, ३४)' 'इतश्च लोपः परस्मैपदेषु (३, ४, ९७)'। 'वृषा छन्दुर्भवति हर्यतः (ऋ० सं० १, ४, १८, ४)'—इत्यत्र 'मन्यते छनुसत् चाकनत् इति कान्तिकर्मसु पाठात्, 'तदिन्वे छनुसद् वपुषः (ऋ० सं० ७, ७, २८, ३)'—इति प्रयोगदर्शनाच्च छदिः कान्त्यर्थः'—इति स्कन्दस्वामिभाष्यम्। 'दरेचुतायं छनुसत् (ऋ० सं० २, १, २१, ६)"—इति, "यच्छान्सुः पर्श्वकृदयः (ऋ० सं० ८, ६, २६, ६)"—इति च निगमौ॥

(१५) चाकनत्। 'कनी दीप्तिकान्तिगतिषु (भू० प०)' यङ्लुगन्तः। 'नुगतोऽनुनासिकान्तस्य न भवति, व्यत्ययेन पञ्चमलकारः, 'लेटोऽडाटौ (३, ४, ९४)' 'इतश्च लोपः परस्मैपदेषु (३, ४, ९७)'। "सुश्रोदिन्द्रस्य चाकनत् (ऋ० सं० ६, २, ३८, १)"—"येनिः शचिष्ठ चाकनत्"—इति च निगमौ॥

(१६) चकमानः। 'चक तृप्तौ' भूवादिरात्मनेपदी। 'ताच्छील्यवयोवचनशक्तिषु चानश् (३, २, १२९)'। "चकमानः पिबतु दुग्धमंशुम् (ऋ० सं० ४, २, ७, १)"—इति निगमः।

(१७) कनति। 'कनी दीप्तिकान्तिगतिषु (भू० प०)', भूवादिः परस्मैपदी। "भामत् कनति सुष्टुतम्"—"इन्द्रः सोमस्य काणुका (ऋ० सं० ६, ४, २८, ४)"—इति च निगमौ।

(१८) कानिषत्। कनतेर्लेटि परस्मैपदप्रथमपुरुषैकवचने सिब्बहुलं लेटि, इडागमः, उपधादीर्घाद्बहुलकात् इकारलोपः पूर्ववत्। "अग्ने तृतीये सवने हि कानिषः (ऋ० सं० ३, १, ३१, ५)"—इति निगमः॥

इत्यष्टादश कान्तिकर्माणो धातवः॥ ६॥

अन्धः(१)। वाजः(२)। पयः(३)। प्रयः(४)। पृक्षः(५)। पितुः(६)। वयः(७)। सिनम्(८)। अवः(९)। क्षु(१०)। धासिः(११)। इरा(१२)। इळा (१३)। इषम् (१४)। ऊर्क् (१५)। रसः (१६)। स्वधा(१७)। अर्कः(१८)। क्षद्म (१९)। नेमः(२०)। ससम्(२१)। नमः(२२)। आयुः (२३)। सूनृता(२४)। ब्रह्म(२५)। वर्चः(२६)। कीलालम्(२७)। यशः(२८)। इत्यष्टाविंशतिरन्ननामानि ॥ ७ ॥

(१) अन्धः। 'अन्ध इत्यन्ननाम। आध्यानीयं भवति (निरु० ५, १)'—इति भाष्यम्। 'आभिमुख्येन हि ध्यातव्यं सर्वेषामन्नं प्रीतेः शरीरस्थितेश्च तदायत्तत्वात्'—इति स्कन्दस्वामी। आङ्पूर्वात् ध्यायतेरसुनि बाहुलकात् यकाराकारयोर्लोपः, उपसर्गस्य ह्रस्वत्वं नुडागमश्च धातोः। यद्वा, 'अद भक्षणे (अदा० प०)'—इत्यस्मात् 'अदेर्नुम् धश्च (उ० ४, २००)'—इति कर्मणि कर्तरि वा कारके असुनि नुमागमो धकारश्चान्तादेशः। अद्यते प्राणिभिः, तान् वा स्वयमत्ति। तथा च श्रुतिः—'अद्यतेऽत्ति च भूतानि (तै० उ० २, २)'—इति। 'अनित्यनेनान्धः'—इति क्षीरस्वामी। अनितेरसुनि बाहुलकात् धुगागमः। आनित्यत्वं हि प्राणनम्। "आमेभिः सिञ्चता मद्यमन्धः (ऋ० सं० २, ६, १२, १)"—"इन्द्रो हि मत्स्यन्धसः (ऋ० सं० १, १, १७, १)"—इति च निगमौ ॥

(२) वाजः। 'वज गतौ (भू० प०)'। 'अकर्तरि च कारके

सञ्ज्ञायाम् (३, ३, १९)'—इति घञ् । 'अजिव्रज्योश्च (७, ३, ६०)'—इति चकारस्यानुक्तसमुच्चयार्थत्वात् कुत्वाभावः । तथाच तत्र न्यासकारः—'चकारस्यानुक्तसमुच्चयार्थत्वादजेरपि कुत्व-प्रतिषेध सिद्धो भवति वाजः'—इति । निगम्यते अभिगम्यते हि तत्स्वर्यः । गच्छत्यनेनादत्तेन सुखानि, भुक्तेन तृप्तिं वा गच्छत्यनेन शुद्धेन सत्वशुद्धिं भोक्ता । यदाहुः—'आहारशुद्धौ सत्वशुद्धिरिति । यद्वा, गत्यर्था बुद्धयर्थाः, जानात्यनेन भुक्तेन धर्मम् । 'दश धर्मान् विजानन्ति धृतराष्ट्रनिबोधतान् । मत्तः प्रमत्त उन्मत्तः श्रान्तः क्रुद्धो बुभुक्षितः ॥'—इति श्रीमहाभार-तम् । सर्वत्रान्ननामसु गत्यर्थाद् व्युत्पादितेष्वेवमर्थो बोद्धव्यः । "सुतानां वाजिनीवसू (ऋ० सं० १, १, ३, १)"—अन्यत्र "वाजं इषनुष्पत्' रयम् (ऋ० स० १, ४, १२, १)"—इति च निगमौ ॥

(३) पयः । व्याख्यातं रात्रिनामसु पय इत्यत्र (निरु० २, ५) । यद्वा, 'पय पय गतौ (भू० आ०)'—इत्यस्मादसुन् । पीयते ह्यन्नं । तद्धि चतुर्विधम् पेयचोष्यलेह्यचर्व्यभेदेन । वर्धन्ते हि तेन भुक्तेन । 'जातान्यन्नेन वर्धन्ते (तै० उ० २ २)' —इति श्रुतिः । "पर्यस्वानग्न आगहि (ऋ० स० १,२, १२, ३)"—"यदी मृतस्य पर्यसा पियानः (ऋ० स० १, ५, २७, ३)"—इति च निगमः ।

(४) प्रयः । व्याख्यातमुदकनामसु (पृ०८३) । "उप प्रयोभिरा-गतम् (ऋ० सं० १, १, ३, ४)"—"सुपायु प्रयोन्दं स्तोम माहिनाय (ऋ० सं० १, ४, १७, १)"—"प्रयस्वन्तः प्रति हर्या-मसि त्वा (ऋ० स० ८, ६, २१, ३)"—इति च निगमाः ॥

(४) श्रवः । 'श्रु श्रवणे (भू० प०)' । कर्मण्यसुन् । श्रूयते ह्यन्नं वर्ण्यमानं श्रवो यशः । तद्धर्मत्वाच्छन्दं वा । "सत्यश्चित्र

अवस्तमाः" "मत्त दधामि अवसे दिवे दिवे (ऋ० सं० १, २, २३, २)"—"अभिश्रव ऋज्यन्तः (ऋ० सं० ४, ७, ८, ३)"—इति च निगमा.। "उप प्रयोभिरागतम् (ऋ० सं० १, १, १, ४)"—इत्यादिषु निरुक्तटीकायां स्कन्दस्वामिना प्रय इत्यन्ननामेत्युच्यते। तथाच 'अर्चिति श्रवः (ऋ० सं० १, ३, २०, ४)'—इत्यादिनिगमेषु वेदभाष्ये, 'श्रव इत्यन्ननाम'—इति स्पष्टमुच्यते। निरुक्तटीकायान्तूभयथा (निरु० १०, १)। अतः 'प्रयः'श्रव'शब्दयोः उभयोरप्यन्ननामत्वं स्पष्टम्। तत्रैकतमस्य पाठो विद्वद्भिर्निर्णीयताम् ॥

(५) पृक्षः। 'पृची सम्पर्के (रु० प०)'। औणादिके क्विपि धातो' कुगागम.। सम्पृक्तं हि तज्जाठराग्निभिः। पृक्षतिर्दानार्थ इति वा (अदा० आ०)। "वायो तवं प्र पृञ्चती (ऋ० सं० १, १, ३, १)"—इत्यादौ माधवेनोक्तम्। तत्र क्विपि बाहुलकान्नलोपः। दीयते ह्यन्नमर्थिभ्यः। "त्रिः पृक्षो अस्मे अक्षरेव पिन्वतम् (ऋ० स० १, ३, ४, ४)"—इत्यत्र स्कन्दस्वामिभाष्यम् 'पृक्षा अन्ननामैतत् पठन्ति। "पृक्षो भरन्त याम् (ऋ० म० ४, ४, १२, ३)"—इत्यादिषु बहुवचनान्तस्य सामानाधिकरण्यदर्शनात् बहुवचनान्तं द्रष्टव्यम्'—इति। "अग्निं विश्वा अभि पृक्षः सचन्ते (ऋ० सं० १, ५, १६, २)"—"पृक्षो वहतमश्विना (ऋ० स० १, ४, २, ६)"—इति च निगमौ। "त्वं शर्धो मारुतं पृक्ष ईशिषे (ऋ० सं० २, ५, १८, १)"—इत्यादौ तु पक्षैकवचनान्तमपि दृश्यते ॥

(६) पितु। 'पा रक्षणे (अदा० प०)'। 'कमिमनिजनिभायागापाहिभ्यश्च (उ० १, ७०)'—इति तु-प्रत्ययो बाहुलकादिकारः। रक्षितव्यं ह्यन्नम्। प्यायतेर्बाहुलकात् तुप्रत्यये धातो. पिभावश्च। "पितुं नु स्तोषम् (ऋ० स० २, ५, ६, १)"—

प्रमन्दिने पितुमदर्चता वचः (ऋ० सं० १, ७, १२, १)"—इति निगमः ॥

(७) वयः । 'वी गतिप्रजनकान्त्यसनखादनेषु (अदा० प०)' । असुन् । गत्यादिसर्वोऽप्यर्थोऽत्रानुगुणः कारकभेदेन । 'वय गतौ (भ्वा० आ०)'—इत्यस्मादसुन् वा । "बृहदंसो वय इन्द्रो दधाति (ऋ० सं० २, १, १०, २)"—"परि प्र समीमनं ग्रां वयो गातव (ऋ० सं० ५, ५, १६, ४)"—इति च निगमौ ॥

केचिदस्य स्थाने "सुतः" इति पठन्ति । तत्र 'षूञ् प्राणिप्रसवे (अदा० आ०)' । 'तातप्रातस्वातसुत'—इत्यादिना क्तप्रत्ययः, पूजो ह्रस्वत्वञ्च निपात्यते । सूयते इच्छया । "आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः"—इति हि स्मृतिः (मनुः ३, ७६) । यद्वा, 'सु पु गतौ (भ्वा० प०)'—इत्येतद्विषय निपातनम् । निगमोऽन्वेषणीयः ।

(८) सिनम् । 'षिञ् बन्धने (स्वा० क्र्या० उ०)' । 'इण्सिञ्दीङुष्यविभ्यो नक् (उ० ३, २)' । 'सिनाति भूतानि'—इति भाष्यम् । 'सिनाति बध्नाति क्षुधा विनश्यन्ति भूतानि धारयति'—इति स्कन्दस्वामी । सीयते अनेनेति वा । अनेन हि प्रत्यादयो बध्यन्ते । "येन स्मा सिनं भरथः सखिभ्यः (ऋ० सं० ३, ४, ८, १)"—इति निगमः ॥

(९) अवः । 'अव रक्षणगतिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु (भ्वा० प०)' । असुन् । धात्वर्थेषु योगः सर्वत्रोकर्त्तव्यः । "अवत् ब्रह्माण्यवसागमत्"—"अग्निर्गिरोऽवसा वेतु धीतिम् (ऋ० सं० १, ५, २५, ४)"—इति निगमौ ॥

(१०) क्षु । 'टु क्षु शब्दे (अदा० प०)'—'क्षि निवासगत्योः (तु० प०)' । 'खनिशृभ्यां डिच्च (उ० १, ३२)'—इति

विधीयमानौ डित्कुप्रत्ययौ बाहुलकादाभ्यामपि भवति। च्यूयते शब्द्यते स्तोतृभिः स्तूयते देवतात्वादत्र स्तुत्यादिभिः गुणवत्तया वा लोकैः, निवसत्यनेन वा। "त्वं वार्जस्य श्रुत्यस्य राजसि (ऋ० सं० २, ५, १८, ५)"—"आ तू न इन्द्र क्षुमन्तम् (ऋ० सं० ६, ५, ३७, १)"—इति च निगमौ॥

(११) धासिः। 'धुषिशिशिकुषिभ्यः क्सिः (उ० ३, १५१)'—इतिर्बाहुलकात् धाञोऽपि भवति, बाहुलकादेव इत्वं न भवति। दीयतेऽर्थिभ्यो धारयति प्राणान् वा। "विश्वस्य सू तनयाय धासिम् (ऋ० सं० १, ५, १, ३)"—अत्र 'धासि रन्ननाम, इह तु पयस आसन्नकारणत्वात् गोषु प्रत्युक्तं'—इति स्कन्दस्वामी॥

(१२) इरा। व्याख्यातं नदीनामसु (११७ पृ०)॥

(१३) इला। ईड्यते दीप्यते भुक्तेन जाठरोऽग्निः, स्मिप्यते उदरे, स्वपित्यनेन भुक्तेन न हि बुभुक्षितस्य निद्रास्ति। "तक्षा इला सवीरा मा यजामहे (ऋ० सं० १,३, २०, ४)"—इति निगमः॥

(१४) इषम्। 'इषु इच्छायाम् (तु० प०)'। औणादिकः क्विप्। इष्यत इति। यद्वा, 'इषु गतौ (दि० प०)' क्विप्। वेदे प्राचुर्येण दर्शनाद् द्वितीयैकवचनान्तम्। "इषं स्तोतृभ्य आभर (ऋ० सं० ३, ८, २२, १)"—"अग्निर्नो यज्ञ इरिर्षु. (ऋ० सं० १, १, ५, १)"—इति च निगमौ॥

(१५) ऊर्क्। 'ऊर्गित्यन्ननाम। ऊर्जयतीति सतः, पक्वं सुप्रवृक्णमिति वा (निरु० ३, ८)'—इति भाष्यम्। 'ऊर्जयति' प्रबलति प्राणयति बलवन्तं प्राणवन्तं वा करोतीत्यर्थः। 'पक्वमिति वा' पक्वशब्दस्य पकारलोप कृत्वा कशब्दं व्यत्यस्य वकारस्योपरि कृते इगागमे चोर्गिति भवति। 'सुप्रवृक्णमिति वा' अत्र इशब्दलोपे कृते, संयोगादिलोपे कृते, वकारस्योपरि

ऋकि ऊर्ध्वे च कृते ऊर्गिति भवति। सुश्रिदं हि तद्भवति मृदुत्वात्'—इति स्कन्दस्वामिग्रन्थः। 'ऊर्ज्यते प्राण्यते जीव्यतेऽनया'—इति भट्टभास्करमिश्रः। अत्र 'ऊर्ज बलप्राणनयोः (चु० प०)' इत्यस्मादेव करणे क्विप्। "यंसि वनुमूर्जं न विश्वध क्षरध्यै (ऋ० सं० १, ५, ५, ३)"—इति निगमः॥

(१६) रसः। व्याख्यातमुदकनामसु (८२पृ०)। "महे यत् पित्र ईं रसं दिवे कः (ऋ० सं० १, ५, १५, ४)"—इति निगमः॥

(१७) स्वधा। स्वशब्दे उपपदे दधातेः (जु० उ०) 'गेहे कः (३, १, १४४)'—इति कप्रत्ययो बाहुलकाद् भवति। स्वेभ्यो दीयते स्वस्मिन् धीयते वा, स्वेन धनेन धीयते वा। "विश्वा हि माया अवसि स्वधावः (ऋ० सं० ४, ८, २४, १)"—"आदह स्वधामनु (ऋ० सं० १, १, ११, ४)"—इति च निगमौ॥

(१८) अर्कः।

(१९) अद्म। व्याख्यातमुदकनामसु (८२पृ०)। क्षुधितस्त-नादिभिः स्वकार्ये स्थिरं भवति, स्थिरो भवत्यनेन सुखेन भोक्तेति

१ २उ ३१२३१ २

वा, "अहमन्नमन्नमदन्तमद्मि (सा० सं० आ० १, ९)"—इति श्रुतिः। माधवपक्षे अदिरशनार्थः (अ०), अद्यते बुभुक्षितैः। "स्वादु चाद्मायो वसतौ स्योनकृत्"—इति निगमः॥

(२०) नेमः। 'णीञ् प्रापणे (भ्वा० उ०)'। 'अर्त्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन् (उ० १, १३७)'। गमयति सुगतिं दातारं, नीयते देहयात्रा अनेनेति वा।

"नेमा"—इति नकारान्तं केचित् पठन्ति। तदा बाहुलकादभिधानलक्षणाद्वा नकारस्तस्य णत्वाया अभावः। एवमेवास्मिन् सूत्रे वृत्तिकारेणोक्तम्। यद्वा, मनिनि रूपसिद्धिः। निगमदर्शनान्निर्णयः॥

(२१) ससम्। 'सस स्वप्ने (अदा० प०)'। 'पुंसि संज्ञायां घः प्रायेण (उ० ४, ११८)। स्वपन्त्यनेन भुक्तेन, न हि क्षुधितस्यातिनिद्रास्ति। "ससेनं चिद्विमदायावहो वसु (ऋ० सं० १, ४, ८, ३)"—इति निगमः॥

(२२) नमः। 'णमु प्रह्वत्वे (भू० प०)'। असुन्। उपनतं जातमात्रेभ्यो भूतेभ्यः पूर्वजन्मकृतकर्मवशात्, नम्यते देवतात्वात् नमस्यनेन हेतुना तदन्तं प्रयोजनस्य च हेतुत्वेन विवक्षा। "प्र वो महे महि नमो भरध्वम् (ऋ० सं० १, ५, १, २)"—"एना वो अग्निं नमसा (ऋ० सं० ५, २, २१, १)" —इति च निगमौ॥

(२३) आयु। अयनं प्राणनमस्ति। "पाहि सदमिद् विश्वायु (ऋ० सं० १, २, २२, ३)"—इति निगमः॥

(२४) सूनृता। व्याख्यातमुषोनामसु (पृ०४३)। सुष्ठु नयन्ति सुखयुक्तान् अश्यते वा तदर्थिभिः। यद्वा, शोभना नरः सुनरः 'अन्येषामपि दृश्यते (६, ३, १३७)'—इति दीर्घः, सूनृषु तायते विस्तीर्यते पुण्येन, 'अन्येषामपि दृश्यते (६, ३, १३७)' —इति दीर्घः। वा टाप्। "पुंरूणीथे जरते सूनृतावान् (ऋ० सं० १, ४, २५, ७)"—"अश्विना सूनृतावती (ऋ० सं० १, २, ४, २)"—इति च निगमौ॥

(२५) ब्रह्म। 'बृहि बृहि वृद्धौ (भू० प०) 'बृंहेर्नलोपश्च (उ० ४, १४६)'—इति मनिन्। परिवृढं भवति सर्वप्राणिभिः। सर्वदा भुज्यमानमप्यनुपचीयमाणत्वात्, स्वभावतो वा परिवृढं सर्वस्य जगतो भरणात्, वर्द्धन्तेऽनेन भूतानीति वा 'जातान्यन्नेन वर्द्धन्ते (तै० उ० २, २)'—इति श्रुतिः। "उप ब्रह्माणि वाघतः (ऋ०सं० १, १, ५, ५)"—इति च निगमः॥

(२६) वर्चः । 'वर्च दीप्तौ (भू०आ०)' । असुन् । दीप्तिकरं द्रव्यं शरीरादेः । "तमा संसृज वर्चसा (ऋ० सं० १, २, १२, ३)"—"सं माग्ने वर्चसा सृज (ऋ० सं० १, २, १२, ४)"—"आयुषा सह वर्चसा (ऋ० सं० ८, ३, २७, ४)"—इति निगमाः ॥

(२७) कीलालम् । 'कल गतौ (प०)' चौरादिकः, 'कील बन्धने (भू० प०)' 'कील खण्डने ।' कील बन्धने इति व्युत्पत्तौ सिनवदर्थः । कील खण्डने इति तु सुच्छेदमित्यर्थः । अपिवा कीला जाठराग्नेर्ज्वाला, ता लाति 'आतोऽनुप (७, २, १)' । "कीलालपे सोमपृष्ठाय वेधसे (ऋ० सं० ८, ४, २२, ४)"—इति निगमः ॥

(२८) यशः । व्याख्यातमुदकनामसु (पृ० ८८) । यशो यशेर्दीप्यर्थात् । कीर्त्तिकरं वेति माधवः । तदा वर्चस्वदर्थः । "यशोन पक्वं मधुगोष्वन्तरा (ऋ० सं० ८, ६, २, ५)"—"तुविद्युम्न यशस्वता (ऋ० सं० ३, १, १६, ६)"—इति निगमौ ॥

इत्यष्टाविंशतिरन्ननामानि ॥ ७ ॥

**आवयति(१) । भर्वति(२) । बभस्ति(३) । वेति(४) । वेवेष्टि(५) । अविष्यन्(६) । बप्सति(७) । भसथः(८) । बभ्याम्(९) । ह्वरति(१०) । इति दशात्तिकर्माणः ॥ ८ ॥**

(१) आवयति । आङ्पूर्वात् वेतेः (अदा० प०) 'बहुलं छन्दसि (२, ४, ७३)'—इति शपो लुगभावः । यद्वा, 'वेञ् तन्तुसन्ताने (उ०)' भूवादिः, अनेकार्थत्वात् धातूनामवात्तिकर्मत्वम् । एवमन्येष्वपि द्रष्टव्यम् । "आ तु नः स वयति गव्यमश्व्यम् (ऋ० सं० ६, २, २, १०)"—इति निगमः ॥

(२) भर्वति। 'भर्व हिंसायाम्' भूवादिः परस्मैपदी। "पृथून्यग्नि रेनु याति भर्वन (ऋ० सं० ४, ५, ८, २)"—तेन सूर्भर्वं शुतवंत् सहस्रम् (ऋ० सं० ८, ५, २०, ५)"—इति निगमौ॥

(३) बभस्ति। 'भस भर्त्सनदीप्त्योः' जुहोत्यादिः परस्मैपदी। "हरी ह्रुवान्ांसि बप्सता (ऋ० सं० १, २, २६, ७)"—इति निगमः।

(४) वेवेष्टि। 'विषृल्ट व्याप्तौ (जु० उ०)'। 'जुहोत्यादिभ्यः श्लुः (२, ४, ७५)'। "स्तैदयीययातिथि ज्योतिष्कृत्वा परिवेवेष्टि"—"यदा त्वा अतिथयः परिवेष्टि"—"मरुतः परिवेष्टारः"—इति च निगमाः। प्रयोजकव्यापारे प्रयुक्तत्वात् निरूपणीयम्॥

(५) वेति। वी गत्यादौ अदादिः परस्मैपदी। "वीतं पातं पयस उस्रियायाः (ऋ० सं० २, २, २१, ४)"—इति निगमः॥

(६) भविष्यन्। भवतेर्वर्त्तमाने व्यत्ययेन लृट्, लृटः सद्दा। "तूर्वविष्यन्नुतिषु तिष्ठति (ऋ० सं० १, ४, २३, २)"—इति निगमः। अत्र च 'भविष्यन्नस्तिकर्मा भक्षयन्नित्यर्थः'—इति स्कन्दस्वामी। तस्मादविष्यादिति पाठो न युक्तः॥

(७) बप्सति। भसेः प्रथमपुरुषे बहुवचने 'घसिभसोर्हलि च (६, ४, १००)'—इत्युपधालोपे रूपम्। "उज्झिर्वनानि बप्सति (ऋ० सं० ६, ३, २८, ३)"—इति निगमः॥

(८) भसथः। भसेर्लेटि थसि 'बहुलं छन्दसि (२, ४, ७६)'—इति शपः श्लुर्न भवति। "न देवा भसर्थयुन (ऋ० सं० ४, ८, २५, ४)"—इति निगमः।

(९) बब्धाम्। भसेर्लेटि तसस्तामि श्लौ द्विर्वचनान्तत्वानित्यत्वात् उपधालोपः माप्नोति छान्दसत्वान्न, 'घसिभसोर्हलि

च (६, ४, १००)'—इत्युपधालोपः। 'घि च (८, २, २५)'—इत्यादिसूत्रेषु सिचो लोप इति पक्षे सकारलोपश्छान्दसः सकारमात्रलोप इति पक्षे 'झलोझलि (८, १, १६)'—इति सलोप, भस्त्वजश्त्वे। बब्धामिति पृथक्पाठे प्रयोजन मृग्यम्। "बब्धां ते हरीधाना"—इति निगमः॥

(१०) ह्वरति। 'ह्वृ कौटिल्ये' भ्वादिः परस्मैपदी। "अपामतिष्ठद्धरुणह्वरन्तम्' (ऋ० सं० १, ४, १८, ५)"—"ह्वृ द्वरे यद्धुर्वरा धर्षिष्यम् (ऋ० सं०१, ५, २, १)"—इति निगमौ॥

इति दशात्तिकर्माणि. ॥ ८ ॥

ओजः (१)। वाजः (वा) पाजः (२)। शवः (३)। तरः (४)। त्वक्षः(५)। त्वक्षः(६)। शर्धः (७)। बाधः (८)। नृम्णम्(६)। तविषी(१०)। शुष्मम्(११)। शुष्णम्(१२)। शूषम्(१३)। दक्षः (१४)। वीळु (१५)। च्यौत्नम्(१६)। सहः(१७)। यहः(१८)। वधः (१९)। वर्गः (२०)। वृजनम् (२१)। वृक् (२२)। मज्मना (२३)। पौंस्यानि (२४)। धर्णसिः(२५)। द्रविणम्(२६)। स्यन्द्रासः (२७)। शम्बरम्(२८)। इत्यष्टाविंशतिर्बलनामानि ॥६॥

(१) ओज.। व्याख्यातमुदकनामसु (पृ०८४)। उब्जत्यनेन, बलवत्सन्निधौ हि ऋजवीभवन्ति भीत्या, न्यग्भावयत्यनेन वा शत्रून्। वर्द्धतेऽनेन ऐश्वर्यादि, वर्द्धते व्यायामादिना। इमावर्थान्तरावपि द्रष्टव्यौ बोद्धव्यौ। 'दर्वधिकम्'—इति

माधवः। हिंसन्त्यनेन शत्रवो वा। 'उपेर्जुट् च'—इति स्वामी-भोजदेवः। असुन् गुणः। ओषति दहति शत्रून्। "ओजो जातमुत मन्य एनम् (ऋ० सं० ८, ३, ४, ३)"—"वसूनि जाते जनमान ओजसा (ऋ० सं० ६, ७, २, ३)"—इति निगमौ।

(२) वाजः। व्याख्यातमन्ननामसु (पृ०१७०)। गम्यतेऽनेन शत्रून् प्रति जिगीषुः। गम्यतेऽधिगम्यते व्यायामादिना यत्नेन। इमावर्थावुत्तरत्रापि गत्यर्थेषु बोद्धव्यौ। 'वाजो बल, वाजयतेः प्रेरणार्थात्'—इति माधवः। अनेन शत्रून् प्रेरयति विद्रावयतीति। "परिवाजेषु भूषथः (ऋ० सं० ३, १, १२, ४)"—इति निगमः॥

पाजः। 'पा रक्षणे (अदा० प०)'। 'पातेर्जुट् च'—इत्यसुन्। बलेन हिंस्यते सर्वम्। "कृणुष्व पाजः प्रसितिं न पृथ्वीम् (ऋ० सं० ३, ४, २१, १)"—इति निगमः। "समिद्धस्य रुशदुदर्शि पाजः (ऋ० सं० ३, ८, १२, २,)"—इत्यत्र स्कन्दस्वामिना 'पाजो बलम्'—इत्येतावदेवोक्तं न तु बल-नामेति वाजशब्दे तु 'परिवाजेषु भूषथः (ऋ० सं० ३, १, १२, ३)'—इत्यत्र बलनामैतदित्युक्तम्, 'अत्यं न मिहे वि नयन्ति वाजिनम् (ऋ० सं० १, ५, ७, १)'—इत्यत्र, 'अत्यं न वाजं हवनस्यदं रथम् (ऋ० सं० १, ४, ११, १)'—इत्यादौ च ऋक्भाष्ये वाजशब्दोपरि 'अपि बलनाम'—इत्युच्यते। अतो वाजपाजशब्दयोरुभयोरपि बलनामत्वं स्पष्टम्, तत्रैकतमस्य पाठो विद्वद्भिरधीयताम्॥

(३) शवः। व्याख्यातमुदकनामसु। (८३ पृ०) "मा भेम शवसस्पते (ऋ० सं० १, १, २१, २)"—इति निगमः॥

(४) तरः। 'तॄ प्लवनतरणयोः (भ्वा० प०)' असुन्। तर-

त्वनेन आपदम्। "यावत्तरो मघवन् यावदोजः (ऋ० सं० १, १, १, २,)"—इति निगमः।

(५) तवः। तवतिर्बधार्थः, असुन्। "अपादमिन्द्र तवसा जघन्थ (ऋ० सं० ३, २, २, ३)"—"योगेयोगे तवस्तरम् (ऋ० सं० १, २, २८, २)"—इति च निगमौ।

(६) त्वक्षः। 'तक्षू तनूकरणे (भू० प०)' असुन्। तनूक्रियन्ते तेन त्वक्षः। "स प्र रिक्षा त्वक्षसा क्ष्मो दिवश्च (ऋ० सं० १, ७, १०, ५)"—इति निगमः।

(७) महः। 'महतिरव्याहार्थः'—इति स्कन्दस्वामी, असुन्। मनुजयादावनेन व्याहितत्वात्। "अभ्रांशिरमहो महत्तीयदर्पयम् (ऋ० सं० ४, १, १५, ६)"—इति निगमः।

(८) बाधः। 'बाधृ विलोडने (भू० आ०)' 'अकर्त्तरि च कारके सञ्ज्ञायाम् (३, ३, १९)'—इति घञ्। बाध्यतेऽनेन बाधः। निगमोऽन्वेषणीयः।

(९) नृम्णम्। 'नृम्णं नृन् नतम् (निरु० ११, ९)'—इति भाष्यम्। 'नृन् मनुभूतान् प्रति नमति, स्वार्थो वा नमिः, नमयति प्रह्वीकरोति'—इति स्कन्दस्वामी। 'इन्द्रं नृम्णं हि ते शवः (ऋ० सं० १, ५, २८, २)'—इत्यत्र ऋग्भाष्यम्—'यस्मात्त्वत्प्रभूतानां मनुष्याणामपि नमनकारणं तव बलम्'—इति। स एष तत्र पृषोदरादित्वेन नृनमनशब्दस्य वर्णलोपादौ नृम्णमिति द्रष्टव्यम्। "अवो नृम्णं च रोदसी सपर्यतः (ऋ० सं० ८, १, ८, १)"—"मद्रियर्वस्तुविनृम्णम् (ऋ० सं० १, ३, २७, १)"—इति च निगमौ।

(१०) तविषी। तविः सौत्रो धातुर्बलार्थः। तवेष्टिषन् प्रत्ययः। टित्वात् ङीप्। "क्रत्वा रजांसि तविषीं दधानः

माधवः। हिंसन्तोऽनेन शत्रवो वा। 'उपेर्जुट् च'—इति ओभोजदेशः। असुनि गुणः। ओपति दहति शत्रून्। "ओजस्तो जातमुतमन्य एनम् (ऋ० सं० ८, ३, ४, ३)"—"वधं जाते जनमाम् ओजसा (ऋ० सं० ६, ७, ३, ३)"—इति निगमौ।

(२) पाजः। व्याख्यातमन्ननामसु (पृ०१७०)। गच्छन्त्यनेन शत्रून् प्रति जिगीषवः। गम्यतेऽधिगम्यते व्यायामादिना यत्नेन। इमावर्थावुत्तरत्रापि गत्यर्थेषु बोद्धव्यौ। 'वाजो बलं, वाजयतेः प्रेरणार्थात्'—इति माधवः। अनेन शत्रून् प्रेरयति विद्रावयतीति। "परिवाजेषु भूषथः (ऋ० सं० ३, १, १२, ४)"—इति निगमः॥

पाजः। 'पा रक्षणे (अदा० प०)'। 'पातेर्जुट् च'—इत्यसुन्। बलेन हिंस्यते सर्वम्। "कृणुष्व पाजः प्रसितिं न पृथ्वीम् (ऋ० सं० ३, ४, २३, १)"—इति निगमः। "समिद्धस्य रुशदर्शि पाजः (ऋ० सं० ३, ८, १२, २,)"—इत्यत्र स्कन्दस्वामिना 'पाजो बलम्'—इत्येतावदेवोक्तं न तु बलनामेति वाजशब्दे तु 'परिवाजेषु भूषथः (ऋ० सं० ३, १, १२, ३)'—इत्यत्र बलनामैतदित्युक्तम्, 'अत्यं न मिहे वि नयन्ति वाजिनम् (ऋ० सं० १, ५, ७, १)'—इत्यत्र, 'अत्यं न वाजं हवनस्यदं रथम् (ऋ० सं० १, ४, ११, १)'—इत्यादौ च ऋक्भाष्ये वाजशब्दोपरि 'अपि बलनाम'—इत्युच्यते। अतो

अनेन यावदम्। "यावत्तरो मघवन् यावदोजः (ऋ० सं० १, ३, ३, २,)"—इति निगमः।

(५) तवः। तवतिर्बधार्थः, असुन्। अपादमिन्द्र तवसा जघन्थ (ऋ० सं० ३, २, २, ३)"—"योगे योगे तवस्तरम् (ऋ० सं० १, २, २८, २)"—इति च निगमौ।

(६) त्वचः। 'तनू तनूकरणे (भू० प०)' असुन्। तनूक्रियन्ते तेन प्रत्ययः। "स प्र रिक्तो त्वचसा क्षो त्रिवर्त (ऋ० सं० १, ७, १०, ५)"—इति निगमः।

(७) महः। 'महतिर्बलाद्दार्थः'—इति स्कन्दस्वामी, असुन्। महुजयादावनेन उत्साहितत्वात्। "अभ्र ज्रियत्ते महतीयदर्षसम् (ऋ० सं० ४, ३, १५, ६)"—इति निगमः।

(८) बाधः। 'बाधृ विलोडने (भू० आ०)' 'अकर्त्तरि च कारके सञ्ज्ञायाम् (३, ३, १९)'—इति घञ्। बाध्यतेऽनेन प्रत्ययः। निगमोऽन्वेषणीयः।

(९) नृम्णम्। 'नृम्णं नृन् नतम् (निरु० ११, ९)'—इति भाष्यम्। 'नृन् मनुभूतान् प्रति नमति, अर्थो वा नमिः, नमयति प्रह्वीकरोति'—इति स्कन्दस्वामी। 'इन्द्र नृम्णं हि ते शवः (ऋ० सं० १, १, २८, ३)'—इत्यत्र ऋक्भाष्यम्—'यस्मात्त्वत्तुभूतानां मनुष्याणामपि नमनकारणं तव बलम्'—इति। स एव तत्र पृषोदरादित्वेन नृनमनशब्दस्य वर्णलोपादौ नृम्णमिति द्रष्टव्यम्। "अवो नृम्ण च रोदसी सपर्यतः (ऋ० सं० ८, १, ८, १)"—"मह्नियर्वस्तुविनृम्णम् (ऋ० सं० १, ३, २७, १)"—इति च निगमौ।

(१०) तविषी। तविः सौत्रं वधार्थः। तवेष्टिषन् प्रत्ययः। टित्त्वात् ङीप्।

'नि—मग्नो यथो (तु० प०)'। मीवा-

दिको मनिन्' (उ० ४, १४०)। 'मज्जो नश् भवि (८, ५३)' सुत्वम्, तृतीयैकवचनम्। मज्जयति शत्रून्। "गाभा पृथिव्या भुवनस्य मज्मना (ऋ० सं० २, २, १२, ४)"—"स द्युम्नहानि सम्रियाणि मज्मना (ऋ० सं० १, ४, १८, ५)"— "वि रोदसी मज्मना बाधते शवं (ऋ० सं० १, ४. १०, ५)"— इति निगमाः। निगमेषु तृतीयैकवचनान्तस्य प्रायशो दर्शनात् तदन्तः पठितः॥

(२४) पौंस्यानि। 'पुंसि अभिवर्द्धने (प०) चुरादिः। 'कृग्रादयश्च (उ० ४, १०८)'—इति यत्प्रत्ययान्तेषु निपातितेषु द्रष्टव्यः। "पौंस्यानि नियुतः सश्चुरिन्द्रम् (ऋ० सं० ४, ७, ८, ३)"—"यस्मिन् विश्वानि पौंस्या (ऋ० सं० १, १, १०. ४)"—"मुहत्तदस्य पौंस्यम् (ऋ० सं० १, ५, ३०, ५)"—इति निगमः॥

(२५) धर्णसि। 'धृञ् धारणे (भू० उ०)'। "सानसिवर्णसिपर्णसि (उ० ४, १०४)"—इत्यसिप्रत्ययोनु सागमोऽपि निपात्यते गुणः। ध्रियतेऽनेन राज्यादि। निगमोऽन्वेषणीयः॥

(२६) द्रविणम्। 'द्रु गतौ (भू० प०)'। 'द्रुदक्षिभ्यामिनिन् (उ० २, ५२)'। "सनो ददातु द्रविणम्"—इति निगमः॥

(२७) स्यन्द्रासः। 'स्यदि किञ्चिच्चलने (भू० आ०)' "धन्भूरन्धुसिलिन्थ्रेभ्युंद्रुतीद्रयोभ्रगोरिन्द्राभद्रम्यन्दकुलीराद्रथः" इति रन्प्रत्ययान्तो निपात्यते। तस्मात् जसेरसुक् (७, १, ५०)। स्यन्दतेऽनेन शत्रून्। निगमोऽन्वेषणीयः॥

(२८) शम्बरम्। व्याख्यातमुदकनामसु (१०५ पृ०)। यतेऽनेन शत्रु, संहन्ति वा तस्तत आपदम्। शमनमुपद्वावारुतकष्टं च युद्धादौ, शम्बेनेन्द्रेणादीयते वा।

देवताद्वीन्द्रः । 'या च का च बलकृतिरिन्द्रकर्मैव तत् (निरु० ७, १०)'—इति भाष्यम् । निगमोऽन्वेषणीय ॥

इत्यष्टाविंशतिर्बलनामानि ॥९॥

मघम् (१) । रेक्णः (२) । रिक्थम् (३) । वेदः (४) । वरिवः (५) । श्वात्रम् (६) । रत्नम् (७) । रयिः (८) । क्षत्रम् (९) । भगः (१०) । मीळ्हुम् (११) । गयः (१२) । द्युम्नम् (१३) । इन्द्रियम् (१४) । वसु (१५) । रायः (१६) । राधः (१७) । भोजनम् (१८) । तना (१९) । नृम्णम् (२०) । बन्धुः (२१) । मेधा (२२) । यशः (२३) । ब्रह्म (२४) । द्रविणम् (२५) । श्रवः (२६) । वृत्रम् (२७) । ऋतम् (२८) । इत्यष्टाविंशतिरेव धननामानि ॥ १० ॥

(१) मघम् । मंहतिर्दानकर्मा (प० १, २०, १०) । 'घञर्थे कविधानम् (३, ३, ५८वा०)'—इत्यत्र परिगणितस्य प्रायिकत्वात् कप्रत्यये पृषोदरादित्वात् लोपो हकारस्य घकारश्च । दीयतेऽर्थिभ्य । "तमिन्द्र चोदय दातवे मघम् (ऋ० सं० ७, २, ३३, ५)"—"यदिन्द्र दक्षिणा मघोनी (ऋ० सं० २, ६, ६, ६)"—इति निगमौ ॥

(२) रेक्णः । 'रिचिर् विरेचने (रु० उ०)' । 'रिचेर्धने घिच्च (उ० ४, १९४)'—इत्यसुन्, नुडागमो गुणश्च, घित्वात् 'चजोः कु घिण्ण्यतोः (७, ३, ५२)'—इति कुत्वम् । 'रेक्ण इति धननाम, रिच्यते प्रयतः (निरु० ३, २)'—इति भाष्यम् ।

रिच्यते भवतिष्ठते प्रयत म्रियमाणस्य धनं धनिना सह न म्रियत इत्यर्थः। 'रेक्णो धन रिचे प्रेरणार्थात्'—इति माधव। प्रेर्यतेऽनेन दत्तेन भृत्यादिः कर्मसु। "ग्राहं यद्रेक्णं परम वृणोषि तत् (ऋ० स० १, २, २४, ४)"—"प्रति यद्य ग्रर्यस्य रेक्णः (ऋ० सं० ५, २, ६, २)"—इति च निगमौ॥

(३) रिक्थम्। रिचे (रु० उ०) 'पातृतुदिवचिरिचिसिचिभ्यस्थक् (उ० २, ६)'—इति थक्। पूर्ववदर्थः। "न ग्रामणे तान्वो रिक्थमारैक् (ऋ० स० ३, २, ५, २)"—इति निगम॥

(४) वेद। 'विद्लृ लाभे (प्रदा० प०)'। असुन्। विद न्त्येतत्, लभ्यते वाऽनेन धर्मादि। "होतारं चित्रवेदसम् (ऋ० स० १, १, २२, १)"—इति निगम॥

(५) वरिव। 'वृञ् वरणे (स्वा० उ०)' अस्माद् यद्वलुग्न्तात् असुनि आकुवकादिलोपः। अथ वियते, वरिवसो हेतुत्वाद्वा वरिव 'वित्त बन्धुर्वय कर्म विद्या भवति पञ्चमी। एतानि मान्यस्थानानि गरीयो यद्युत्तरम् (२, १३६)'—इति मनु। "युधा देवेभ्यो वारवश्चक्रथ (ऋ० स० १, ४, २५, ५)" —"स्पो रोक्षन् वरिव पूर्वे क (ऋ० स० १, ५, ५, २)" —इति निगमौ।

(६) श्वात्रम्। श्वाश्रब्द उपपदे 'अत सातत्यगमने (भू० प०)'—इत्यस्मात् 'आतश्चोपसर्गे'—इति कप्रत्यय, पृषोदरादित्वेन श्वाशब्दस्य व्युत्पद्यते, यथादेशमवर्णदीर्घौ। आशु अतति आशु गच्छति, चञ्चल हि धनम्। निगमोऽन्वेषणीयः॥

(७) रत्नम्। 'रमु क्रीडायाम् (भू० आ०)' 'रमेस्त च (उ० ३, १२)'—इति नप्रत्ययस्तकारश्चान्तादेश। रमणीय हि

तत्। 'रमतेऽस्मिन्'—इति क्षीरस्वामी। 'वित्तं रमस्व बहु मन्यमानः'—इति श्रुतिः। "धा रत्नं महि स्थूरं बृहन्तम् (ऋ० सं० ३, ६, ८, ५)"—"होतारं रत्नधातमम् (ऋ० सं० १, १, १, १)"—इति निगमौ॥

(८) रयिः। व्याख्यातमुदकनामसु (१०१ पृ०)। गम्यते प्राप्यते पुण्येन गच्छत्यनेन स्वर्गं भोगसाधनत्वात्, यद्वा याऽऽदत्ते, दीयतेऽर्थिभ्य इति वा। "अग्निना रयिमश्नवत् (ऋ० सं० १, १, १. ३)"—इति निगमः॥

(९) द्युम्नम्। व्याख्यातमुदकनामसु (८५ पृ०)। पूर्वजन्मसुकृतवशेन तद्दति स्थिरं भवति, स्नाति उपभोगसाधनत्वात्, छिनत्ति दारिद्र्यम्। गतावपि शब्दवदर्थः। चतात् पापात् त्रायते। चत्रशब्दात् त्रायतेश्च पृषोदरादित्वात् द्युम्नम्। धनैरेव पापं नरा निस्तरन्तीत्युच्यते। "न हि ते क्षत्रं न सहो न मन्युम् (ऋ० सं० १, २, १, १)"—"सत्रासो द्युम्नावतः (ऋ० सं० १, १, २६, ५)"—इति च निगमौ॥

(१०) भगः। 'भज सेवायाम् (भू० उ०)'। 'पुंसि संज्ञायां घः प्रायेण (३, ३, ११८)' 'चजोः कु घिण्ण्यतोः (७, ३, ५२)'। भज्यते सेव्यते भोगार्थिभिः। यद्वा सेव्यतेऽनेन हेतुना तद्वान्। भगशब्दः पुंलिङ्गो धनवचनः। "मित्रं स्तोष्यमो मातिभुग्भगो नः (ऋ० सं० २, ६, ६, ६)"—यद्वित—स्त्रीभग." —इति निगमौ॥

(११) मीळ्हुम्। 'मिह सेचने भू० प०)'। ढत्वघत्वष्टुत्वढलोपदीर्घाः, ळ्हकारभावश्च। सिच्यतेऽर्थिभ्यो दातृभि.। 'सहस्रमीळ्हुष्टममिवानमा इत्यत्र भट्टभास्करमिश्रभाष्येऽपि 'मीळ्हु इति धननाम'—इति दृश्यते। ततो निष्कृष्य ळ्हकारान्तनिगमदर्शनाभावात् षकारान्तनिगमदर्शनात् उकारा-

न्ताकारान्तयोरपि स्वोकारोऽप्याकम्। "रुद्रस्य ये मीळ्हुषः सन्ति पुत्राः (ऋ० सं० ५, १, ७, ३)"—"तां आ रुद्रस्य मीळ्हुषो (ऋ० सं० ५, ४, २८, ५)"—इत्यादौ निर्वाहकत्वात् "मीळ्हुम्"—इति पठितव्यमिति केचिदाहुः। अन्ये तु "मीळ्ह."इति सकारान्तमपि। तेषां मीळ्हांसमिति निर्वाहः। उभयेषामपि "सुहस्त मीळ्हहे (ऋ० सं० १, ७, ३४, ५)"—इत्यकारान्तस्य पाठोऽपेक्षणीयः। बहुभ्यस्तु निर्णयः।

(१२) गय। व्याख्यातमपत्यनामसु (१४५, पृ०)। इहापि तदर्थं। गीयते स्तूयते द्दोऽर्भि। "अर्वद्भिराशुभिर्गयेम् (ऋ० सं० १, ५, २१, २)"—इति निगमः॥

(१३) द्युम्नम्। 'द्युम्नसुम्नानिम्न'—इत्यादिना 'द्युत दीप्तौ (भू० आ०)'—इत्यस्मात् नप्रत्ययो तकारस्यान्तादेशो निपात्यते। तेन तद्धान्। द्योत्यते द्युम्नम्। 'द्यु अभिगमने (अदा० प०)'—इति क्षीरस्वामी। अत्र धातोर्मगागमो निपात्यते। "द्युम्नं सुहस्तुमातमम् (ऋ० सं० १, १, १८, ३)"—"द्यु म्ना वाजेभिरागतम्।"—इति च निगमौ।

(१४) इन्द्रियम्। 'इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा (५, २, ९३)'—इति घप्रत्ययान्तमस्तो- दात्त निपात्यते। इन्द्रः—'इदि परमैश्वर्ये (भू० प०)' परमैश्वर्य युक्त उच्यते। इन्द्रस्य लिङ्गम्। धनेन हि ऐश्वर्ययुक्त इति व्यज्यते। अत्र षष्ठी, समर्थात्, लिङ्गार्थे घच्। यद्वा, इन्द्रेण दृष्टम् इन्द्रियम्। यद्वा, इन्द्र आत्मा, तत्कृतेन शुभाशुभेन कर्मणा सृष्टम्। इन्द्रजुष्ट वा, आत्मना सेवितम्, तद्द्वारेण भोगोत्पत्ते। इन्द्रदत्तं वा, इन्द्रेण पूर्वकर्मणा वा अभ्युपदत्तम्। दृष्टजुष्ट- दत्तार्थेषु तृतीया समर्थात्। "दक्षिण पादमवनेनिजेऽस्मि- न्राष्ट्र इन्द्रियं दधामि (ऐ० ब्रा० ८, ५, ४)"—इति निगम.

(१५) वसु। रात्नाविमसु "वसौ"—इत्यत्र (३८पृ०) व्याख्यातम्। वस्ते आच्छादयति तिरोभावयति दारिद्र्यम्। "शुद्धं भुव॒ वसु॑नः पूर्व्यस्तुतिः (ऋ० सं० ८, १, ५, १)"—इति निगमः॥

(१६) रायः। 'रा दाने (अदा० प०)'। 'रातेर्डैः (उ० २, ६२)'। जस्। दीयतेऽर्थिभ्यः, तदेव प्राप्यते वा पूर्वकृतेन पुण्येन। "धनानूक्तः कुविदाद्दस्य रा॒यः (ऋ० सं० १, ३, १, १)"—इति निगमः॥

(१७) राधः। 'राध साध संसिद्धौ (स्वा० प०)'। असुन्। 'राध्नुवन्ति साध्नुवन्ति धर्मादीन् पुरुषार्थान्'—इति स्कन्दस्वामी। राध्यतेऽनेन धर्मादिरिति वा। राधिर्हिंसार्थोऽपि। हिनस्ति दारिद्र्यम्। "राधं इन्द्र वरे॑ण्यम् (ऋ० सं० १, १, १७, ५)"—"राध॒स्तन्नो॑ विदद्वसो (ऋ० सं० ४, २, १०, १)"—इति निगमौ॥

(१८) भोजनम्। 'भुज पालनाभ्यवहारयोः (रु० प०)'। ल्युट् 'कृत्यल्युटो बहुलम् (३, ३, ११३)'—इति। यद्वा, अभिमतार्थं भवति भुज्यते तद्धि, भुज्यन्तेऽनेन विषया इति वा, पाल्यतेऽनेन वा। "अस्मयुतामा भेग्रा भोजनानि (ऋ० सं० ३, ८, १८, ५)"—"मा नं प्रिया भोजनानि प्र मो॑षीः (ऋ० सं० १, ७, १८, ३)"—इति निगमौ॥

(१९) तना। 'तनु विस्तारे (त० प०)'। पचाद्यच् (३, १, १३४)। तनोति विस्तारयति त्रिवर्गसाधनं हि धनम्। तृतीयैकवचनस्य 'सुपां सुलुक् (७, १, ३९)'—इत्याकारः। "विश्वयन्तो तना गिरा (ऋ० सं० ६, ३, २५, १)"—"मा वो॑ मृत्यु तनाय काम् (ऋ० सं० १, ३, १८, २)"—इति निगमौ।

(२०) नृम्णम्। व्याख्यातं बलनामसु (१८१ पृ०)। नमति प्रह्वीकरोत्यर्थिभ्यः तद् वसु। "इस्ते दधानो नृम्णा

विश्वानि (ऋ० सं० १, ५, ११, २)"—इति निगमः॥

(२१) बन्धुः। 'बन्ध बन्धने (क्र्या० प०)'। "शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च'—इति उप्रत्ययः। बध्नात्यनेन भृत्यादीन्। यद्वा, बन्धुरिव बन्धुः। "अबन्धुना सुश्रवसोपजग्मुषः (ऋ० सं० १, ४, १६, ४)"—इति निगमः॥

(२२) मेधा। 'मिधृ मेधृ सङ्गमे च (भ्वा० उ०)' चकारात् हिंसामेधयोश्च। 'मिधिः सङ्गत्यर्थः'—इति माधवः। अङ्। सङ्गच्छतेऽनेन सर्वं सङ्गता, हिंस्यते वा तद्वान् चौरादिभिः 'घ्नन्ति चैवार्थकारणात्'—इति महाभारतम्। यद्वा, मतौ धीयते अर्जयितव्यं रक्षितव्यं दातव्यमिति धनवता बुद्धौ धनं धार्यते। तत्र मतिशब्द उपपदे धातोः 'घञर्थे कविधानम् (३, ३, ५८वा०)'—इति कः। पृषोदरादित्वात् (६, ३, १०९) मतिशब्दस्य मेभावः। "मेधाकारं विदथस्य प्रसाधनम् (ऋ० सं० ८, ४, २१, ३)"—इति निगमः॥

(२३) यशः। व्याख्यातमन्ननामसु (१००पृ०)। "उत त्या मे यशसा श्वेतनायै (ऋ० सं० २, १, १, ४)"—इति निगमः॥

(२४) ब्रह्म। व्याख्यातमन्ननामसु (१०६पृ०)। बर्हन्तेऽनेन धर्मादयः, बृंहकं वा भोगानाम्। "युष्माकं ब्रह्म पृतनासु सह्या (ऋ० सं० २, २, २२, ७)"—इति निगमः॥

(२५) द्रविणम्। व्याख्यातं बलनामसु (१८४पृ०)। रयिवदर्थः। "त वा यजन्त द्रविण समस्मै"—इति निगमः॥

(२६) श्रवः। व्याख्यातमन्ननामसु (१०१पृ०)। "पृक्षे पृथुश्रवो बृहत् (ऋ० सं० १, १, १८, २)"—"बृहच्छ्रवा असुरो बर्हणाकृतः (ऋ० सं० १, ४, १७, ५)—इति निगमौ॥

(२७) वृत्रम्। व्याख्यातं मेघनामसु (१९९पृ०)। आच्छादः

यति दारिद्र्यम्, आच्छाद्यते वा राजतः करादिभयात्। गत्यर्थं रयिवदर्थः। इत्री प्रज्ञावदर्थः। "वृत्रं पुरुकुत्साय रन्धीः (ऋ० सं० २, ५, १६, २)"—इति निगमः। अत्र स्कन्दस्वामिना 'वृत्र' धननाम'—इति व्याख्यातत्वात् केषुचित् कोशेषु दृश्यमानमपि "वित्तम्"—इति न पठनीयम् ॥

(२८) वृतम्। 'वृङ् सम्भक्तौ (क्र्या० प०)'। 'दुतनिभ्यां दीर्घश्च वा (उ० ३, ८७)'—इति चकारस्यानुक्तसमुच्चयार्थत्वात् क्तप्रत्ययः। सम्भज्यते सर्वैः। "वृतञ्चयः सद्दुरिर्विश्वारितः (ऋ० सं० २, ६, २७, ३)"—इति निगमः ॥

इत्यष्टाविंशतिरेव धननामानि ॥ १० ॥

**अघ्न्या (१)। उस्रा (२)। उस्रिया (३)। अही (४)। मही (५)। अदितिः (६)। इला (७)। जगती (८)। शक्करी (९)। इति नव गोनामानि ॥ ११ ॥**

अघ्न्या। 'अहन्तव्या भवतीत्यघघ्नीति वा (निरु० ११, ४३)'—इति भाष्यम्। अघस्य दुर्भिक्षादेर्हन्त्री वा अहन्तव्या। अत्र शब्दे नञि वा उपपदे हन्तेः 'अघ्न्यादयश्च (उ० ४, १०८)'—इति यत्प्रत्ययान्तं निपात्यते। "नहि मे अस्त्यघ्न्या (ऋ० सं० ६, ७, १२, ४)"—"अहि त्वर्णमघ्न्ये विश्वदानीं (ऋ० सं० २, ३, २१, ५)"—इति निगमौ ॥

(२) उस्रा। व्याख्यातं रश्मिनामसु (२८ पृ०)। वसति चोरादि हविरस्याम्। 'उस्रियेति गोनामोत्स्राविणोऽस्या भोगा उस्रेति च'—इति (निरु० ४, १९) भाष्यम्। 'उत्स्राविणोऽस्या भोगास्ते ऊर्द्धं सर्वन्ति गच्छन्ति चोरदधिनव-

अभूमीं[1] अभिमातिषाहः (ऋ० सं० ८, ३, १८, ४)"—
इति निगमौ ॥

(४) हृणीयते। 'हृणीङ् रोषे वैमनस्ये च' कण्ड्वादि.।
"पुनः प्रायच्छदहृणीयमानः (ऋ० सं० ८, ६, ७, २)"—
हृणीयमानो अप हिमदेषुः (ऋ० सं० ३, ८, १५, २)"—
इति निगमौ ॥

(५) भ्रीणाति। 'भ्री भये' क्र्यादिः परस्मैपदी। अनेकार्थत्वात् क्रुध्यतिकर्मा। एवमुत्तरत्रापि। "एनः कृण्वन्तमसुर भ्रीणन्ति (ऋ० स० २, ७, १०, २)"—इति निगमः ॥

(६) भ्रेषति। 'भ्रेषृ चलने' भ्वादिः स्वरितेत्। निगमोऽन्वेषणीयः ॥

(७) दोधति। भैरुक्तो धातुः। "इन्द्रो वृत्रस्य दोधतः (ऋ० स० १, ५, २८, ५)"—इति निगमः ॥

(८) वनुष्यति। 'वनुष्यतिर्हन्तिकर्मा (निरु० ५, २)'—इत्यत्र स्कन्दस्वामी—'वनोतेः कण्ड्वादिप्रक्षेपात् यक्प्रत्यय, तत्सन्नियोगेन च वनुभावो द्रष्टव्यः'—इति। निगमोऽन्वेषणीयः ॥

(९) कम्पते। 'कपि चलने' भ्वादिरात्मनेपदी। निगमोऽन्वेषणीयः ॥

(१०) भोजते। 'भुज कौटिल्ये' तुदादिः परस्मैपदी। 'छन्दस्युभयथा (३, ४, ११७)'—इत्यार्द्धधातुकत्वात् गुणः। व्यत्ययेनात्मनेपदम्। निगमोऽन्वेषणीयः ॥

इति दश क्रुध्यतिकर्माणः ॥ १२ ॥

हेळः (१)। हरः (२)। घृणिः (३)। त्यजः (४)। भामः (५)। एहः (६)। ह्वरः (७)।

तपुषी (८)। चूर्णिः (९)। मन्युः (१०)। व्यथिः (११)। इत्येकादश क्रोधनामानि ॥ १३ ॥

(१) हेलः। हेलतेः भावे असुन्। "देवस्य हेळोऽव यामि सीक्षाः (ऋ॰ सं॰ १, ४, १२, ४)"—इति निगमः ॥

(२) हरः। 'हृञ् हरणे (भू॰ उ॰)' असुन्। हरति कार्याकार्यविवेकं, ह्रियते वाऽनेन पुरुषः स्ववशम्, दुर्जयोऽन्तरः शत्रुः क्रोधः। निगमोऽन्वेषणीयः ॥

(३) घृणिः। ज्वलन्नामसु व्याख्यातम् (१३४पृ॰)। क्षरत्वनेन खेदादिः, दीप्यतेऽनेन वा, क्रुद्धोऽग्निरिव ज्वलति हि प्रसिद्धः। "आघृणे संसचावहै (ऋ॰ सं॰ ४, ८, २१, १)"—इति निगमः। 'मा ह्रणानस्य (ऋ॰ सं॰ १, २, १६, २)"—इत्यत्र भाष्ये 'हृणिरिति क्रोधनामसु पाठात् हरति क्रोधार्थोऽपि गम्यते'—इति स्कन्दस्वामी, तत् कथमिति विचिन्त्यम् ॥

(४) त्यजः। 'त्यज हानौ (भू॰ प॰)'। असुन्। त्यज्यते सत्पुरुषैः, त्यज्यन्तेऽनेन प्राणा इति वा, त्यज्यते वा स्वधर्मः। "क्रुद्धः पापं किन्न कुर्यात् क्रुद्धो हन्यात् गुरूनपि। क्रुद्धः परुषया वाचा नरः साधूनपि क्षिपेत्"—इति हि महाभारतम्। "मुहर्यिदस्मि त्यजसो वरूता (ऋ॰ सं॰ २, ४, ८, १)" —"किं देवेषु त्यज एनश्चकर्थ (ऋ॰ सं॰ ८, ३, १४, ६)" इति निगमौ ॥

(५) भामः। भामतेर्भावे घञ्। यद्वा 'भा दीप्तौ (अदा॰ प॰)'। 'अर्त्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन् (उ॰ १, १३७)'—इति मन्। दीप्यते तेन तद्वान्। "देवजुष्टोच्यते भामिने गीः (ऋ॰ सं॰ १, ५, २५, १)"—"स्वयम्भूर्भामो अभिमातिषाहः (ऋ॰ सं॰ ८, ३, १८, ४)"—इति निगमौ ॥

(६) एहः। 'इन हिंसागत्योः (अदा० प०)' असुन् 'नञि हन एह च (उ० ४, २१८),—इति नञुपपदे; यमान एहादेशो बाहुलकात् नञ्विनापि भवति। "स्ते हरिवो शुमिष्टो (ऋ० सं० ८, १, ३०, २)"—इति निगम॥

(७) ह्वरः। 'ह्वृ कौटिल्ये (भ्वा० प०)' चलितकर्मा च। असुन्। ह्वरति कुटिलो भवत्यनेन चलति वा।

(८) तपुषी।

(९) जूर्णिः। 'जूर्णिर्जवतेर्वा द्रवतेर्वा जीर्यतेर्वा'—इति भाष्यम् (निरु० ६, ४। गच्छत्यनेन दुःखं, लोकगर्ह्या वा, हिनस्ति परान् वा। निगमोऽन्वेषणीयः॥

(१०) मन्युः। 'मन ज्ञाने (तना० आ०)'। 'यजिमनि शुन्धिदसिजनिभ्यो युच् (उ० ३, १८)'—इति युच्। बाहुलकादनादेशाभावः। मन्यते ज्वाल्यत्वेन। यद्वा, मन्यतेर्दीप्तिकर्मणो युच्। दीप्यतेऽनेन तस्मात्। "न हि ते क्षत्रं न सहो न मन्युम् (ऋ० सं० १, २, १४, १)"—"मा भ्रातरं मन्यवे. (ऋ० सं० १, २, १६, २)"—इति निगमौ॥

(११) व्यथिः। 'व्यथ भयचलनयोः (भ्वा० आ०)' 'इन् सर्वधातुभ्यः (उ० ४, ११४)'—इति इन्। सज्जनः, चलति यानेन स्वधर्मात्। "एनमिर्भिरक्षमेः (ऋ० सं० ५, ५, १६, ७)"—"मक्षू माकिष्टे व्यथिरा दधीत् (ऋ० सं० २, ४, २१, २)"—इति च निगमौ॥

इत्येकादश क्रोधनामानि॥ १३॥

**वर्त्तते (१)। चर्यते (२)। लोटते (३)। लोठते (४)। स्यन्दते (५)। कसति (६)।**

(७)। स्यमति(८)। स्वनति (९)। खनति (१०)। खर्वति (११)। श्वोतति (१२)। ध्वंसति (१३)। वेनति (१४)। माष्टि (१५)। मुकुण्यति (१६)। ग्रवति (१७)। कालयति (१८)। पुंखयति (१९)। कण्टति (२०)। मिस्यति (२१)। मिसति (२२)। मिस्यति (२३)। प्रवते (२४)। स्रवते (२५)। च्यवते (२६)। कवते (२७)। गवते (२८)। नवते (२९)। चोदति (३०)। नर्चति (३१)। सर्चति (३२)। स्यर्चति (३३)। सर्चति (३४)। स्वच्छति (३५)। तुण्डोयति (३६)। चतति (३७)। अर्तति (३८)। गाति (३९)। दूर्यचति (४०)। सर्यति (४१)। त्सरति (४२)। रंहति (४३)। यतते (४४)। भमति (४५)। भजति (४६)। रर्वति (४७)। लर्गति (४८)। स्त्रियति (४९)। घमति (५०)। मिनाति (५१)। स्टर्वति (५२)। ऋणोति (५३)। स्वरति (५४)। सिसति (५५)। विर्पिष्टि (५६)। योपिष्टि (५७)। त्रिणाति (५८)। रीयते (५९)। रेजति (६०)। दृषगति (६१)। टूम्नोति (६२)। युध्यति (६३)। धन्वति (६४)। कर्म्पति (६५)। आर्ष्यति (६६)।

(६) एहः। 'हन हिंसागत्योः (अदा० प०)' अस्मात् 'नञि हन एह च (उ० ४, २१८)'—इति नञ्युपपदे। यमान एहादेशो बाहुलकात् नञ्‌विनापि भवति। "संस्ते एहिवो अभिष्टौ (ऋ० सं० ८, १, ३०, २)"—निगमः ॥

(७) ह्वरः। 'ह्वृ कौटिल्ये (भ्वा० प०)' अस्मिन्नर्थे च। असुन्। ह्वरति कुटिलो भवत्यनेन यस्ति वा।

(८) तपुषी।

(९) जूर्णिः। 'जूर्णिर्जवतेर्वा द्रवतेर्वा जीर्यतेर्वा'—इति भाष्यम् (निरु० ६, ४)। गच्छत्यनेन दुःखं, लोकगतो वा. हिनस्ति परान् वा। निगमोऽन्वेषणीयः ॥

(१०) मन्युः। 'मन ज्ञाने (तना० आ०)'। 'यजिमनिशुन्धिदसिजनिभ्यो युच् (उ० ३, २०)'—इति युच्। बाहुलकादनादेशाभावः। ज्ञायते ज्ञाप्यतेऽनेन। यद्वा, मन्यतेर्दीप्तिकर्मणो युच्। दीप्यतेऽनेन तद्वान्। "न हि ते क्षत्रं न सहो न मन्युम् (ऋ० सं० १, २, १४, १)"—"परा श्रृणात्व मन्यवे (ऋ० सं० १, २, १६, २)"—इति निगमौ ॥

(११) व्यथिः। 'व्यथ भयचलनयोः (भ्वा० आ०)' 'इन् सर्वधातुभ्यः (उ० ४, ११४)'—इति इन्। सञ्चनः, चलति यातेन स्वधर्मात्। "एतविभिरस्मै (ऋ० सं० ५, ५, १६, ७)"—"अश्नं माकिष्टे व्यथिरा दधर्षीत् (ऋ० सं० ३, ४, २२, ३)"—इति च निगमौ ॥

इत्येकादश क्रोधनामानि ॥ १३ ॥

वर्तते (१)। अयते (२)। लोटते (३)। लोठते (४)। स्यन्दते (५)। कसति (६)। सर्पति

(७)। स्यमति(८)। सवति (६)। संसति (१०)। स्रवति (११)। स्रोतति (१२)। ध्वंसति (१३)। वेनति (१४)। माष्टि (१५)। भुरण्यति (१६)। शवति (१७)। कालयति (१८)। प्रेलयति (१९)। करण्डति (२०)। पिस्यति (२१)। बिस्यति (२२)। मिस्यति (२३)। प्रवते (२४)। स्रवते (२५)। च्यवते (२६)। कवते (२७)। गवते (२८)। नवते (२९)। चोदति (३०)। नक्षति (३१)। सक्षति (३२)। व्यचति (३३)। सचति (३४)। अटकृति (३५)। तुरीयति (३६)। चतति (३७)। अतति (३८)। गाति (३९)। इयक्षति (४०)। सश्चति (४१)। त्सरति (४२)। रंहति (४३)। यतते (४४)। भ्रमति (४५)। भजति (४६)। रजति (४७)। लजति (४८)। क्षियति (४९)। धमति (५०)। मिनाति (५१)। ऋण्वति (५२)। ऋणोति (५३)। स्वरति (५४)। सिसर्ति (५५)। विविष्टि (५६)। योविष्टि (५७)। रिणाति (५८)। रीयते (५९)। रेजति (६०)। दध्यति (६१)। दम्नोति (६२)। युध्यति (६३)। धन्वति (६४)। अरुषति (६५)। आर्ध्यति (६६)

(७) । स्यमति (८) । स्वर्वति (९) । स्रंसति (१०) । ध्रर्वति (११) । श्चोतति (१२) । ध्वंसति (१३) । वेनति (१४) । माष्टि (१५) । मुर्च्छति (१६) । धुर्वति (१७) । कालयति (१८) । प्रेलयति (१९) । कण्टति (२०) । पिस्सति (२१) । बिस्सति (२२) । मिस्सति (२३) । प्रर्वते (२४) । स्रर्वते (२५) । ध्यर्वते (२६) । कर्वते (२७) । गर्वते (२८) । नर्वते (२९) । च्चोदति (३०) । नर्चति (३१) । सर्चति (३२) । व्यर्चति (३३) । सर्चति (३४) । ऋच्छति (३५) । तुट्टोयति (३६) । चर्तति (३७) । घर्तति (३८) । गाति (३९) । द्रूयच्छति (४०) । सश्चति (४१) । त्सरति (४२) । रंहति (४३) । यतते (४४) । भमति (४५) । भनति (४६) । रजति (४७) । लगति (४८) । चियति (४९) । घसति (५०) । मिनाति (५१) । ऋण्वति (५२) । ऋणोति (५३) । खरति (५४) । सिसर्ति (५५) । विपिष्टि (५६) । योपिष्टि (५७) । रिणाति (५८) । रीयते (५९) । रेजति (६०) । दघ्नति (६१) । द्रूणोति (६२) । युध्यति (६३) । धन्वति (६४) । धर्षति (६५) । आर्यति (६६) । विं

(६४) धन्वति। 'धिवि धवि गत्यर्थौ (भ्वा० प०)'। "परि सोम प्र धन्वा स्वस्तये (ऋ० सं० ७, २, २३, ५)"—"न यस्य द्यावापृथिवी न धन्व (ऋ० सं० ८, ५, १५, १)"—इति च निगमौ॥

(६५) अक्ष्णति। नैरुक्तधातुः। "वि भूमन्नक्ष्णुषं सिषेध (ऋ० सं० १, ३, ८, ४)"—"स्वसारु ध्यावो मदथो मधुषन (ऋ० सं० १, ५, १५, १)"—"प्रतीची रश्मिरक्ष्णोर् जागृम् (ऋ० सं० १, ४, १८, १०)"—इत्यादिषु स्कन्दस्वामि भाष्ये—'अक्ष्णतिर्गतिकर्मा'—इति दृष्टम्। "युक्ष्वा हि वृषभ संयु चर्षणीम् (ऋ० सं० १, ८, ११, २)"—इत्यादौ द्वियो प्रदेशयो 'अक्ष्णतिर्गतिकर्मा'—इत्यपि। उभयथा दृष्टमपि, बहुषु प्रदेशेषु दर्शनात् अक्ष्णतीति पाठो युक्तः।

(६६) आर्यति। "आमाय त्वि कृतेन् कर्त्वेन च (ऋ० सं० ८, १, ३, २)"—"तमिद्गृहीत्वेराय त्वि (ऋ० सं० ६, १, २१, ६)"—इति च निगमौ॥

(६७) डीयते। 'षिञ् बन्धने' स्वादि क्र्यादिश्च। व्यत्ययेन श्यन्। "डीयते"—इति पाठान्तरम्। तदा 'डीङ् विहायसा गतौ' दिवादि। निगमदर्शनान्निर्णय॥

(६८) तक्षति। 'तक हसने (भ्वा० प०)'। "य, सूर्यस्या परितक्म्ये धने (ऋ० सं० १, २, ३३, १)"—"यम्योन्याभ्य स्तर्गमतक्ते"—इति निगमौ॥

(६९) दीयति। 'दीङ् क्षये दिवादि। व्यत्ययेन परस्मै पदम्। "श्येनो न दीयन्नन्वे'ति पाथः (ऋ० सं० ५, ५, २५, ५)"—इति निगमः।

(७०) ईषति। "ईष गतिहिंसादानेषु' आत्मनेपदी, व्यत्ययेन परस्मैपदम्। "उत्तानो'मा ईषन्ते इच्छावान् (ऋ०

ऋ० ४, ४, २७, २)"—इति निगमः । बहुच 'ईषतीति गतिकर्मसु पाठात्'—इति स्कन्दस्वामी ॥

(७१) कणति । 'कण गतौ' । "युवामङ्गांश्च स्तुयमनीकणात् (ऋ० सं० ३, ७, १४, ४)"—इति निगमः ॥

(७२) हनति । 'हन हिंसागत्योः' अदादिः । 'बहुलं छन्दसि (२, ४, ७३)'—इति शपो लुग् न भवति । "मं यद्नेम्य सुत्युभिर्जनास् (ऋ० सं० ५, ४, २६, २)"—इति निगमः ॥

(७३) मर्दति । 'मर्द गतौ याचने च' ॥

(७४) मर्दति । 'मृद मर्दने' । व्यत्ययेन परस्मैपदम् ॥

(७५) सर्स्रते । 'सृ सृ गतौ' जुहोत्यादिः परस्मैपदी । व्यत्ययेनात्मनेपदम् । पृषोदरादित्वात् (६, ३, १०८) अभ्यासस्य रुगागमः । "प्र सर्स्राते दीर्घमायुः प्रयक्षे (ऋ० सं० १, १, १, १)"—"आतेन आत मति स प्र सर्स्रते (ऋ० सं० २, ७, ४, १)"—इति निगमौ ॥

(७६) नसते । 'नस कौटिल्ये' आत्मनेपदी । "भुजोर्य्यंरं ते नासिकाभ्याम् (ऋ० सं० ८, ८, २१, १)"—इति निगमः ॥

(७७) ह्वर्यति । 'ह्वर्य गतिकान्त्योः' ॥

(७८) इयर्त्ति । 'ऋ सृ गतौ' जुहोत्यादिः । 'अर्त्तिपिपर्त्योश्च (७, ४, ७७)' । "कृष्टीरियर्त्ति शंसा (ऋ० सं० १, १, १४, ३)"—इति निगमः ॥

(७९) ईर्त्ते । 'ईर गतौ कम्पने च' अदादिरात्मनेपदी । "मरुतासः प्रसर्व साकमीरते (ऋ० सं० ७, २, २२, १)"—इति निगमः ।

(८०) ईङ्खते । 'ईखि गतौ' (भू०) आत्मनेपदी । "य ईङ्खयन्ति पर्वतान् (ऋ० सं० १, १, २७, २)"—इति

निगमः। अत्र 'ईङ्गतिर्गतिकर्मा'—इति स्कन्दस्वामिभाष्यम् ।

(८१) अयति। (८२) आवति। पती नैरुक्तधातू ॥

(८३) गन्ति। 'गमॢ गतौ (भू० प०)'। व्यत्ययेन शपो लुक्। "भक्तिरोमिः वार्गन्ति युञ्जिर्बैभिः (ऋ० सं० ७, ३, १४, ५)"—इति निगमः ॥

(८४) आगनीगन्ति। 'गमॢ गतौ (भू० प०)'। दाधर्ति-दर्धर्ति (७, ४, ६५) इत्यादिना आङ्पूर्वस्य गमेर्लिटि अभ्यासस्य चुत्वाभावो नीगागमश्च निपात्यते। यङ्लुगन्ताद्वा लटि निपातनाद्रूपसिद्धिः। "वुवन्ती वेदा गनीगन्ति कर्णम् (ऋ० सं० ५, १, १८, ३)"—इति निगमः ॥

(८५) जङ्घन्ति। गमेर्यङ्लुकि 'जुगतोऽजुगतासिताभ्यस्त (७, ४, ८५)'—इति नुकि च रूपम्। "प्रातर्मक्षू धियावसुर्जगम्यात् (ऋ० सं० १, ४, २४, ४)"—अत्र 'जङ्घन्ति गतिकर्मैव एतद्रूपम्'—इति स्कन्दस्वामिभाष्यम् ।

(८६) जिन्वति। 'इवि जिवि धिवि प्रीणनार्थाः (भू० प०)' ॥

(८७) जषति। 'जषु मोक्षणे' दिवादिः (प०)। व्यत्ययेन शप् ।

(८८) गमति। 'गमॢ गतौ (भू० प०)'। लेट्। लेटोऽडाटौ (३, ४, ९४)'। बाहुलकात् 'सिब्बहुलं लेटि (३, १, ३४)'—इति सिप् न भवति। यद्वा, 'सर्वे विधयश्छन्दसि विकल्प्यन्ते'—इति इत्वाभावः। "त वा गमन्तु न इह शृणुवन्तु (ऋ० सं० ४, ८, ५, १)"—इति निगमः ॥

(८९) ध्रति। (९०) भाति। (९१) ध्रयति। नैरुक्ताः ॥

(९२) वहते। 'वह प्रापणे' (भू० उ०) स्वरितेत्। "वैश्वा-

भुरं मातरिश्वा परावतः (ऋ० सं० ४, ५, १०, ४)"—इत्यत्र 'परापूर्वस्य वहतेर्गतिकर्मणः परावच्छन्दः'—इति स्कन्दस्वामी ॥

(८३) रथर्यति । नैरुक्तधातुः । 'रंहतेर्वा रथो रंहणं गमनम् इच्छतीति क्यचि रथीयतीति प्राप्ते रेफउपजन ईडाभावश्च पृषोदरादित्वात् (६, ३, १०९)'—इति स्कन्दस्वामी । "एष देवो रथर्यति (ऋ० सं० ६, ७, २०, ५)"—इति निगमः । माधवभाष्य द्रष्टव्यम् ॥

(९०) जेहते । 'जेह जेह वाह प्रयत्ने' आत्मनेपदी । "ये सानुपुर्देवान् जेहमाना (ऋ० सं० ७, ६, १८, ४)"—इति निगमः । 'जो हाङ् गतावित्यस्य रूपम्'—इति स्कन्दस्वामी ॥

(९५) ध्वाकति । (९६) जुम्पति । (९७) पाति । (९८) याति । (९९) याति ॥

(१००) इयति ।, 'इष गतौ' दिवादिः (प०) । व्यत्ययेन शः । "तवाश्वमुमियेषु यामं यंसन् (ऋ० सं० ५, १, २१, १)" —इति निगमः ॥ 'इषुरिषतेर्गतिकर्मणः (९, १८)'—इति निरुक्तम् ॥

(१०१) द्राति । 'द्रा कुत्सितायां गतौ' अदादि (प० । वन यवो मृतयो दक्ष दद्रुः (ऋ० सं० १, ५, ३, १)"—इति निगमः ॥

(१०२) द्रुणति । नैरुक्तधातुः ॥

(१०३) एजति । 'एजृ कम्पने (भू० प०)' । "यथेर्ने पृथिवीरजति (ऋ० सं० १, १, १९, २)"—"यथा समुद्र एजति (ऋ० स ४, ४, २०, ४)"—इति निगमो ॥

(१०४) जमति । 'जमु अदने (भू० प०)' । "न जामये

तान्वो दिवद्ध मारैक (ऋ० सं० १, २, ५, २)"—इति निगमः। 'आमिर्जमतेर्गतिकर्मणः'—इति स्कन्दस्वामी॥

(१०५) जवति। 'जु गतौ'—इति क्षीरस्वामी। "न पातव इन्द्र जुजुवुं नः"—"विपाट् शुतुद्री पयसा जवेते (ऋ० सं० ३, २, १२, १)"—इति निगमौ॥

(१०६) वञ्चति। 'वञ्चु गतौ (भू० प०)'। "अमी वञ्चते परिवञ्चते (य० वा० सं० १६, २१)"—इति निगमः॥

(१०७) धनिति। 'ध्रस प्राथने, धन च (धदा० प०)'। "धन मातर्यालमिति"—इति निगमः। 'धनितिर्गतिकर्मा'—इति माधवः॥

(१०८) पवते। 'पूङ् पवने' "मेन्द्राद्दूते पवते धाम् किञ्चन (ऋ० सं० ७, २, २२, १)"—"सख्य इंद्राय पविमिन्द्र तिग्मम्"—इति निगमौ॥

(१०९) हन्ति। 'हन हिंसागत्योः' अदादिः (प०)। "नि शेर्म इच्छिद्धत्यग्रा (ऋ० सं० १, १, १५, २)"—आन्मु वज्र मधुमानी जघान (ऋ० सं० १, २, ३०, २)"—इति निगमौ॥

(११०) सेधति। 'षिधु गत्याम् (भू० प०)'। "सेधतु' द्वेषो भवंत सचा सुर्वा (ऋ० सं० १, ३, ५, ६)"—इति निगमः॥

(१११) मगन्। 'गमॢ गतौ (भू० प०)'। लुङि लिपि चु: 'मन्ते घस (२, ४, ८०)'—इति लुकि, 'इतश्च (३, ४, ८७)'—'संयोगान्तलोप. (८, २, २३)' 'मोनोधातोः (८, २, ६४)'—इति मकारस्य नकारः। ग्रहामामन् प्रथमजा ऋतस्य (ऋ० सं० २, १, २१, २)"—इति निगमः॥

(११२) भजगन्। गमेर्लुङि 'बहुलं छन्दसि (२, ४,

७३ )'—इति अपः श्नुः । पूर्ववत्स्वत्वम् ( ८, २, ६४ ) । "यथा-तुरञ्जगन्नपः ( ऋ० सं० ३, १, ५, २ )"—इति निगमः ॥

(११३) जिगाति । 'गा स्तुतौ ( अदा० प० )' । छन्दसि जुहोत्यादिः । 'अर्त्तिपिपर्त्त्योश्च ( ७, ४, ७७ ) 'बहुलं छन्दसि ( ७, ४, ७८ )'—इति अभ्यासस्येत्वम् । "धेना जिगाति दाशुषे ( ऋ० सं० १, १, ३, ३ )"—इति निगमः । 'जगतीति पाठान्तरम्'—इति स्कन्दस्वामिभाष्यम् ॥

(११४) पतति । 'पत्लृ गतौ ( भू० प० )' । "गोभिः सन्नद्धा पतति प्रसूता ( ऋ० सं० ५, १, २१, १ )"—इति निगमः ॥

(११५) इन्वति । 'इवि गतौ ( भू० प० )' । "देवीर्द्वारो इन्वतीर्विश्वमिन्वा (य० वा० सं० २८, ३०)"—इति निगम ॥

(११६) क्रमति । 'क्रम इत्म मीत्र गतौ ( भू० प० )' । "प्र चन्द्रमास्तिरते दीर्घमायुः ( ऋ० सं० ८, ३, २३, ४ )'—इति निगमः । 'चन्द्रमाश्चाय क्रमति'—इति भाष्यम् ( निरु० ११, ५ ) । 'क्रमतिर्गतिकर्मा'—इति स्कन्दस्वामी ॥

(११७) द्रवति । 'द्रु द्रु गतौ ( भू० प० )' । "यत्रा नरः स म च वि च द्रवन्ति ( ऋ० सं० ५, १, २१, १ )"—इति निगमः ॥

(११८) वेति । 'वी गतिप्रजननकान्त्यसनखादनेषु' अदादि' "अपामीवां बाधते वेति सूर्यम्"—"इदं न मे लोकेती (ऋ०, सं० १, ४, ४, १ )"—इति निगमौ ॥

(११९) इन्तात् । इन्तेर्लोटि तातङि रूपम् । "इय-न्तात्"—इति केचित् पठन्ति । तत्र 'इय गतौ ( भू० प० )' —इत्यस्य तातङि तकार उपजनः ॥

(१२०) एति । 'इ गतौ' अदादिः ( प० ) । "विद्वाक्

यज्ञन्दमा नशीमेति (ऋ० म० १, २, १४, ५)"—इति निगम ।

(१२१) जगायात्। 'गा स्तुतौ' जुहोत्यादिः (प०)। लिङि 'छन्दस्युभयथा (३, ४, ११७)'—इत्यार्धधातुकत्वे न 'ई हल्यघोः (६, ४, ११३)'—इतीत्वं न भवति। "स्वाधिर्दु पुनरस्तं जगायात् (ऋ० म० ७, ७, २०, १)"—इति निगम।

(१२२) चयथु। 'ट्वितोऽथुच् (३, ३, ८९)'—इति बाहुलकाच्चयतेरथुच् भवति॥

इति द्वाविंशशतं गतिकर्माणः॥ १४॥

नु (१)। मक्षु (२)। द्रवत् (३)। ओषम् (४)। जीराः (५)। जूर्णिः (६)। शूर्ताः (७)। शूघनासः (८)। शीभम् (९)। तृपु (१०)। तूर्यम् (११)। तूर्णिः (१२)। अजिरम् (१३)। भुरण्युः (१४)। शु (१५)। आशु (१६)। प्राशुः (१७)। तूतुजिः (१८)। तूतुजानः (१९)। तुज्यमानासः (२०)। अज्राः (२१)। साचिवित् (२२)। द्युगत् (२३)। ताजत् (२४)। तरणिः (२५)। वातरंहाः (२६)। इति षड्विंशतिः क्षिप्रनामानि॥ १५॥

'क्षिप्रनामान्युत्तराणि षड्विंशतिः (निरु० ३, ९)'—इत्यत्र भाष्ये 'गुणस्य चैतानीति क्षिप्रस्य तद्वतो वा नामधेयानि। तथाच वक्ष्यति 'भुरण्यु' 'शकुनि'—इति स्कन्दस्वामी। गुणश्च

चिरकालविशिष्टा स्वल्पकालविशिष्टा वा क्रिया। तत्कर्त्तरि कर्त्तुरल्पकालविशिष्टत्वञ्च तथाविधक्रियाकर्त्तृत्वात्क्रियाद्वारकम्। तत्र 'मक्षु' 'क्षुद्रि' इत्यादिषु क्रियाविशेषेण वा क्रियारूपस्तद्वान्। निकृष्टगुणनामधेयोदाहरणानि पुनरन्वेषणीयानि। केचित्तु यद्यपि गुणशब्दो व्यवच्छेदकमात्रवचनतया द्रव्य कर्त्तृविशेषणभूतक्रियालक्षणा व्यवच्छेदकविशेषे वर्त्तते निकृष्टा गुणमात्रवाचिनि गम्यादी लभ्या, तथापि सत्वशब्दस्य द्रव्यवचनत्वे स्वारस्यात् क्रियायाश्चाद्रव्यत्वात् क्रियाया इव द्रव्यस्यापि नामधेयानि'—इत्याहुः। इदानीं क्रियाविशेषणानि गुणनामधेयोदाहरणानि 'जीराः' 'अजिरम्' इत्यादीनि॥

(१) नु। निपातोऽयम्। "इन्द्रस्य नु वीर्याणि प्रवोचम् (ऋ० सं० १, २, ३६, १)"—इति निगमः॥

(२) मक्षु। 'टु मस्जो शुद्धौ (तु० प०)'। 'मस्जीषोक्षुक्' इति भौजसूत्रेण सुकप्रत्ययः। संयोगादिलोपः। अल्पर्थितप्रर्यन्त मस्जी। क्रियायाः पापतो वा मस्ययनि चिरकालमिति। "मक्षु क्षणु हि गोजितो नः"—इति निगमः॥

(३) द्रवत्। 'द्रु गतौ (भू० प०)'। 'संश्चत्रहम्पद्वेहत् (उ० २, ७८)'—इति बाहुलकात् अतिप्रत्ययान्तो निपात्यते। द्रवत्यनेन। "द्रवत्याणौ शुभस्पती (ऋ० सं० १, १, ५, १)—इति निगमो॥

(४) ओषम्। निपातोऽयम्। "ओषमित् पृथिवीमहम् (ऋ० सं० ८, ६, २७, ४)"—"ओषुः पात्र न शोचिषा (ऋ० सं० २, ४, १८, ३)"—इति निगमौ। 'अन्तोदात्तो निपातः आद्यस्थाने चाद्युदात्तता'—इति हि माधवः॥

(५) जोराः । अवतिर्गतिकर्मा । 'जोरी च (उ० २, २५)' —इति ईकप्रत्यय ईकारस्यान्तादेशः । जस् । "जोरा पविरथी विवः (ऋ० सं० ७, २, ११, ५)"—"जोरं दूतममर्त्यम् (ऋ० सं० १, २, ३, ३०, ११)"—इति निगमौ ॥

(६) जूर्णि. । व्याख्यातं क्रोधनामसु (१८६पृ०) । निगमोऽन्वेषणीयः ॥

(७) शूर्ताः । 'सातम्रातसुत'—इत्यादि औजसूत्रे चादिशब्देन शृणातेधातोः क्तप्रत्ययान्तो निपात्यते । शृणाति फललाभम् । "त्वया शूर्ता वहमाना अपत्यम् (ऋ० सं० २, ४, १७, १)"—इति निगमः । 'शूर्ताः क्षिप्रास्त्वरमाणा.'—इति भट्टभास्करमिश्राः ॥

(८) शुघनासः । शु शब्दे उपपदे हन्तेः 'युग् बहुलम् (उ० २, ७४)'—इति युचि बाहुलकात् कुत्वं चिलोपश्च निपात्यते दीर्घश्च । शीघ्रमागच्छत्यनेन क्रियाफलम् । तस्मात् असोऽसुक् । "श्येनो इव ध्राजमे शुघनासः (य० वा० सं० १९, ८५)"—इति निगमः ।"शुघनासः क्षिप्रगमनाः'—इत्युवटः ॥

(९) शीभम् । 'शीभ कत्थने (भू० आ०)' । घञ् । शीभतेऽनेन तद्वान् । "प्रयांतु शीभमाशवः (ऋ० सं० १, ३, १४, ४)"—"भद्रवर्णाः पृणक्षं यात शीभम् (ऋ० सं० ३, २, १४, २)"—इति निगमौ ॥

(१०) तृष्णु । 'ञि त्वरा सम्भ्रमे (भू० आ०)' । 'त्रसिगृधिधृषिक्षिपेः क्नुः'—इति बाहुलकात् णुकप्रत्ययो धातोस्तृभावश्च । त्वरत्वेन फलसाधनम्, त्वरतेऽनेन फलमागन्तुम् । "तृष्ण्विभ्रष्टस्तिष्ठति (ऋ० सं० १, ४, २, २)"—"तृष्वीयनुपसिति द्रुणाव (ऋ० सं० ३, ४, २२, १)"—इति निगमौ ॥

(११) तूयम् । व्याख्यातमुदकनामसु (१०६पृ०) । वर्ह-

तेऽनेन तस्य व्याख्या। "प्रपित्वे न. प्रपित्वे तूतुमा गहि (ऋ० सं० ५, ७, ३०, ३)"—इति निगमः॥

(१२) तूर्णि। 'जि त्वरा सम्भ्रमे'। 'वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित् (उ० ४, ५१)'—इति निप्रत्ययः। त्वरतेऽनेन फलनागन्तुम्। "अपो यत्तूर्णिश्चरति प्रजानन् (ऋ० सं० ८, ४, २१, १)"—"सुतमा गन्त तूर्णयः (ऋ० सं० १, १, ६, २)"—इति निगमौ॥

(१३) अजिरम्। 'अज गतिक्षेपणयोः (भू० प०)'। 'अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिरा (उ० १, ५३)'—इति किरच्प्रत्ययो जिभावश्च निपात्यते। क्षिपति फलोत्पत्तिमाशुम्। "त्वा मो'लर्ते अजिर दत्याय (ऋ० सं० ५, २, १४, २)"—इति निगम॥

(१४) भुरण्युः। भुरण्यतिर्गतिकर्मा। 'मृगय्वादयश्च (उ० १, ३६)'—इति क्युप्रत्यय। "श्येना पावक चर्षता (ऋ० सं० १, ४, ८, १)"—इत्यत्र स्कन्दस्वामिना 'भुरण्यतिः शीघ्रकरणार्थे'—इति प्रतिपादितम्। तत्र 'भुरण्यशब्दस्य शीघ्रविशिष्टगमनादिक्रियाकर्त्तरि सत्यन्येव इति। शीर्षाभुपस्थादिर्य भुरण्यु (ऋ० सं० १, ५, १२, १)"—इति निगम। 'भुरण्यतेर्गतिकर्मण इद, क्षिप्रनाम वा'—इति स्कन्दस्वामिभाष्यम्॥

(१५) शु। निपात। "श्याने वस्तो बोधयितारमब्रवीत् (ऋ० सं० २, ३, ६, २)"—इति निगम। 'शु आशुगामी'—इति निरुक्तम् (६, १)॥

(१६) आशुः। 'अशू व्याप्तौ'। 'कृवापाजिमिस्वदिसाध्यशूभ्य उण् (उ० १, १)। व्याप्नोत्यनेन नरस्तैलवस्त्रेन व्याप्यम्। 'आशु इद क्षिप्रनाम क्षिप्रगामी'—इति स्कन्दस्वामि

(३)। तुर्वशे (४)। अस्तमीके (५)। आके (६)। उपाके (७)। अर्वाके (८)। अन्तमानाम् (९)। अवमे (१०)। उपमे (११)। इत्येकादशान्तिकनामानि॥ १६॥

(१) तळित। 'तड आघाते' चुरादिः। 'ताडेर्णिलुक् च (उ० १, ९५)'—इतीतिप्रत्ययः। "दूरे चित् सन्तळिदिवाति रोचसे (ऋ० सं० १, ६, ३१, २)"—"या नो दूदे तळितो य अरातयः (ऋ० सं० २, ६, १०, ४)"—इति निगमौ॥

(२) आसात्। 'आस उपवेशने (अदा० आ०)'। 'पुंसि सञ्ज्ञायां घः प्रायेण (३, ३, ११८)'। अन्तिके आसते। "आ तू न इन्द्रो दूरादा न आसात् (ऋ० सं० ३, ६, ३, १)"—"स नो दूराच्चासाच्च (ऋ० सं० १, २, २२, ३)"—इति निगमौ। 'आसादित्यन्तिकनाम'—इति स्कन्दस्वामिभाष्यम्। "आमा-दासे'—इति माधवः॥

(३) अम्बरम्। 'कदराद्यश्च'—इत्यरन्प्रत्ययो मुगागमश्च निपात्यते। प्राप्यते आसन्नम्। "यन्नासत्या परावति यद्वा स्थो अध्यम्बरे (ऋ० सं० ५, ८, २०, ४)"—इति निगमः। स्कन्दस्वामिव्यतिरिक्तभाष्यकारमते। स्कन्दस्वामी तु 'अन्तरिक्ष नाम'—इति॥

(४) तुर्वशे। व्याख्यातं मनुष्यनामसु (१५२ पृ०)। तूर्वे व्याप्यते अन्तिकम्। "यन्नासत्या परावति यद्वा स्थो अधि तुर्वशे (ऋ० सं० १, ४, २, २)"—इति निगमः॥

(५) अस्तमीके। अस्तशब्दे उपपदे माते 'अलीकादयश्च (उ० सं० ४, २५)'—इति ईकन्प्रत्ययो धातोर्लोपश्च निपा-

न्यते। अस्तं प्राप्यते अस्मिन्, अन्तिकस्थं हि नाप्यते। "सचस्व नः पराक आ सचस्वास्तमीक आ (ऋ० सं० २, ६, १०, ४)" —इति निगमः॥

(६) आके। (७) उपाके। (८) अर्वाके। आङुपार्वच्छब्देषूपपदेषु क्रामतेः 'बलाकादयश्च (उ० ४, १४)'—इति आकप्रत्ययो धातोर्लोपश्च निपात्यते। अर्वाक् गन्ता। आक्रम्यते उपक्रम्यते गन्तृभिः। क्रम्यते च ह्यासन्नम्। "आके नियातो अहभिर्दविद्युतः (ऋ० सं० ३, ७, २१, ६)"—"सिध्यौ कृणी उपाक (ऋ० सं० १, २, २३, १)"—"यत्रासत्या पराके अर्वाके अस्ति भेषजम् (ऋ० सं० ५, ८, २२,५)"—इति च निगमः॥

(९) अन्तमानाम्। अन्तिकशब्दात्तमपि 'तमोदश'—इति तादिलोपः। अन्तिकतममन्तिमम्। "अर्धान्ते अन्तमानाम् (ऋ० सं० १, १, ७, ३)"—"शिक्षा सखो अन्तमस्य (ऋ० सं० १, २, २२, ५)"—इति निगमौ। आद्युदात्तमन्तिकम्, अन्तोदात्तन्तु तृतीयाबहुवचनम्, "अतो युयमन्तमेभिर्युजानाः (ऋ० सं० २, ३, २४, ५)"—इति माधवः॥

(१०) अवमे। 'अव रक्षणादिषु (भू० प०)'। 'अवेश्च वा इति मप्रत्ययः। गम्यते ह्यासन्नम्। "अवमे वङ्क्नामवमाय सख्ये (ऋ० सं० २, ७, २४, २)"—"मध्यमस्यामवमस्यामुत स्थः (ऋ० सं० १, ७, २७, ५)"—इति निगमौ॥

(११) उपमे। उपपूर्वात् मिनातेः 'अन्येष्वपि दृश्यते (३, २, १०१)'—इति डः। उपच्छिद्यते ह्यन्तिकम्। "उपमे रोचने दिवः (ऋ० सं० ६, ६, १, ४)"—"सुख्याद्दुल्यसुपमश्वर्याम् (ऋ० सं० १, ४, २७, ३)"—इति निगमौ।

इत्येकादशान्तिकनामानि॥ १६॥

रणः (१)। विवाक् (२)। विखादः (३)। नदनुः (४)। भरे (५)। आक्रन्दे (६)। आहवे (७)। आजौ (८)। पृतनाज्यम् (९)। अभीके (१०)। समीके (११)। ममसत्यम् (१२)। नेमधिता (१३)। सङ्काः (१४)। समितिः (१५)। समनम् (१६)। मीळ्हे (१७)। पृतनाः (१८)। स्पृधः (१९)। मृधः (२०)। पृत्सु (२१)। समत्सु (२२)। समर्ये (२३)। समरणे (२४)। समोहे (२५)। समिथे (२६)। सङ्ख्ये (२७)। सङ्गे (२८)। संयुगे (२९)। सङ्गथे (३०)। सङ्गमे (३१)। वृत्रतूर्ये (३२)। पृक्षे (३३)। आणौ (३४)। शूरसातौ (३५)। वाजसातौ (३६)। समनीके (३७)। खले (३८)। खजे (३९)। पौंस्ये (४०)। महाधने (४१)। वाजे (४२)। अज्म (४३)। सद्म (४४)। संयत् (४५)। संवतः (४६)। इति षट्चत्वारिंशत् संग्रामनामानि ॥ १७ ॥

(१) रण। 'रण रण क्वण शब्दार्थाः (भू० प०)'। 'वमि रणोरुपसंख्यानम् (३, ३, ५८ वा०)'—इत्यप्। 'रणन्ति दुन्दुभयोऽत्र योधा वा परस्परं शब्दायन्ते। यद्वा, रमति

'रास्नासास्नास्थूणावीणाः (उ० ३, १३)'—इत्यादिना नप्रत्ययो मकारलोपश्च निपात्यते। रमणीयो हि संग्रामो विचित्रकर्माधिष्ठानत्वात्। "मरुत्वाँ इन्द्र वृषभो रणाय (ऋ० सं० ३, ३, ११, १)"—इति निगमः॥

(२) विवाक्। विविधा विरुद्धा वाचो यत्र योधानाम्। "हवन्त उ त्वा हव्यं विवाचि (ऋ० सं० ५, ३, १४, २)"—इति निगमः॥

(३) विखादे। 'खद स्थैर्ये हिंसायाञ्च (भू० प०)'। विशिष्टं स्थैर्यमत्र शूराणां हिंसनं वा। "न विखादे मस्ति सुध्व स्तुतं भरेम्। (ऋ० सं० ७, ८, १४, ४)"—इति निगमः॥

(४) नदनु। 'णद अव्यक्ते शब्दे (भू० प०)'। 'अनुङ् नदेश्च (उ० ३, ४८)'—इति चानुङ्प्रत्ययः। "यदा कृणोषि नदनुं समूहसि (ऋ० सं० ६, २, ३, ४)"—इति निगमः॥

(५) भरे। 'डु भृञ् धारणपोषणयोः (जु० उ०)'। 'नन्दिग्रहिपचादिभ्यः (३, १, १३४)' तत्र गणपाठः—'पच-वच-वप वद-लप तज-भराः'—इति। विभर्त्ति पोषयति सुभटानां धैर्यं यशो वा। यद्वा, 'पुंसि संज्ञायां घः (३, ३, ११८)'। बिभ्रत्यनेन जयलक्ष्मीं योधाः। उभयथापि वृषादेराकृतिगणत्वादाद्युदात्तत्वम्। यद्वा, 'भृ भर्त्सने क्र्यादिः स्वादिश्च'। भर्त्स्यन्ते हि तत्र शत्रवः। हरतेर्वा भः। ह्रियन्ते हि तत्र योधना मायूंषि धनानि च। 'हृग्रहोर्भश्छन्दसि (३, १, ८४ वा०)'। "अस्मिन् भरे नृतमं वाजसातौ (ऋ० सं० ३, २, ३, ७)"—"अनु क्रोशन्ति क्षितयो भरेषु (ऋ० सं० ३, ७, ११, ५)"—इति निगमौ॥

(६) आक्रन्दे। 'कदि क्रदि क्लदि आह्वाने रोदने च

(भू० प०)'। क्रन्दन्त्याह्वयन्तेऽन्योन्यमत्र, क्रन्दन्ति वानेन बन्धुविनाशहेतुत्वात्। निगमोऽन्वेषणीयः॥

(७) आहवे। 'ह्वेञ् स्पर्धायाम् (भू० उ०)'। 'आङि युद्धे (३, ३, ७३)'—इत्यप्। "बहुलं छन्दसि (६, १, ३४)"—इति सम्प्रसारणञ्च। आह्वयन्तेऽत्र परस्परं स्पर्धया योधाः। "न आयुन संहत आहवेषु (ऋ० सं० ४, ७, १०, १)"—इति निगमः॥

(८) आजौ। 'अज गतिक्षेपणयोः (भू० प०)'। 'अज-तिभ्याञ्च (उ० ४, १३१)'—इति इण्प्रत्ययः। बाहुलकाद् वीभावाभावः। अजन्ति गच्छन्त्यत्र विजयश्रियं योधारः, कातराः पराभवं वा। एवमर्थो गत्यर्थेषु द्रष्टव्यः। क्षिपन्ते अत्रापि क्षिपन्त्याक्षिपन्ति वान्योन्यं वीर्य्यतारतम्यात्। "तेन वाजं सनिषदस्मिन्नाजौ (ऋ० सं० ८, २, ७, ४)"—इति निगमः॥

(९) पृतनाज्यम्। पृतनाशब्दोपपदादजतेश्च अघ्न्यादि-त्वात् (उ० ४, १०८) यत्प्रत्ययः। पृतनानां सेनानामजनं यत्र। "गर्त्ता सुरुक्मः पृतनाज्येषु (ऋ० सं० ८, ५, २१, १)"—इति निगमः॥

(१०) अभीके। अभिपूर्वादेतेः 'अलीकादयश्च (उ० ४, २५)'—इतीकप्रत्ययो धातोर्लोपश्च निपात्यते। यद्वा, न विद्यते भीर्येषां ते अभीकाः। अभीकैः क्रियमाणत्वात् अभीकमित्युच्यते। "पाहि नक्षिवो दुरितादभीके (ऋ० सं० १, ८, २६, ३)"—इति निगमः॥

(११) समीके। संपूर्वोऽस्य एतिः। अभीकवत्। निगमोऽन्वेषणीयः॥

(१२) ममसत्यम्। मम सत्यं जयः इति योद्धृणां वाक्यः

विषयत्वान्मनसत्वमित्याचचते । पृषोदरादिः । "त्वां जना ममसत्ये ष्विन्द्र (ऋ० सं० ७, ८, २२, ४)"—इति निगमः ॥

(१३) नेमधिता । 'सुधितवसुधितनेमधितधिष्वधिषीय च (७, ४, ४५)'—इति नेमपूर्वाद्दधातेः क्तप्रत्यये इत्वमिडागमो वा निपात्यते । नेमशब्दो दानपर्यायः । सप्तम्येकवचनस्याकारादेशः (७, १, ३९) । "इन्द्रश्च नेमधिता हवन्ते (ऋ० सं० ५, ३, ११, १)"—"विदद्भर्त्ता नेमधिता चिकित्वान् (ऋ० सं० १, ५, १०, ४)"—"नेमधिता न पौंस्या (ऋ० सं० ८, ४, २८, १३)"—इति निगमाः ॥

(१४) सङ्काः । सचतेर्गतिकर्मणः बाहुलकादङ्प्रत्ययष्टिलोपश्च । यद्वा, सम्पूर्वात् किरतेः कृन्ततेर्वा 'अन्येष्वपि दृश्यते (३, २, १०१)'—इति डः । सङ्कीर्य्यन्तेऽत्र योधाः, सम्यक् कृत्यन्ते छिद्यन्ते आयुधैर्वा । "द्रुघ्निः सङ्काः प्रतनासु सर्वाः (ऋ० सं० ५, १, १९, ५)"—इति निगमः ।

(१५) समितिः । सम्पूर्वादेतेः क्तिन् । "राजानः समिताविव (ऋ० सं० ८, ५, ९, १)"—इति निगमः ॥

(१६) समनम् । 'सम ष्टम अवैक्लव्ये (भू० प०)' । समन्ति विक्लवा भवन्त्यस्मिन् शूराः । "क्वा इयं समने पारयन्ती (ऋ० सं० ५, १, १९, ३)"—इति, वि या सृजति समने (ऋ० सं० १, ४, ४, १)"—इति च निगमौ ॥

(१७) मीळ्हे । "मीळ्हम्"—इति धननामसु व्याख्यातञ्च (१८७ पृ०) । मीळ्हार्थत्वात् सङ्ग्रामोऽपि मीळ्हम् । यद्वा, मीळ्हमस्मिन्नस्तीति 'लुगकारेकाररेफाश्च (४, ४, १२८ वा० २)'—इति मत्वर्थीयस्य लुक् । "प्रधने"—इत्यपठितमपि सङ्ग्रामनाम । प्रकीर्णान्यस्मिन्निति आभरणरूपेण चूडामणिकटकविक्षेपात् । "समीळ्हे नरं धाना हवन्ते (ऋ० सं० १,

५, ५, १)"—इति निगमः। 'स्वर्मीढे। स्वरित्युदकनाम,। तदर्थं संग्रामे धावी यस्मिन्नपि संग्रामे'—इति स्कन्दस्वामिभाष्यम्। "स आभिभिर्यस्वमर्जातिमीढे (ऋ० सं० १, ७, १०, १)"—इति च ॥

(१८) पृतनाः। 'पृङ् व्यायामे (तु० आ०)'। 'पृपुला किच्'—इति तनन्प्रत्ययः। व्याप्रियन्तेऽत्र योद्धारः। "रणाय निघ्नन् पृतनासु शत्रून्"—इति निगमः ॥

(१९) स्पृधः। 'स्पर्ध संघर्षे (भू० आ०)'। 'क्विब्वचिप्रच्छि- (७, २, १७८वा०)'—इत्यत्र 'प्राक् प्रत्ययनिर्देशादिदिष्टमिदिः (३, २, १७८ भा०)'—इत्युक्तेः क्विप्। पृषोदरादित्वात् रेफस्य ऋकारोऽलोपश्च। ग्रसि स्पृध.। स्पर्धन्तेऽत्र परस्पर योद्धार.। "जयेम् मयुधि स्पृधं (ऋ० सं० १, १, १५, ३)"—इति निगम.। 'स्पृध इति संग्रामनाम, 'तत्करोति (३, १, २५ वा० २)'—इति णिजन्तात् क्विप्, संग्रामकारिण इत्यर्थं'—इति स्कन्दस्वामिभाष्यम् ॥

(२०) मृधः। 'घर्मवन्ता सोमपेयाय देवा (ऋ० सं० १, १; २५, ४)'—'मित्रो न यातुमन्मृधम् (ऋ० सं० ७,१४,६;१)'—इत्यादौ 'मृधिर्हिंसार्थ.'—इति स्कन्दस्वामिभाष्यम्। तत्र पूर्ववत् क्विप श्रम्। "अयं सुतः सं मखमा मृधं:स्कः (ऋ० सं० २, ६, २१, ४)"—"विनं इन्द्र मृधो जहि (ऋ० सं० ८, ८, १०, ४)"—इति निगमौ ॥

(२१) पृत्सु। पृतनाशब्दस्य संग्रामनामसु पठितोऽपि 'नासिकापृतनामानूना नसपृत्स्नवो वाच्या (६, १, ६३वा०)'—इति पदादिषु विकृतत्वात् पुन पाठः। "यमग्ने पृत्सु मर्त्य म् (ऋ० सं० १, २, २३, २)"—इति निगम ॥

(२२) समत्सु। सम्पूर्वादत्तेः क्विप् मध्यचयन्ति योद्धृणामा-

यूंषि ।– सम्पूर्वोमदो हर्षे इत्यस्माद्वा क्विपि समो मलोपः । सहृष्यन्ति तत्र सुभटाः । "सुमत्सु त्वा हवामहे (ऋ० सं० ५, ८, २६, ३)"—"धन्वना तीव्राः सुमदो जयेम (ऋ० सं० ५, १, १८, २)"—इति निगमौ ॥

(२३) समर्ये । मर्यशब्दो मनुष्यनामसु व्याख्यातः (१५१पृ०) मर्यैः मरणधर्मिभिः सह वर्त्तते, सहशब्दस्य सभावः । "मास्मे ताहगपंगूहः समर्ये (ऋ० सं० ७, ७, १८, ४)"—"तवं स्वर्वान् इयमासमर्ये (ऋ० सं० १, ५, ७, १)"—इति निगमौ ॥

(२४) समरणे । सम्पूर्वात् 'ऋ सृ गतौ (भू० प०)'—इत्यस्मात् ल्युट् ।– "मा वृताः समरणे हवन्ते (ऋ० सं० २, ७, १७, ५)"—इति निगमः ॥

(२५) समोहे । 'उहिर् दुहिर् अर्दने (भू० प०)' । नञ्पूर्वा-दुहेर्घञ् । सम्यगुह्यन्ते अर्दन्तेऽत्र मिथो योधाः । 'अग्निं-गम् योहम् (ऋ० सं० १, ४, २७, १)'—इत्यादौ वह्निरिट रूप-मिति स्कन्दस्वामी । स च सम्पूर्वाद्वहेर्घञि पृषोदरादित्वात् सम्प्रसारणे लघूपधगुणः । समुह्यन्तेऽत्र रथादिना सुभटाः, सुभटैर्वा कवचानि । "समोहे वा य आशत (ऋ० सं० १, १, १६, १)"—इति निगमः । 'अन्तोदात्त सङ्ग्रामनाम, मध्यो-दात्तं णमुलन्तम्'—इति माधवः । "इयर्त्ति रेणुं मघवा समोहम् (ऋ० सं० ३, ५, २१, ३)"—इति णमुलन्तम् ॥

(२६) समिथे । सम्पूर्वादेतेः 'समीणः (उ० २, १०)'—इति थक् । "यत्क्रन्दथः समिथे कुमुदे (ऋ० सं० ५, ६, २५, ६)"—"स हव्या समिथानि मज्मना (ऋ० सं० १, ४, १८, ५)"—इति निगमौ ॥

(२७) सङ्के । सम्पूर्वात् चक्षिङः 'अन्येष्वपि दृश्यते (३, २, १०१)'—इति डः, 'बहुलं सञ्ज्ञाच्छन्दसोः (२, ४, ५४

वा०)'—इति ख्याजादेशः, पृषोदरादित्वाद्यकारलोपः। सम-र्यवर्जनार्थः। सम्भ्रक्ष्यते कातरैः। यद्वा, सम्पूर्वात् अश्नोतेः 'डिच्च'—इति खप्रत्ययः, टिलोपेन धातुलोपः। समश्नुवतेऽस्मिन्नन्योन्यं योद्धारः। निगमोऽन्वेषणीयः॥

(२८) सङ्गे। सम्पूर्वाद् गमेः 'अन्येष्वपि दृश्यते (३, २, १०१)'—इति डः, पूर्ववद् वा। "सङ्गे समत्सु वृत्रहा (ऋ० सं० ८, ७, २१, १)"—इति निगमः।

(२९) संयुगे। 'युजिर् योगे (रु० उ०)' घञ्। उञ्छादिषु युगशब्दस्य पाठात् निपातनादगुणत्वम्, 'विषयेऽसौ निपातनमिष्यते, कालविशेषे रथाद्युपकरणे च'—इति वृत्तिः। सङ्गता रथयुगा यस्मिन्। निगमोऽन्वेषणीयः।

(३०) सङ्गथे। सम्पूर्वात् 'गुध यूथ मोथ पृष्ठादयः'—इति थप्रत्ययान्तो निपात्यते। "प्रा वो ग्रामणं सङ्गथे (ऋ० सं० २, ८, ६, ४)"—इति निगमः॥

(३१) सङ्गमे। सम्पूर्वाद् गमेः 'ग्रहवृदृनिश्चिगमश्च (३, ३, ५८)'—इत्यप्। "जैत्रं यन्तो अनुमदाम सङ्गमे (ऋ० सं० १, ७, १४, ३)"—इति निगमः॥

(३२) वृत्रतूर्ये। वृत्रशब्दो मेघनाम, पर्यायतः शत्रु-वचनः। मेघनामसु व्याख्यातः (५८५०)। 'तुर्वि गतित्वर-हिंसयोः (दि० पा०)' अघ्न्यादित्वात् (उ० ४, १०८)। वृत्रस्तूर्यतेऽनेनास्मिन् वा। "इन्द्रो वृषीत वृत्रतूर्ये" महृणीध्वं वृत्रतूर्ये"—इति निगमौ॥

(३३) पृचे। 'पृची सम्पर्के (रु० प०)'। विभ्यः कित् (उ० ३, ६२)'—इति बाहुलकात् भवति। सम्पृचन्तेऽस्मिन् परस्परं योद्धारः। निगमोऽन्वेषणीयः॥

(२४) ग्रावो । 'ग्रथ रथ क्षण शब्दार्थाः (भू० प०)' । 'अवि-शिविपतिवसिजम्यधिपनिभ्य इण्' । रथवदर्थः । "त्वं श्रुष्ण्'-वृजने पृक्ष आणौ (ऋ० सं० १, ५, ४, ३)"—इति निगमः । 'आणो इति सग्रामनाम'—इति स्कन्दस्वामिभाष्यम् ॥

(२५) शूरसातौ । 'शू गतौ ( सौत्र: )'—इत्यस्मात् 'शुसि-चिमीनां दीर्घश्च ( उ० २, २४ )'—इति रन्प्रत्ययः । 'षणु दाने ( त० उ० )' । 'ऊतियूतिजूतिसातिहेतिकीर्त्तयश्च ( ३, ३, ९७ )'—इति सनोतेः 'जनसनखनाम् ( ६, ४, ४२ )'—इत्यात्वे क्तिनि स्वरो निपात्यते । स्यतेर्वा 'द्यतिस्यति ( ७, ४ ४० )'—इतीत्वाभावश्च । शूराणां सातिः वेतनादानं मरणं वा येन । "यः शूरसाता परितक्म्ये ( ऋ० सं० १, २, ३१, १ )"—इति निगमः ॥

(२६) वाजसातौ । वाजोऽन्नं दीयते येन । "वृधे च नो भवतं वाजसातौ ( ऋ० सं० १, ३, ५, ६ )"—इति निगमः ॥

(२७) समनीके । 'अन प्राणने ( अदा० प० )' । 'अनि-हृषिभ्यां किच्च ( उ० ४, १७ )'—इति ईकन्प्रत्ययः । अनि-त्यनीकम् । यद्वा, नञ्पूर्वान्नयतेः 'पिपीलिकादयश्च ( उ० ४, २५ )'—इति निपात्यते । न नीयते न चाल्यते अनीकम् सेनाविशेषः । सङ्गतान्यनीकानि यस्मिन् । "भोजः शत्रून् त्समनीकेषु जेता ( ऋ० सं० ८, ६, ४, ५ )"—इति निगमः ॥

(२८) खले । 'खज मन्थे ( भू० प० )' । 'पुंसि सञ्ज्ञायां घः ( ३, ३, ११८ )' । व्यत्ययेन जकारस्य लकारः । मन्थ्यते हि योधारस्तत्र । 'खल सञ्चलने ( भू० प० )'—इत्यस्माद्वा घः । व्यत्ययेन सकारलोपः । स्खलन्ति तत्र कातराः । "खले न पर्षान् प्रति हन्मि भूरि ( ऋ० सं० ८, १६, २ )"—इति निगमः ।

(३९) खजे । 'खज मन्थे (भू० प०)'। पूर्ववत् साध्योऽयं। "कर्मन् कर्मन् खजकृतमूर्ति खजङ्कर (ऋ० सं० १, ७, १५, १)"—इति निगमः ॥

(४०) पौंस्ये । बलनामसु व्याख्यातम् (१८४पृ०)। अभिवर्द्धितेऽनेन। निगमोऽन्वेषणीय ॥

(४१) महाधने। 'मह पूजायाम (भू० प०)'। 'वर्त्तमाने पृषद्बृहन्महज्जगच्छतृवच (उ० २, ७८)—इति निपातनम्। धवि प्रीणनार्थ (भू० प०)। इदित्त्वान्नुम्। पचाद्यच्। वकारलोप, इकारस्याकारश्च पृषोदरादित्वात्। प्रिनोतीति धनम् प्रीणयतीति मध्यामो यहारा। महत्वामी धनञ्च महाधनम्। महद्धनमर्थ्यतेऽनेनेति वा। "इन्द्रं वृत्र महाधने (ऋ० स० १, १, १३, ५)"—"नाल्पं कृत्तौ न तंक्रुता महाधने (ऋ० स० १, ३, २१, २)"—इति निगमौ ॥

(४२) वाजे। वाजशब्दो व्याख्यातो बलनामसु (१८०पृ०)। "इन्द्र वाजेषु नो अव (ऋ० स० १, १, १३, ४)"—"त त्वा वाजेषु वाजिनम (ऋ० स० १, १, ८, ३)"—इति निगमौ ॥

(४३) अज्मे। 'अज गतिक्षेपणयो (भू० प०)'। मनिन्। "भूमिर्नादो देधिल दूशो अज्मपुवा (ऋ० सं० १, ७ १६, २)"—इति निगम। 'यश्मद्दे युद्दे वा'—इति माधव ॥

(४४) सद्म। सदेर्मनिन्। अवसादयन्त्यत्र प्राणिन। निगमोऽन्वेषणीय ॥

(४५) मयत्। समपूर्वात यमेर्यर्वा औणादिक क्विप्। यमिरनुनासिकलोप तुगागम.। स यतन्ते म यच्छन्ति वृयाटोन। "इन्द्रीव सुयतं करत (ऋ० स० ५ ७, २, २)'। 'मयत् सयाम'—इति हरदत्त। "आमु यतं मिन्द्र

स्मिन् (ऋ० सं० ४, ६, १४, ५)"—इत्यत्र 'संयतं युद्धम्'—इति माधवः॥

(४६) संवतः। सम्पूर्वाद् वनेः सम्पदादिलात् क्विप्, अनुनासिकलोपे तुगागमः। संवननीयो हि शूरैः संग्रामः। "परस्या अधि संवतः (ऋ० सं० ६, ५, २६, ५)"—"स संवतो नवजातस्तु तुर्यात् (ऋ० सं० ३, १, ७, ३)"—इति निगमौ॥

इति षट्चत्वारिंशत् संग्रामनामानि। १७।

इन्वति (१)। नक्षति (२)। आक्षाणः (३)। आनट् (४)। आष्ट (५)। आपानः (६)। अश्नत् (७)। नशत् (८)। आनशे (९)। अश्नुतः (१०)। इति दश व्याप्तिकर्माणः॥ १८॥

(१) इन्वति। अत्र वधकर्मसु ऐश्वर्यकर्मसु च अनेकार्थत्वादिगतिकर्मादावुक्तमनुसन्धेयम्। 'इवि व्याप्तौ (भू० प०)'। "सखीनां योर्गमिन्वति (ऋ० सं० १, १, २१, २)"—इति निगमः।

(२) नक्षति। 'नक्ष नक्ष गतौ (भू० प०)'। "नक्षद्दाभं ततुरिं पर्वतेष्ठाम् (ऋ० सं० ४, ६, १३, २)"—"हृदयस्य विदद्रेतो यामिर्नक्षत् (ऋ० सं० १, ४, १०, ४)"—इति निगमौ। 'इन्वति नक्षतीति व्याप्तिकर्मसु पठितस्य इकार आगमश्छान्दसः'—इति स्कन्दस्वामिभाष्यम्।

(३) आक्षाणः। अश्नोतेर्लटि शानच्। 'लिड्वदुपं लेटि (३, १, ३४)'—इति बाहुलकात् सिप्, उपधादीर्घस्व, व्रश्चादिबत्वे 'षढोः कः सि (८, २, ४१)' 'आदेशप्रत्ययोः (८, ३,

५८)' षत्वम् "आशाते शूर वज्रिव (ऋ० सं० ७, ७, ८, १)"—इति निगम। भाष्य द्रष्टव्यम्॥

(४) आनट्। 'णश अदर्शने (दि० प०)'। लुङि च्लेः 'मन्त्रे घसह्वरणश (२, ४, ८०)'—इति लुक्। संयोगान्तलोपे (८, २, २३), व्रश्चादिषत्वे (८, २, ३६), जश्त्वम्। 'छन्दस्यपि दृश्यते (६, ४, ७३)'—इति आडागम। "किमिच्छन्ती सरमा प्रेदमानट् (ऋ० सं० ८, ६, ५, १)"—"शुभं खं दधिरा न ध्यानट (ऋ० सं० ८, २, १६, १)"—इति निगमौ॥ यद्वा, अश्नोतेर्लिटि एकत्वे व्यत्ययेन एशो लुक्, व्रश्चादिना षत्वम्, 'झलां जशोऽन्ते (८, २, ३९)' वावसाने (६ ४, ५६)'। "उपाश्ना समनमस्तुत्वमानट् (ऋ० सं० २, ८, १०, १)—इति निगमः॥

(५) आष्ट। अश्नोतेर्लुङि आत्मनेपदप्रथमपुरुषैकवचनम्। "आष्ट मां दीर्घमाधम"—इति निगम॥

(६) आपान। 'आप्लृ व्याप्तौ (स्वा० प०)'। शानच्। अस्त्यर्थकर्मण 'तद्रूपम्' इति स्कन्दस्वामी। "आपानासो विवस्वतु (ऋ० सं० ६, ७, ३४, ५)"—इति निगम। भाष्य द्रष्टव्यम (निरु० १, १०)॥

(७) अशत्। अश्नोतेर्व्यत्ययेन लङि च्ले पूर्ववत् लुक्। 'बहुलं छन्दस्यमाङ्योगेऽपि (६, ४, ७५)'—इत्यडभाव। निगमोऽन्वेषणीय॥

(८) नशत्। नशयतेर्लेटि 'लेटोऽडाटौ (३, ४, ९४)' 'इतश्च लोप परस्मैपदेषु (३, ४, ९७)'। "स धीतये ते नशत्"—"न किः षवासि ते नशत् (ऋ० सं० ६, ५, २, ३)"—इति निगमौ॥

(९) आनशे। अश्नोतेर्लिटि रूपम्। "न किष्ट्वं आनशे (ऋ० सं० १, ६, ६, २)"—इति निगम॥

(१०) अश्नुते। "अर्तसतनूर्नतट्टामो अश्नुते (ऋ० सं० ७, ३, ८, १)"—"व्यश्नुहि तर्पया कामेमेषाम् (ऋ० सं० १, ४, १८, ४)"—इति निगमौ ॥

इति दश व्याप्तिकर्माणि ॥ १८ ॥

दभ्नोति (१)। अथति (२)। ध्वरति (३)। धूर्वति (४)। वृणक्ति (५)। वृश्चति (६)। कृणवति (७)। कृन्तति (८)। श्वसिति (९)। नमते (१०)। अर्दयति (११)। स्तृणाति (१२)। स्रेधयति (१३)। यातयति (१४)। स्फुरति (१५)। स्फुलति (१६)। निर्वपन्तु (१७)। अवतिरति (१८)। वियातः (१९)। आतिरत् (२०)। तडित् (२१)। आखण्डल (२२)। दृणाति (२३)। दम्णाति (२४)। शणाति (२५)। श्नथाति (२६)। तृणेढि (२७)। ताढि (२८)। नितोशते (२९)। निबर्हयति (३०)। मिनाति (३१)। मिनोति (३२)। धमति (३३)। इति त्रयस्त्रिंशत् वधकर्माणः ॥१९॥

१ व्याप्तिवर्गस्तु शाकपूर्णेरतिरिक्ता एव "विव्याथ"—"उरु व्यचा"—"विप्रे"—इति स्कन्दस्वामी ॥

१ (१) दभ्नोति। "दभु दभे" स्वादिः (प०)। "न त्वा केता आ दभ्नुवन्ति भूर्णय (ऋ० सं० १, ४, २०, २)"—इति निगम ॥

(२) श्रथति। 'श्रथ क्नथ क्रथ हिंसायाम् (भू॰ प॰)'। श्रर्थेद् हवमुत संनोति वाजम् (४, ८, २०, १)"—"श्रथ पुरी नवृतिं च श्रथिष्टम् (ऋ॰ सं॰ १, ६, २३,–१)"—इति निगमौ।

(३) ध्वरति।

(४) धूर्वति। 'तुर्व थुर्व दुर्व धुर्व हिंसार्थाः (भू॰ प॰)'। 'उपधायाश्च (८, २, ७८)'—इति दीर्घः। "धूर्वन्तं धूर्व धूर्वन्तं धूर्व (य॰ वा॰ सं॰ १, ८)"—इति निगमः।

(५) हणति। 'हजी प्रजने' रुधादिः। "नि दुर्ग इन्द्र वध्यो दुष्पदा हणक् (ऋ॰ सं॰ १,४,१६,४)"—इति निगमः।

(६) वृश्चति। 'व्रश्च छेदने' तुदादिः। 'ग्रहिज्या (६, १, १६)'—इत्यादिना सम्प्रसारणम्। 'वृश्चा मध्यं प्रत्यग्रं शृणीहि (ऋ॰ सं॰ ३, २, ४, २)"—"विवृश्च वधेन वृत्रमिन्द्र (ऋ॰ सं॰ १, ४, २८, ५)"—इति निगमौ।

(७) कृणति। 'कृवि हिंसाकरणयोः (भू॰ प॰)'। व्यत्ययेन 'धिन्विकृण्व्योरच (३, १, ८०)'—इत्ये तत्र भवति।

(८) कृन्तति। 'कृती छेदने (पा॰)' तुदादिः। 'शे मुचा-दीनाम् (७, १, ५९)'। "वि दध्यूर्यौ नावकृतो हयावाद् (ऋ॰ सं॰ १, ५, ४, ४)"—इति निगमः।

(९) श्नथिति।

(१०) नमते। 'णम तुम हिंसायाम्' (भू॰) आत्मनेपदी। "नमन्ता मनुके सेमे (ऋ॰ सं॰ ६, ३, २२, १)"—इति निगमः।

(११) अर्दयति। 'अर्द हिंसायाम् (भू॰ प॰)' चाधुरादिः। "तृतं विपर्वमर्दयत् (ऋ॰ सं॰ २, ५, ६, १)"—इति निगमः।

(१२) स्पृणाति। 'स्पृड् याच्छादने' क्र्यादिः क्र्यादिश्च।

"कद्रु हव्यो वन्दितम् (ऋ० सं० ६, ४, ४८, ५)"—इति निगमः॥

(१३) खेदयति। 'खिद खेदने' चुरादिः। "यः कौहिंतीषु पूर्व्यः (ऋ० सं० १, ५, २१, २)"—इति निगमः। 'खेदयतिर्वधकर्मा'—इति स्कन्दस्वामी॥

(१४) यातयति। 'यति निकारोपस्कारयोः' चुरादिः। "यातयज्जनो गृणानः (ऋ० सं० १, ३, २, १)"—इति निगमः॥

(१५) स्फुरति। (१६) स्फुलति। 'स्फुर स्फुरणे' 'स्फुल सञ्चलने' तुदादि-, कुटादिः। "मुदा चुम्पमिव स्फुरत् (ऋ० सं० १, ६, ६, ३)"—"मार्द्री दूमे विस्फुरन्ती प्रमिनान् (ऋ० सं० ५, १, १८, ४)"—इति निगमः। 'स्फुरतीति वधकर्मसु पाठात्'—इति स्कन्दस्वामी॥

(१७) निवपन्तु। 'टु वप बीजसन्ताने (धू० ऊ०)'—इत्यस्मात् लोट्। "प्रयन्तो भुक्तानिर्वपन्तु सेनाः (ऋ० सं० २, ७, १८, १)"—इति निगमः॥

(१८) अवतिरति। तरतेर्लट् 'बहुलं छन्दसि (७, ४, ७८)'—इतीत्वम्। "अवातिरज्जरोतिरग्निस्तसीति (ऋ० सं० ३, ५, ११, १)"—यदिन्द्र शारदी र्वातिरः (ऋ० सं० २, १, २०, ४)"—इति निगमौ॥

(१९) वियातः। 'तत्र वियात इत्येतद् वियातयम इति वियातयेति वा (निरु० ३, १०)'—इति भाष्ये स्कन्दस्वामी तस्य समाधिमर्थं व्याचष्टे—'विपूर्वस्य यातयतेर्वा ये प्रत्यये वियातय इति भवति धारयः पारयः इतिवत्। तस्य सम्बोधनम् वियातयेति। वियातयितरिति वा पाठान्तरम्'—इति। धारयपारयेति दृष्टान्तप्रदर्शनेन 'श्वलयो बहुलम् (३,

१, ८५)'—इति, अस्मादपि 'अनुपसर्गाल्लिम्पविन्द' (३। १। १३८)'—इति सूत्रेण शप्रत्यय इति दर्शयति ॥

(२०) आतिरत्। आङ्पूर्वात्तरतेर्लङ् पूर्ववत् रूपम्। "इन्द्रः पुभिरातिरत् दासमर्कैः"—इति निगमः ॥

(२१) तवित्। अस्तिकनामसु व्याख्यातम् (२।८३।०) ॥

(२२) आखण्डल। 'खड खडि कडि भेदे (प०)' चुरादिः। आङ्पूर्वात् 'मङ्गेरलच् (उ० ५, ७२)'—इति बाहुलकादलच्। "आखण्डल प्र हूयसे (ऋ० सं० ६, १, २४, २)"—इति निगमः ॥

(२३) दूणाति। 'दू हिंसायाम्' क्र्यादिः। "तृष्वी भनु प्रसितिं दूणान (ऋ० सं० ३, ४, २३, १)"—इति निगमः ॥

(२४) रम्णाति। 'रमु क्रियायाम्' भ्वादिरात्मनेपदी, व्यत्ययेन श्ना, परस्मैपदम् ॥

(२५) शृणाति। 'शॄ हिंसायाम्' क्र्यादिः प्वादिश्च। "शृणाति वीळुरुजति स्थिराणि (ऋ० सं० ८, ४, १५, १)"—इति निगमः ॥

(२६) श्नथति। 'श्नथ उपरमे' दिवादिः। व्यत्ययेन श्ना। "शिशिरं जीवनाय कम् (निरु० १, १०)"—इति निगमः। 'शिशिरं शृणातेः, शम्नातेर्वा'—इति निरुक्तम् (१, १०)। 'शम्नाति हिंसार्थः'—इति स्कन्दस्वामी ।

(२७) दर्पेव्य हि। 'दृषि हिंसायाम्', रुधादिः। स्वदि तिपि एकाराभावः। निगमोऽन्वेषणीयः ॥

(२८) ताव्य हि। 'तड आघाते' चुरादिः। नयप्रत्ययः। पृषोदरादित्वात् रूपसिद्धिः। "वि मर्त्यौ ताव्य हि वि सृधो नुदस्व (ऋ० सं० ८, ८, ३८, २)"—इति निगमः ॥

(२९) नितोशते। तोशते नैघण्टुको धातुः। "सप्ती मदीय

तोशते (ऋ० । सं० । ७, ५; १२, ४)"—"इन्दुरिन्द्राय तोशते निर्तोशते (ऋ० स० ७, ५, २१, ११)"—शुनासीरा हविषा तोशमाना"—इति निगम. ॥

(३०) निबर्हयति। 'वर्हि हिंसायाम्' चुरादि, निपूर्व। "बृहिर्थ्हि नि मृदसानि वृद्धये (ऋ० स० १, ४, १६, १)"—इति निगम. ॥

(३१) मिनाति, (३२) मिनोति, (३३) धमति। गतिकर्मसु व्याख्याता: (२०४ष०)। "न ता मिनन्ति मायिनो न धीरा (ऋ० स० ३, ४, १, १)"—"न मिनन्ति वेधस"—"वयिग्मरो नामिमोतु वर्षाम् (ऋ० स० २, ५, २४, ५)"—इति मिनातिनिगमा। अत्र, 'मिनातिवधकर्मा'—इति स्कन्दस्वामी। "द्यावा वर्ष चरत आमिनाने (ऋ० स० १, ८, १, २)"—"उत हिवर्हा अमिन: सहोभि (ऋ० स० ४, ६, ७, १)"—इति मिनोतेर्निगमौ। अनयो, 'मिनोतिवधकर्मा'—इति स एव। "वि सुप्तरश्मिरधमुत्तमांसि (ऋ० स० ३, ७, २६, ४)"—इति निगम ॥

इति त्रयस्त्रिंशत् वधकर्माण ॥ १९ ॥

दिद्युत् (१)। नेमि: (२)। हेति: (३)। नमः (४)। पवि: (५)। सृका: (६)। वृका: (७)। वधः (८)। वज्र: (९)। अर्क: (१०)। कुत्स: (११)। कुलिश: (१२)। तुज: (१३)। तिग्मम् (१४)। मेनि: (१५)। स्वधिति: (१६)। सायक: (१७)। परशुः (१८)। इत्यष्टादश वज्रनामानि ॥ २० ॥

(१) दिद्युत्। 'द्युत दीप्तौ (भ्वा० आ०)'। 'द्युतिगमिजुहोतीनां द्वे च (३, २, १७८ वा० २)'—इति क्विपि द्वित्वे, 'द्युतिस्वाप्योः सम्प्रसारणम् (७, ४, ६७)'—इत्यभ्यासस्य सम्प्रसारणम्। द्योतते उज्ज्वलत्वात्। द्यतेर्वा क्विपि पृषोदरादित्वात् रूपसिद्धिः। द्यति शत्रून्। "अस्तुनं दिद्युत् प्रतीका (ऋ० सं० १, ५, १०, ४)"—"यथा वो दिद्युदद्दति (ऋ० सं० २, ४, २, १)"—"या ते दिद्युदवसृष्टा (ऋ० सं० ५, ४, १६, ३)"—इति निगमाः।

(२) नेमिः। णयते 'नियो मिः (उ० ४, ४३)'—इति मिप्रत्ययः। नयति शत्रून् विनाशं, नीयन्तेऽनेन वा ऐश्वर्यात्। यद्वा, 'णमु प्रह्वत्वे (भ्वा० प०)'। 'सत्समांच्छन्दसि गमादिभ्यो दर्शनात् (३, २, १७१ भा०)'—इति किप्रत्ययः। लिड्वद्भावाद् द्विर्वचने 'अत एकहल्मध्येऽनादेशादेर्लिटि (६, ४, १२०)' अन्तर्णीतण्यर्थो नमिः। नमयति शत्रून्। "अरिष्टनेमिं पृतनाजमाशुम् (ऋ० सं० ८, ८, २६, १)"—इति निगमः।

(३) हेतिः। हन्तेर्हिनोतेर्वा 'ऊतियूतिजूतिसातिहेतिकीर्तयश्च (३, ३, ९७)'—इति क्तिनि हन्तेर्नकारस्येत्वम्, हिनोतेर्गुणश्च निपात्यते। हन्यन्तेऽनेन शत्रवः, गम्यतेऽनेन जयः, वर्धते वैश्वर्यम्। "ब्रह्मद्विषे तपुषि हेतिमस्य (ऋ० सं० ३, २, ३, ३)"—इति निगमः।

(४) नमः। नमतेरसुन्। नेमिवदर्थः। निगमोऽन्वेषणीयः।

(५) पविः। पवतिर्गतिकर्मा। 'अच इः (उ० ४, १३९)'। गत्वा शत्रून् अस्यतेऽनेन यद्य इति च। "सृजं सु भावं पविमिन्द्र तिग्मम् (ऋ० सं० ८, ८, १९, २)"—इति निगमः। पवतिस्त्वगत्यर्थक क्रियायामप्यते।

(६) सृकः। 'सृ गतौ (भ्वा० प०)'। सृवृभूशुषिमुषिभ्यः कक् (उ० ३, ४१)—इति कप्रत्ययः। दर्शितनिगमः (ऋ० सं० ८, ८, २८, २)॥

(७) वृकः। 'वृक आदाने (भ्वा० आ०)' इगुपधलक्षणः कः (३, १, १३५)। आदत्ते शत्रुप्राणान्। वृणक्तेर्वा के पृषोदरादित्वात् (६, ३, १०९) रूपसिद्धिः। वैतिवदर्थः। निगमोऽन्वेषणीयः॥

(८) वधः। 'जनिवध्योश्च (७, ३, ३५)'—इति वृद्धिप्रतिषेधः। वैतिवदर्थः। "हत्वाय यद् भ्रष्टिमता वधेन (ऋ० सं० १, ८, १४, ५)"—"इन्द्रो अस्मा अवधर्जभार (ऋ० सं० १, २, ३७, ४)"—इति निगमौ॥

(९) वज्रः। 'व्रज गतौ (भ्वा० प०)'। 'ऋज्रेन्द्र (उ० २, २७)'—इत्यादिना रन्प्रत्ययान्तो निपात्यते। यद्वा, वृजक्ते-र्नुमभावान्तात् रक्, गुणे, प्राप्तस्य रेफस्य लोपः। वर्जयति प्राणैः शत्रून्। अन्ये वर्जयतिमेव विनाशार्थमाहुः विनाशयति शत्रून्। "त्वष्टास्मै वज्रं स्वर्यं ततक्ष (ऋ० सं० १, २, ३६, २)"—इति निगमः॥

(१०) अर्कः। 'अर्च पूजायाम् (भ्वा० प०)'। 'कृदाधारार्चिकलिभ्यः कः (उ० ३, ४०)'—इति कप्रत्ययः। 'चोः कुः (८, २, ३०)' "इन्द्रः पूर्भिदातिरद्दासमर्कैः (ऋ० सं० ३, २, १५, १)"—इति निगमः॥

(११) कुत्सः। कृन्ततेः। 'स्नुव्रश्चिकृत्यृषिभ्यः कित् (उ० ३, ६३)'—इति सप्रत्ययः। कृन्ततेरृकारस्य बाहुलकादुत्वम्। कृन्तति शत्रून्। यद्वा, 'कुत्स अवक्षेपणे' चुरादिरात्मनेपदी। घञ्। कुत्सयत्यनेन शत्रून्। "सद्यो दस्यून् प्रमृण कुत्स्येन (ऋ० सं० ३, ५, १८, २)"—इति निगमः। यकार उपजनः॥

(१२) कुलिशः। "कुलपर्वतान् श्यति पक्षच्छेदेन तनूकरोति"—इति स्कन्दस्वामी। क्षीरस्वामी—कुलशब्द उपपदे श्यतेः 'आतोऽनुपसर्गे कः (३, २, ३)' पृषोदरादित्वात् अकारस्येकारः। यद्वा, कुलशब्दोपपदादन्तर्णीतण्यर्थात् 'शद्लृ शातने (भ्वा० तु० प०)'—इत्यस्मात् 'अन्येष्वपि दृश्यते (३, २, १०१)'—इति डः, पूर्ववदिकारः। मेघस्यान्ते पर्वतस्य वा समुच्छ्रिताः प्रदेशाः कुलानीव, तेषां शातनात्। "स्कन्धांसीव कुलिशेना विवृक्णाहिः (ऋ० सं० १, २, २६, ५)"—इति निगमः॥

(१३) तुजः। तुजेः पचाद्यच्। ईतिवदर्थः। निगमोऽन्वेषणीयः॥

(१४) तिग्मम्। 'तिज निशाने' चुरादिः। 'युजिरुचितिजां कुश्च (उ० १, १४३)'—इति मक्प्रत्ययः कुत्वञ्च। तिज्यते तीक्ष्णीक्रियते। 'तिग्मं तेजस्तेजस्त्वात्कर्मणः तीक्ष्ण इवायुधं योऽहारमुत्पादयति तिग्मशातनः'—इति माधव.। "वि तिग्मेन वृषभेणा पुरोऽभेत् (ऋ० सं० १, ६, २, २)"—इति निगमः।

(१५) मेनिः। मन्यतेः कान्तिकर्मणः 'उत्सर्गश्छन्दसि गमादिभ्यो दर्शनात् (३, २, १७१ भा०)'—इति किप्रत्ययः। नेमिवत् प्रक्रिया। काम्यते हि आयुधम्। यद्वा, 'मिञ् हिंसायाम् (क्र्या० उ०)' 'वीज्याज्वरिभ्यः (उ० ४. ४८)'—इति बाहुलकात् निप्रत्ययः। ईतिवदर्थः। निगमोऽन्वेषणीयः।

(१६) स्वधितिः। स्वशब्दोपपदात् 'धि धारणे (तु० प०)'—इत्यस्मात् क्तिन्। स्वं धनं धीयतेऽनेन। "न स्वधितिर्वनन्वति (ऋ० सं० ६, ७, १२, ४)"—इति निगमः॥

(१७) सायकः। 'षोऽन्तकर्मणि (दि० प०)'। ण्वु,

क्र्यादौ 'आतो युक् चिण्कृतोः (७, ३, ३३)'। अव्ययामन्त्रकारः। 'षिञ् बन्धने (क्र्या० उ०)'—इत्यस्मादा ण्वुल्। बध्नाति स्थिरीकरोति तद्वत् ऐश्वर्यादि। "पुरोपिणं सायकेना हिरण्यम् (ऋ० सं० ८, १, ५, ५)"—"न सायकस्य चिकिते जनासः (ऋ० सं० ३, ३, २३, २)"—इति निगमौ॥

(१८) परशुः। 'शॄ हिंसायाम् (क्र्या० प०)'। 'आङि परयोः खनिशॄभ्यां डिच्च (उ० १, ३३)'—इति कुप्रत्ययः। डित्वाट्टिलोपः। 'परान् शृणातीति परशुः'—इति दण्डनाथवृत्तिः। 'परान् श्यतीति परशुः'—इति क्षीरस्वामी। तत्र मृगय्वादित्वात् (उ० १, ३६) कुः। "शिशीते नूनं परशुं स्वायसम् (ऋ० सं० ८, २, १४, ३)"—"अभीदु शत्रुः परशुर्यथा वनम् (ऋ० सं० ५, ७, ८, १, ४)"—इति निगमौ॥

इत्यष्टादश वधनामानि॥२०॥

इरज्यति (१)। पत्यते (२)। क्षयति (३)। राजति (४)। इति चत्वार ऐश्वर्यकर्माणः॥२१॥

(१) इरज्यति। कण्ड्वादिः। "य एकश्चर्षणीनां वसूनामिरज्यति (ऋ० सं० १, १, १४, ४)"—"महो नृमणस्य धर्मणामिरज्यसि (ऋ० सं० १, ४, १८, ३)"—इति निगमौ॥

(२) पत्यते। नैरुक्तधातुः। दिवादौ 'तप ऐश्वर्ये वा' इत्यस्य स्थाने 'पत ऐश्वर्ये' इति केचित् पठन्ति। "तुविग्रयः पत्यते धृष्ण्वोजाः (ऋ० सं० ३, २, १८, ४)"—"द्युतद्यामानियुतः पत्यमानः (ऋ० सं० ४, ८, ५, ४)"—इति निगमौ॥

(३) क्षयति। "सेदु राजा क्षयति चर्षणीनाम् (ऋ० सं० १, २, १८, ५)"—इति निगमः॥

(४) राजति । 'राजृ दीप्तौ (भू० उ०)' स्वरितेत् । "विश्वो विभ्वा विराजति (ऋ० सं० १, १, ६, ३)"—"राजन्तमध्वराणाम् (ऋ० सं० १, १, २, ३)"—इति निगमौ ॥

इति चत्वार ऐश्वर्यकर्माणः ॥ २१ ॥

राष्ट्री (१) । अर्यः (२) । नियुत्वान् (३) । इनइन (४) । इति चत्वारीश्वरनामानि ॥२२॥

(१) राष्ट्री । राजतेरैश्वर्यकर्मणः (निघ० २,२१, ४) । 'ष्ट्रन् सर्वधातुभ्यः (उ० ४, १५९)'—इति ष्ट्रन्प्रत्ययः । व्रश्चादिना (८, २, ३६) षत्वम् । षित्वात् ङीष् (४, १, ४१) । "राष्ट्री देवानां निषसाद मन्द्रा (ऋ० सं० ६, ७, १, ४)"—इति निगमः ॥

(२) अर्यः । 'ऋ गतौ (भू० प०)'—इत्यस्मात् ऋच्छति प्राप्ते 'अर्यः स्वामिवैश्ययोः (३, १, १०३)'—इति यन्निपात्यते । गम्यते हि सर्वैरीश्वरः । "समर्यो गा अजति यस्य वष्टि (ऋ० सं० १, ३, १, ५)"—"महिष्ठो अर्यः सत्पतिः (ऋ० सं० ६, १, २५, ६)"—इति निगमौ ॥

(३) नियुत्वान् । नियुच्छब्दो व्याख्यातः 'नियुतो वायोः' इत्यत्र (१३० पृ०) । नियुतोऽश्वाः ताभिस्तद्वान् । 'तसौ मत्वर्थे) १, ४, १९)'—इति भसंज्ञाया विधानाज्जश्त्वं न भवति । "अतो नो यज्ञमवसे नियुत्वान् (ऋ० सं० ३, ७, १२, ५)"—इति निगमः ॥

अस्य स्थाने "पतिः"—इति केचित् पठन्ति । तत्र 'पा रक्षणे (अदा० प०)' 'पातेर्डतिः (उ० ४, ५७)' । रक्षिता हीश्वरः । 'पिता पाता वा पालयिता वा'—इति भाष्ये (निरु० ४, २१) यत्र पातेर्णन्ताद् बाहुलकात् डतिः कथि-

विध स्कन्दस्वामिना उक्तः । "अग्निरिन् वाजानां पते (ऋ० सं० १, २, २७, २)"—इति निगमः ॥

(४) इनः । एतेः सभाजनार्थे वर्त्तमानात् समुपसर्गार्थ-विशिष्टाद्वा 'इण्सिञ्जिदीङुष्यविभ्यो नक् (उ० ३, २)'—इति नक्प्रत्ययः । अर्थस्तु 'तत्रेन इत्येतत्सनित. (निरु० ३, ११)'—इत्यत्र स्कन्दस्वामिना विस्तरेणोक्तः । "इनो विश्वस्य भुवनस्य गोपाः (ऋ० स० २, ३, १८, १)"—इति निगम ॥

इति चत्वारीश्वरनामानि । २२ ॥

इति श्रीदेवराजयज्वविरचिते नैघण्टुककाण्डनिर्वचने द्वितीयोऽध्याय समाप्त. ॥ २ ॥

अपस्तुङ्मनुष्याश्चायत्यगुर्वो वश्व्यन्ध्र आर्वयत्योजोमघमभ्रारेलतेद्वेलो वर्त्ततेनु-तलिद्रणा इन्वतिदभ्नोतिद्रुद्दिरज्यतिराष्ट्रीति द्वाविंशतिः ॥

इति निघण्टौ द्वितीयाध्यायः समाप्तः ॥२॥

---

(४) राजति। 'राजृ दीप्तौ (भू० उ०)' स्वरितेत्। "धियो-विश्वा विराजति (ऋ० सं० १, १, ६, ३)"—"राजन्तमध्वराणाम् (ऋ० सं० १, १, २, ३)"—इति निगमौ॥

इति चत्वार ऐश्वर्यकर्माणः॥ २१॥

## राष्ट्री (१)। अर्य्यः (२)। नियुत्वान् (३)। इनइन (४)। इति चत्वारीश्वरनामानि॥२२॥

(१) राष्ट्री। राजतेरैश्वर्यकर्मणः (निघ० २,२१, ४)। 'ष्ट्रन् सर्वधातुभ्यः (उ० ४, १५४)'—इति ष्ट्रन्प्रत्ययः। व्रश्चादिना (८, २, ३६) षत्वम्। षित्त्वात् ङीप् (४, १, ४१)। "राष्ट्री देवानां निषसाद मन्द्रा (ऋ० सं० ६, ७, २, ४)"—इति निगमः॥

(२) अर्य्यः। 'ऋ गतौ (भू० प०)'—इत्यस्मात् ण्यति प्राप्ते 'अर्य्यः स्वामिवैश्ययोः (३, १, १०३)'—इति यन्निपात्यते। गम्यते हि सर्वैरीश्वरः। "समर्य्यो गा अंवति यस्य वष्टि (ऋ० सं० १, २, १, १)"—"मंहिष्ठो अर्य्यः सत्पतिः (ऋ० सं० ६, १, २५, ६)"—इति निगमौ॥

(३) नियुत्वान्। नियुच्छब्दो व्याख्यातः 'नियुतो वायोः' इत्यत्र (१३० पृ०)। नियुतोऽश्वाः ताभिस्तद्वान्। 'तसौ मत्वर्थे) १, ४, १९)'—इति भसंज्ञाया विधानाज्जश्त्वं न भवति। "अतो नो यज्ञमवसे नियुत्वान् (ऋ० सं० ४, ७, १२, ५)"—इति निगमः॥

अस्य स्थाने "पतिः"—इति केचित् पठन्ति। तत्र 'पा रक्षणे (अदा० प०)' 'पातेर्डतिः (उ० ४, ५७)'। रक्षिता हीश्वरः। 'पिता पाता वा पालयिता वा'—इति भाष्ये (निरु० ४, २१) च पातेश्चत्वाद् बाहुलकात् डतिः रूपसि-

चिव स्कन्दस्वामिना उक्तः । "शिग्धिं वाजानां पते (ऋ० सं० १, २, २७, २)"—इति निगमः ॥

(४) इनः । एतेः सम्भाजनार्थे वर्त्तमानात् समुपसर्गार्थविशिष्टाद्वा 'इण्सिञ्जिदीङुष्यविभ्यो नक् (उ० ३, २)'—इति नक्प्रत्ययः । अर्थस्तु 'तत्रेन इत्येतत्सनितः (निरु० ३, ११)'—इत्यत्र स्कन्दस्वामिना विस्तरेणोक्तः । "इनो विश्वस्य भुवनस्य गोपाः (ऋ० सं० २, ३, १८, १)"—इति निगमः ॥

इति चत्वारीश्वरनामानि । २२ ॥

इति श्रीदेवराजयज्वविरचिते नैघण्टुककाण्डनिर्वचने द्वितीयोऽध्यायः समाप्तः ॥ २ ॥

अपस्युवमनुष्यासायत्यगुवो वरस्यन्म च्यावयत्योजोमघमग्रारेवतेवेदो वृत्ततेयुतुलिद्रूपं इन्वतिदम्भोतिदिद्युदिरज्यतिराष्ट्रीति द्वाविंशतिः ॥

इति निघण्टौ द्वितीयाध्यायः समाप्तः ॥२॥

---

# अथ तृतीयाध्यायः ।

—:○:—

उरु (१)। तुवि (२)। पुरु (३)। भूरि (४)। शश्वत् (५)। विश्वम् (६)। परीणसा (७)। व्यानशिः (८)। शतम् (९)। सहस्रम् (१०)। सलिलम् (११)। कुवित् (१२)। इति द्वादश बहुनामानि ॥ १ ॥

(१) उरु। उर्विति पृथिवीनामेति उरुशब्दो व्याख्यातः। आच्छादयति छन्नेनाल्पम्। "उरु णस्तन्वे तन इन्द्र (ऋ० सं० ६, ५, २६, १)"—इति निगमः॥

(२) तुवि। तवतिर्वृद्ध्यर्थः। सौत्रो धातुः। 'अच इः (उ० ४, १३४)'। वृद्धिर्हि बहुः। "तुविजाता उरुक्षया (ऋ० सं० १, २, ४, ४)"—इति निगमः॥

(३) पुरु। पृणातेः 'पृभिदिव्यधिगृधिधृषिभ्यः' (उ० १, २३)'—इति कुप्रत्ययः। 'उदोष्ठ्यपूर्वस्य (७, १, १०२)'—इति उत्वम्। पुर्विव बहुः पुरुभुजा चनस्यतम् (ऋ० सं० १, १, ५, १)"—इति निगमः॥

(४) भूरि। भवतेः 'अदिशदिभूशुभिभ्यः क्रिन् (उ० ४, ६५)'—इति क्रिन्प्रत्ययः। भवति तत् सर्वस्यानुग्रहदा। "यत्र गावो भूरिशृङ्गा अयासः (ऋ० सं० २, २, २४, ५)"—इति निगमः॥

(५) शश्वत्। 'टु ओ श्वि गतिवृद्ध्योः (भू० प०)'। 'संश-

सृम्यहे हत् (उ० २, ७८)'—इत्यादिना द्विर्वचनम्, अभ्यास-वकारेकारेकारस्याकारो ङित्वमाद्युदात्तत्व नियात्यते । परिवर्हते गम्यते वा। "अ॒हं धना॑नि॒ सञ्ज॑यामि॒ शश्व॑तः (ऋ० सं० ८, १, ५, १)"—"यच्चिद्धि शश्व॑ता॒ तना॑ (ऋ० सं० १, २, २१, १)"—इति निगमौ ॥

(६) विश्वम् । (७) परीणसा ।

(८) व्यानशिः । विपूर्वादश्नोतेरुपसर्गतश्छन्दसि गमादिभ्यो दर्शनात् (३, ३, १७१ भा०)'—इति किः । द्वित्वम् । अत आदेः अश्नोतेश्च । विविधं व्याप्नोति । "व्या॒न॒शिः पव॑से सोम॒धर्म॑भिः (ऋ० सं० ७, ३, १२, ५)"—इति निगमः ॥

(९) शतम् । 'पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम् (५, १, ५९)'—इति दशदशाभावस्त च निपात्यते । "दशदशत." इति निरुक्तम् (३, १०) । निपातनसामर्थ्यात् बहुमात्रेऽपि वर्त्तते । "श॒तक्र॑तो (ऋ० सं० १, १, ८, ४)"—इति निगमः ॥

(१०) सहस्रम् । सहो बलनामसु व्याख्यातम् (१८३पृ०) । रो मत्वर्थीयः । अस्यापि भाविनी शक्तिरस्मिन्नस्ति । "स॒हस्रा॑क्षरा प॒र॒मे व्यो॑मन् (ऋ० सं० २, ३, २२, १)"—इति निगमः ॥

(११) सलिलम् । व्याख्यातमुदकनामसु (८३ पृ०) । गम्यते हि जलवत् । "अप्र॒केतं॑ स॑लि॒लं सर्व॑मा इ॒दम् (ऋ० सं० ८, ७, १७, ३)"—इति निगमः । 'सलिलमिति बहुनाम । सलिलं कुविदिति पाठात्'—इति स्कन्दस्वामी ।

(१२) कुवित् । निपातोऽयम् । "कु॒वित् सोम॒स्यापा॒मिति (ऋ० सं० ८, ६, २६, २)"—इति निगमः ॥

इति द्वादश बहुनामानि ॥ १ ॥

ऋहन् (१) । ह्रस्वः (२) । निधृष्व[1]: (३) । मायुकः (४) । प्रतिष्ठा (५) । कृधु (६) । वम्रकः (७) । दभ्रम् (८) । अर्भकः (९) । क्षुल्लकः (१०) । अल्प (११) । इत्येकादश ह्रस्वनामानि ॥ २ ॥

(१) ऋहन् । 'दह वीजजन्मनि (भू० प०)'—'रह त्यागे (भू० प०)' । अनयोः 'संयत्तृम्यह इदित्यादयः (उ० २, ७९)'—इति रेफस्य सम्प्रसारणम्, इतिप्रत्ययः, अहवद्भावश्च निपात्यते । तत्र, दण्डनाथवृत्तिः—'धातुग्रहणादिहर्हदिव्यादयो भवन्ति'—इति । धारुह्यते हि ह्रस्वो हवादिः, त्यज्यते वा दीर्घार्थिभिः । "वृहन्तं चिदृहते रन्धयानि (ऋ० सं० ७, ७, २१, ३)"—इति निगमः ॥

(२) ह्रस्वः । 'सर्वनिघृष्वरिष्वलष्वशिवपद्वप्रह्वेष्वा अतन्त्रे'—इति वन्प्रत्ययान्तो निपात्यते । ह्रसतिः शब्दार्थे पठित, तथाप्यत्र न्यूनार्थे वर्त्तते । "नमो ह्रस्वाय च वामनाय च (य० वा० सं० १६, ३०)"—इति निगमः ॥

(३) निधृष्व । 'धृषु सहने (भू० प०)' । अत्र न्यूनार्थः । इगुपधलक्षणः कः । ह्रसनदयः । निगमोऽन्वेषणीयः ॥

(४) मायुकः । 'डु मिञ् प्रक्षेपणे (क्र्या० उ०)' । 'कृवापा (उ० १, १)'—इत्युण् । स्वार्थे कः । प्रक्षिप्यतेऽनायासेन । निगमोऽन्वेषणीयः ॥

(५) प्रतिष्ठा । प्रतिपूर्वात् तिष्ठतेर्न्यूनार्थात् 'घञर्थे कविधानम् (३, ३, ५८ वा०)'—इति बाहुलकात् कर्त्तरि कः । प्रतितिष्ठति । निगमोऽन्वेषणीयः ॥

(६) कृधु । 'कृती छेदने (तु० प०)' । 'पृभिदिव्यधिगृधिधृषिभ्यः (उ० १, २३)'—इत्यादिना बाहुलकात् कुप्रत्ययस्त-

कारस्य धकारश्च। 'निकृन्तमिव हि तद् भवति ह्रस्वत्वादेव'—इति स्कन्दस्वामी। "यो अस्क्रधोयुरजरः स्वर्वान् (ऋ० सं० ४, ६, १२, २)"—इति निगमः॥

(७) वम्रकः। 'टु वम उद्गिरणे (भू० प०)' न्यूनार्थे। 'स्फायितञ्चिवञ्चि (उ० २, १२)'—इत्यादिना बाहुलकाद्रक्। ततः स्वार्थे कः (५, ३, ८७)। "वम्रकः पड्भिरुपसर्पदिन्द्रम् (ऋ० सं० ८, ५, १४, ६)"—इति निगमः। "स्ववान्नो वम्रो विजवान सुन्दिहः (ऋ० सं० १, ४, १०, ४)"—इत्यत्र 'वम्रः ह्रस्वनामैतत् द्रष्टव्यम्। स्वार्थिककप्रत्ययान्तो ह्रस्वनामसु पठितम्'—इति स्कन्दस्वामी॥

(८) दभ्रम्। दभतिर्न्यूनार्थः। 'स्फायितञ्चिवञ्चि (उ० २, १३)'—इति रक्। 'नेड्वशि कृति (७, २, ८)'—इतील्प्रतिषेधः। "दभ्रं पश्यद्भ्य उर्विया विचक्षे (ऋ० सं० १, ८, १, ५)"—इति निगमः॥

(९) अर्भकः।

(१०) क्षुल्लकः। क्षुधं लाति। 'आतोऽनुपसर्गे कः (३. २. ३)'। स्वार्थे कः। 'क्षुधं लाति क्षुल्लकः'—इति क्षीरस्वामी। "नमो महद्भ्यः क्षुल्लकेभ्यश्च क्षुल्लका शिपिविष्टका"—इति निगमः॥

(११) अल्पः। 'अलं भूषणपर्याप्तिवारणेषु'। 'अलितल्पिपीडनृपाभ्यः पः'—इति पः। "अल्पा एनं पशवो भूत्वा उपतिष्ठेरन्"—इति निगमः॥

इत्येकादश ह्रस्वनामानि। २॥

महत् (१)। ब्रध्नः (२)। ऋष्वः (३)। बृहत् (४)। उक्षितः (५)। तवसः (६)। तविषः

(७) । महिषः (८) । अभ्वः (९) । ऋभुक्षाः (१०) । उक्षाः (११) । विहायाः (१२) । यह्वः (१३) । ववक्षिथ (१४) । विवक्षसे (१५) । अम्भृणः (१६) । माहिनः (१७) । गभीरः (१८) । ककुहः (१९) । रभसः (२०) । व्राधन् (२१) । विरप्शी (२२) । अद्भुतम् (२३) । बर्हिष्ठः (२४) । बर्हिषात् (२५) इति पञ्चविंशतिर्महन्नामानि ॥ ३ ॥

(१) महत् । 'मानेनान्यान् जहातीति शाकपूणिर्मंहनीयो भवतीति वा (निरु० ३, १३)'—इति भाष्यम् । 'मानेन स्वगुणेन परिमाणेन अन्यान्, यदपेक्ष्य तस्य महत्त्व, तान् जहाति अतिक्रामति मानशब्दात् जहातेश्चेति शाकपूणि । निर्वचनलाघवात् महते पूजाकर्मणो वटत्याचार्य '—इति स्कन्दस्वामी । उभयत्रापि 'वर्त्तमाने पृषद्बृहन्महत् (उ० २, ७८)'—इत्यतिप्रत्यये निपातनाद्रूपसिद्धि । "महत्तदुल्बं स्थविरं तदासीत् (ऋ० सं० ८, १, १०, १)"—इति निगम ।

(२) ब्रध्न । व्याख्यातमश्वनामसु (१२४पृ०) । बध्नाति स्वगुणै सर्वान् वेतनदानेन भृत्यादीन् । "युञ्जन्ति ब्रध्नमरुषं चरन्तम् (ऋ० सं० १, १, ११, १)"—इति निगम ॥

(३) ऋष्व । 'ऋष गतौ (तु० प०)' । 'सर्वनिघृष्व (उ० १५१)'—इति वन्प्रत्ययो गुणाभावश्च निपात्यते । गम्यते हि महान् सर्वं गतो वा भूमिम् । इमावर्थौ गत्यर्थेषु बोद्धव्यौ । 'ऋषिर्दर्शनात् (निरु० २, ११)'—इति भाष्यादपि दर्शनार्थम् ।

दर्शनीयो हि महान् "क्रत्वा तं इन्द्र स्थविरस्य बाहू (ऋ० मं० ४, ७, २१, २)" इति निगमः ॥

(४) वृहत्। 'बृहि वृद्धौ (भू० प०)'। 'वर्त्तमाने पृषद्बृहत् (उ० २, ८४)'—इति निपातनम्। परिवृद्धं भवति हि महत्त्वं, वर्द्धतेऽस्मिन्नैश्वर्यादि, वर्द्धतेऽनेन समाश्रितः। वृद्ध्यर्थेऽपि वर्धो बोद्धव्यः। "बृहद्वदेम विदथे सुवीराः (ऋ० सं० २, ५, १८, ६)"—"उरोऋष्वस्य बृहतः (ऋ० सं० १, २, १७, ४)"—इति निगमौ। उरोर्ऋष्वस्येत्यत्र 'ऋष्वस्य महतम्, बलवतः, बृहतः एतदपि महत्तामेव। वेगसम्बन्धेन न च पुनरुक्तिः। महतः वेगेन गौरवस्येत्यर्थः'—इति स्कन्दस्वामिभाष्यम् ॥

(५) उक्षितः। 'उक्षतिर्वृद्ध्यर्थः'—इति स्कन्दस्वामी। निष्ठायामिडागमः। निगमोऽन्वेषणीयः ॥

(६) तवसः। तवतिर्वृद्ध्यर्थः। 'अत्यविचमितमिनमिरभिलभिनभितपिपतिपनिपणिमहिभ्योऽसच् (उ० ३, ११३)'। "रजस्तुरं तवसं मारुतं गणम् (ऋ० सं० १, ५, ८, २)"—"तन्व त्वणासि तवसं मतव्यान् (ऋ० सं० ५, ६, २५, ५)"—इति निगमौ ॥

(७) तविषः। तवतेरेव। 'तवेर्णिद्वा (उ० १, ४८)'—इति टिषच्प्रत्ययः। "सानुं गिरीणां तविषेभिरूर्मिभिः (ऋ० सं० ४, ८, ३०, २)"—इति निगमः ॥

(८) महिषः। महतेः 'अविमह्योष्टिषच् (उ० १, ४५)'। महत्वर्थः। यद्वा, महतेः क्विप्, सप्तम्येकवचनम्, महि 'अन्येष्वपि दृश्यते (३, २, १०१)'—इति डप्रत्ययः, 'तत्पुरुषे कृति बहुलम् (६, ३, १४)'—इति अलुक्, 'सुषामादिषु च (८, ३, ९८)'—इति षत्वम्। महि महति स्थाने सीदत्यास्ते

महिष.। "महिषासो मायिनश्चित्रभानवः (ऋ० सं० १, ५, ७, २)"—इति निगमः॥

(९) अभ्वः। व्याख्यातमुदकनामसु (१०६पृ०)। आ समन्तात् भवतीति कीर्त्तिमत्त्वात्। यद्वा, भवतेः सत्तार्थात् प्राप्त्यर्थाद्वा नञ्पूर्वात् 'नञि भुवो डित्'—इति क्वन्प्रत्ययः। न भवत्यनेनोपद्रवोऽस्मिन्निति वा न प्राप्यते शेषैः। "न वै वातस्य प्रमिनन्त्यभ्वम् (ऋ० सं० १, २, १४, १)"—"आ यो द्यौ अभ्व ईयते (ऋ० सं० १, ३, १९, ३)"—इति निगमौ॥

(१०) ऋभुक्षाः। 'ऋ गतौ (भ्वा० प०)'। 'ऋतेर्भुक्षिनक्'—इति भुक्षिनक्प्रत्ययः। 'पथिमथ्यृभुक्षामात् (७, १, ८५)' 'इतोऽत् सर्वनामस्थाने (७, १, ८६)'। उरु विस्तीर्णं भाति, ऋतेन सत्येन यज्ञेन वा भाति भवति वा, ऋभुः। मेधावी महत् स्थानं वा। उरुशब्दादुपपदात् भातेर्भवतेर्वा 'मृगय्वादयश्च (उ० १, ३६)'—इति कुप्रत्ययः। पूर्वपदस्य उवर्णटिलोपः सम्प्रसारणञ्च निपात्यते। क्षयतेरैश्वर्यकर्मणः क्षियतेर्वा 'इतिश्छन्दसि (उ० ४, १३६)'—इति बाहुलकादिनि टिलोपश्च। ऋभुणा क्षयति ईष्टे, ऋभौ महति स्थाने निवसति वा। "त्वमृभुक्षानर्यस्त्वं षाट् (ऋ० सं० १, ५, ४, ३)"—इति निगमः॥

(११) उक्षा। उक्षतेर्वृद्ध्यर्थात् 'श्वन्नुक्षन्पूषन्' (उ० १, १५५)'—इति कनिन्प्रत्ययान्तो निपात्यते। निगमोऽन्वेषणीयः॥

(१२) विहायाः। 'वहिहाधाञ्भ्यश्छन्दसि (उ० ४, २१५)'—इति अहातेर्जिहीतेर्वा बाहुलकात् पुनर्भावेऽपि युगागमो निपात्यते। "कृष्णादुदस्थादर्य्या विहायाः (ऋ० सं० २, १, ४, १)"—इति निगमः॥

(१३) यज्ञः । यजतेः 'शेययज्ञजिह्वाग्रीवाप्रामीवा (उ० १, १५२)'—इति वन्प्रत्ययो जकारस्य ञकारश्च निपात्यते। यजते देवपूजादिकं करोति। यद्वा, 'यसु प्रयत्ने (दि० प०)' 'यमीव'—इति क्वन्प्रत्ययः'—इति भोजदेवः। यस्यति प्रयत्यते प्रवृत्त्वात्त्वयादौ। 'यज्ञ इति महतो नामधेयम्, यातश्च हूतश्च भवति'—इति (निरु० ८, ८) भाष्ये 'यातयासावाह्लतश्च वार्थिभिः, हूतश्चासौ प्रार्थिभिः, द्विधातुजत्वं दर्शितम्' इति स्कन्दस्वामी। ततोऽत्र यातेर्ह्वयतेश्च 'गेहे कः (३, १, १४४)' इति वाहुलकात् भूते कप्रत्ययो ह्वयतेः सम्प्रसारणाभावश्च। "प्रवो यज्ञं पुरूणाम् (ऋ० सं० १, ३, ८, १)—इति निगमः॥

(१४) ववक्षिथ। (१५) विवक्षसे। 'तत्र ववक्षिथ विवक्षस इत्येते (निरु० ३, १३)'—इत्यादिभाष्ये अनयोराख्यातयोर्महन्नामसु पठनीयत्वं महद्वाचकत्वं चोपपादितं स्कन्दस्वामिना। ववक्षिथेत्यत्र 'छन्दसि लिट् (८, ४, ७८)"—इतीत्वाभावः, एकवचनस्य स्थाने बहुवचनम्, थकारात् परस्याकारस्येत्वञ्च व्यत्ययेन। "पतिर्विश्वं ववक्षिथ (ऋ० सं० १, ४, १, ५)"—"गीर पावकशो चिषं विवक्षसे (ऋ० सं० ०, ०, ४, १)"—इति निगमौ॥

(१६) अभ्भृणः। भ्रमतेः क्विप्। बिभर्तेः 'इण्सिञ्जिदि (उ० ३, २)'—इत्यादिना वाहुलकात् नप्रत्ययः। "प्रियन्नं-भृष्टिमभ्भृणम् (ऋ० सं० २, १, २२, ५)"—इत्यत्र 'अभ्भृणस्य महतः फलस्य हेतुभूता'—इति स्कन्दस्वामी॥

(१७) माहिनः। महतेः। 'महेरिनण् च (उ० २, ५३)'—इति इनण्प्रत्ययः। "प्रवो न इन्द्रे स्तोमं माहिनाय (ऋ० सं० १, ४, २७, १)"—इति निगमः॥

(१८) गभीरः। वाङ्नामसु व्याख्यातम् (६५ पृ०)। प्रतिष्ठितो महति स्थाने लिप्यन्ते। "उरुव्यचा वरिमता गभीरम् (ऋ० सं० १, ७, २६, २)"—इति निगमः॥

(१९) ककुहः। 'कक्कु सहने'। 'ककेरुहः'—इति उह-प्रत्ययः। सहते ह्यभिभवति शत्रून्, सहते क्षमतेऽपराधान् वा। "वच्यन्ते वां ककुहासः (ऋ० सं० १, ३, २२, ३)"—इति निगमः। 'ककुहः इति महन्नाम'—इति स्कन्दस्वामी॥

(२०) रभसः। 'रभ राभस्ये (भू० आ०)'। 'अत्यविचमितमिनमिरभिलभिनभितपिपतिपनिपणिमहिभ्योऽसच् (उ० ३, ११३)'। रभते महान्ति कर्माणि, संरभ्यते वा शत्रुषु। "अर्चन्त्यर्का रभसासो अद्युः (ऋ० सं० ८, ५, ३, ४)"—इति निगमः॥

(२१) ब्राधत्। बन्धातेः 'संश्चत्तृम्पद्वेहदित्यादयः (उ० २, ८९)'—इत्यतिप्रत्ययः र आगमश्च निपात्यते। "स ब्राधतो नहुषो दंसुजूतः (ऋ० सं० २, १, २, ४)"—इति निगमः॥

(२२) विरप्शी। 'रप लप व्यक्तायां वाचि (भू० प०)' विपूर्वः। 'रपधृषक्रम्यभिकुभ्यः शक्'—इति बाहुलकात् शक्। विविधं रपतीति विरप्शाः स्तोतारः, तेऽस्य सन्ति इति विरप्शी। यद्वा, विविधं रपणं विरपणं तदस्यास्ति वा। मंहि मह इत्यसुन्नन्तपाठश्च। "विरप्शी गोमती मही (ऋ० सं० १, १, १६, ३)"—इत्यादीकारान्तोपादानं सन्देहनिवृत्त्यर्थम्। "क्रत्वे अपिबो विरप्शिन् (ऋ० सं० ४, ७, १२, २)"—"विरप्शिने वज्रिणे शन्तमानि (ऋ० सं० ४, ७, ४, १)"—इति निगमौ।

(२३) अद्भुतम्। 'भू सत्तायाम् (भू० प०)'। 'अदि भुवो डुतच् (उ० ५, १)'। 'अदित्याभावार्थोऽव्ययम्'—इति क्षीर-

स्वामी। तत्र सम्पूर्वाद् विभर्त्तेर्वा बाहुलकात् कुतन्प्रत्यये मनोऽभावश्च। सम्यक् पोषितो धनादिभिः, सम्यक् बिभर्त्त्यश्चितेनेति वा। "सर्दमस्यतिमद्भु तम् (ऋ० स० १, १, २५, १)"—"वषट्कृतस्याद्भुतस्य दस्रा (ऋ० सं० १, २, २२, ४)"—इत्यत्र 'मद्भवामाद्युदात्तः स्यादवाचर्य्यभूतेऽन्तोदात्तः स्वरः' —इति माधवः। "तव सुरीप्रमद्भु तम् (ऋ० स० २, २, ११, ४)"—इति निगमः॥

(२४) वंहिष्ठः। बहि महि वृद्धौ (भू० आ०)'। लहिवंशोर्नलोपश्च (उ० १, २८)'—इति बहुपदम्, तत इष्ठन्प्रत्ययः। 'वंहतेर्वहुलं मत्वर्थीयः'—इति क्षीरस्वामी। अतिशयेन बहुलो वंहिष्ठः। 'प्रियस्थिरस्फिरोरुबहुल (६, ४, १५७)'—इत्यादिना बहादेशः। यद्वा, 'तिपुलवञ्जुलबकुलतूलपृथुलस्थूलविमस्थूलादयः'—इति बहेर्वलच्प्रत्ययो नलोपश्च निपात्यते। अन्यत् पूर्ववत्। "यदवंहिष्ठ' नाति विधे' सुदानू (ऋ० मं० ४, ८, ३१, २)"—इति निगमः॥

(२५) बर्हिषत्। बृह बृहि वृद्धौ (भू० प०)'। 'बृंहेर्नलोपश्च (उ० २, १०२)'—इति इसिप्रत्ययः। बर्हिःशब्द उपपदे सदः 'सत्सूद्विष (३, २, ६१)'—इत्यादिना क्विप्। पृषोदरादित्वाद्बर्हिषः सकारलोपः। सुषामादित्वात् (८, ३, ९८) षत्वम्। यद्वा, 'अनिते (८, ३, १८)'—इति। 'सर्वधातुभ्यः (उ० ४, ११८)'—इति इन्। अन्यत् पूर्ववत्। परिवृढे स्थाने स्यादिति हि महान्। निगमोऽन्वेषणीयः॥

इति पञ्चविंशतिर्महन्नामानि ॥ ३ ॥

गयः (१)। कृदरः (२)। गर्त्तः (३) हर्म्यम् (४)। अस्तम् (५)। पस्त्यम् (६)।

(१८) गभीरः। वाङ्नामसु व्याख्यातम् (६५ पृ०)। प्रतिष्ठितो महति स्थाने लिप्यन्ते। "उरुव्यचा वरिमता गभीरम् (ऋ० सं० १, ७, २६, २)"—इति निगमः॥

(१९) ककुहः। 'कक्कु सहने'। 'ककोरुहः'—इति उह-प्रत्ययः। सहते अभिभवति शत्रून्, सहते क्षमतेऽपराधान् वा। "वृषन्ते वां ककुहासः (ऋ० सं० १, ३, ३२, ३)"—इति निगमः। 'ककुह इति महन्नाम'—इति स्कन्दस्वामी॥

(२०) रभसः। 'रभ राभस्ये (भ्वा० आ०)'। 'अत्यविचमितमिनमिरभिलभिनभितपिपतिपनिपणिमहिभ्योऽसच् (उ० ३, ११२)'। रभते महान्ति कर्माणि, संरभ्ये वा शत्रुषु। "अधैनु ह्वा रभसासो अद्युः (ऋ० सं० ८, ५, १, ४)"—इति निगमः॥

(२१) ब्राधत्। बन्धातेः 'वर्तमाने पृषद्बृहदित्यादयः (उ० २, ८९)'—इतीतिप्रत्ययः था आगमश्च निपात्यते। "स ब्राधतो नहुषो दसुजूतः (ऋ० सं० २, १, २, ४)"—इति निगमः॥

(२२) विरप्शी। 'रप लप व्यक्तायां वाचि (भ्वा० प०)' विपूर्वः। 'रपश्रक्रम्यभिक्षुभ्यः शक्'—इति बाहुलकात् शक्। विविधं रपतीति विरप्शाः स्तोतारः, तेऽस्य सन्ति इति विरप्शी। यद्वा, विविधं रपणं विरप्शं तदस्यास्ति वा। महि मह इत्यसुबन्तपाठश्च। विरप्शी गोमती मही (ऋ० सं० १, १, १६, ३)"—इत्याटीकारान्तोपादानं मन्देहनिहत्यर्थम्। "क्रत्वे अर्पितो विरप्शीन् (ऋ० सं० ४, ७, १२, २)"—"विरप्शिने वज्रिणे शन्तमानि (ऋ० सं० ४, ७, ४, १)"—इति निगमौ।

(२३) अद्भुतम्। 'भू सत्तायाम् (भ्वा० प०)'। 'अदि भुवो डुतच् (उ० ५, १)'। 'अदित्याश्चर्यार्थोऽव्ययम्'—इति क्षीर-

स्वामी। तत्र सम्पूर्वात् बिभर्तेर्वा बाहुलकात् क्तप्रत्यये मलोपोऽभावश्च। सम्यक् पोषितो धनादिभिः, सम्यक् बिभर्त्त्यिलेनेति वा। "सदसस्पतिमद्भुतम् (ऋ० सं० १, १, २५, १)"—"वषट्कृतस्याद्भुतस्य दस्रा (ऋ० सं० १, २, २२, ४)"—इत्यत्र 'मह्वामाद्युदात्तः स्यादत्राद्यन्तोदात्तः स्वरः' —इति माधवः। "तवं स्तुवीयमद्भुतम् (ऋ० सं० २, २, ११, ४)"—इति निगमः॥

(२४) वंहिष्ठः। वहि महि वृद्धौ (भू० आ०)'। वह्नि-र्बंशोर्नलोपश्च (उ० १, २८)'—इति वहुपदम्, तत्र इष्ठन्-प्रत्ययः। 'बहुतेर्बहुलं मत्वर्थीयः'—इति क्षीरस्वामी। अतिशयेन बहुलो वंहिष्ठः। 'प्रियस्थिरस्फिरोरुबहुल (६, ४, १५७)'—इत्यादिना बंहादेशः। यद्वा, 'विपुलस्थूलबहुल-मूलपृथुलस्थूलविसस्थूलादयः'—इति वंहिकलच्प्रत्ययो नलो-पश्च निपात्यते। अन्यत् पूर्ववत्। "यद्वंहिष्ठं नाति विधे-सुदान् (ऋ० सं० ४, ४, २१, ३)"—इति निगमः॥

(२५) बर्हिषत्। वृह वृहि वृद्धौ (भू० प०)'। 'वृंहेर्न-लोपश्च (उ० २, १०२)'—इति इसिप्रत्ययः। बर्हिःशब्द उप-पदे सदः 'सत्सूद्विष (३, २, ६१)'—इत्यादिना क्विप्। पृषो-दरादित्वाद्बर्हिषः सकारलोपः। सुषामादित्वात् (८, ३, ८८) षत्वम्। यद्वा, 'अनिते (८, ३, १९)'—इति। 'सर्व-धातुभ्यः (उ० ४, ११८)'—इति इन्। अन्यत् पूर्ववत्। परि-हृढे स्थाने स्यादिति हि महान्। निगमोऽन्वेषणीयः॥ एषार्थस्य

इति पञ्चविंशतिमहन्नामानि॥ ... आदगुणश्च।

गयः (१)। ... इति पर्यायेणास्यार्थकथनम्'

... इष्टोदमूरा अतिथिर्दुरोणे (ऋ०

हर्म्यम् (४)। ...

म० ३, ८, १८, १५)"—मध्ये मिमीतेरुदस्यो दुर्गाणे (ऋ० मं० १, ५, १३, २)"—इति निगमौ ॥

(८) नीलम्। 'स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्विति वृत्यजिनीपदिमदिमुदिखिदिच्छिदि-भिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्‌हसिसिधिशुभिभ्यो रक्'—इति रक् प्रत्ययः, मत्वर्थादेर्लोपो गुणाभावश्च निपात्यते। नीयन्तेऽत्र पदार्थाः, नयति सुखानि स्वसनमिति वा। "आ यो मूना गूर्ते भ्रनाद्नीळे (ऋ० मं० ८, १, १७, १)"—इति निगमः।

(९) दुर्याः। 'दुर्वी हिंसायाम् (भ्वा० प०)'। 'अघ्न्यादित्वाद् यत्प्रत्यये वकारलोपे दीर्घाभावश्च निपात्यते। हिंसन्ति मीनाति हि त दु खम। यद्वा, दुःशब्दपूर्वात् 'याते, 'घञर्थे कविधानम् (३, ३, ५८, वा० २)'—इति कः। 'दुःखेन प्राप्यन्ते, दुर गृहद्वाराणि अर्हन्तीति वा दुर्याः गृहा उच्यन्ते' —इत्युवट। "अवो रक्षा प्रवंसा त्वोत दुर्यात् (ऋ० मं० १, ६, २२, ४)"—इति निगमः॥

(१०) स्वसराणि। व्याख्यातमहर्नामसु (४६ पृ०)। खेन स्वनेन क्षियते प्राप्यते रवेरुदयतो भ्रातिभि  नियते, सुष्टु असन्ते वासिम् पदार्था। निगमोऽन्वेषणीय॥

(११) अमा। 'अम गतिभजनशब्देषु (भ्वा० प०)'। 'पुंसि संज्ञायां घ प्रायेण (३, ३, ११८)'। गम्यतेऽस्मिन् भज्यते शब्दायन्ते वा। यद्वा, निपातोऽयम्।' "अमात्यम् (ऋ० म० ५, २, २०, १)"—इत्यत्र, उवट—'अमा गृहवचन' सह-वचनो वा। अव्ययात् त्यप् तत्र भव इत्यर्थे। रत्ने सत्याला भवति अमात्य'—इति। "सा नो अमा सो अरणे नि पातु (ऋ० म० ८, २, ५, ७)"—"अमा सते वहसि भूरिवामम् (ऋ० म० २, १, ८, २)—"अमाजूरिव पित्रो सचा सती (ऋ० म० २, ६, २०, २)"—इति निगमा॥

(१२) दमे। 'दमु उपशमने (दि० प०)'। घञ्। 'नोदा-

षोपदेशस्य (७, ३, ३४)'—इति वृद्धिप्रतिषेधः। शाम्यतेऽनेन शीतादि, दान्तः क्लेशः। "वर्धमानं स्वे दमे (ऋ॰ सं॰ १, १, २, ३)"—"हस्कर्तारं दमे दमे (ऋ॰ सं॰ ३, ५; ६, २)"—इति निगमौ॥

(१३) कृत्तिः। 'कृती छेदने (तु॰ द॰ प॰)'। क्तिन्। छदरवदर्थः। निगमोऽन्वेषणीयः॥

(१४) योनिः। व्याख्यातमुदकनामसु (१०१ पृ॰)। मिश्रुतेऽनेन सुखम्, पृथग्भूयन्तेऽनेनाविष्टा इति, परीवीतो वा प्राकारादिना जायेव। जायेव योनावरं विश्वस्मै (ऋ॰ सं॰ १, ५, १०, ३)"—इति निगमः॥

(१५) सद्म। सदेर्मनिन्। सीदन्त्यस्मिन्। "सद्मेव धीराः सुमायं चक्रुः (ऋ॰ सं॰ १, ५, ११, ५)"—इति निगमः। 'सद्म गृहनाम'—इति स्कन्दस्वामी।

"वर्म" इति केचित् पठन्ति। वृणोतेर्मन्। व्रियते तेन, सम्भज्यते वा गृहिभिः। निगमोऽन्वेषणीयः॥

(१६) शरणम्। शृणातेः 'युच् बहुलम् (उ॰ २, ७४)'—इति युच्। शृणाति शीतादिक्लेशम्, रचितवान् वा क्लेशेभ्यः 'अर्तिः प्राप्त्यर्थः'—इति माधवः। प्राप्यते हि तत्। "नीडस्येव शरण आ सुदस्य (ऋ॰ सं॰ २, २, १८, १)"—इति निगमः॥

(१७) वरूथम्। 'वृञ् वरणे (स्वा॰ उ॰)'। 'जूवृञ्भ्यामूथन् (उ॰ २, ६)'। वर्मवदर्थः। "भवा वरूथं गृणते विभावो (ऋ॰ सं॰ १, ४, २४, ४)"—इति निगमः॥

(१८) छर्दिः। 'छर्द सन्दीपने (चु॰ प॰)'। 'अर्चिशुचिहुसृपिच्छर्दिभ्य इसिः (उ॰ २, १०१)'। सन्दीप्यते शालया। "प्रथो यच्छतादवकं पृथु छर्दिः (ऋ॰ सं॰ १, ४, ५, ५)"—

“वरू॑थं मघ्वद्भ्य॑च्छर्दिः (ऋ॰ सं॰ ६, ४, ५२, १)”—इति निगमौ।

(१९) छर्दि। ‘छर्द अपवारणे (चु॰ उ॰)’। णिच्। पूर्ववदिस्। ‘छादेर्घेऽद्व्युपसर्गस्य (६, ४, ९६)’। ‘इस्मन्त्रन्क्विषु च (६, ४, ९७)’—इति ह्रस्वः। णिलोपः। छादयति हि तत्। निगमोऽन्वेषणीयः॥

(२०) छाया। ‘छो छेदने (दि॰ प॰)’। माच्छाशसिभ्यो यः। छत्रिवदर्थः। छायाकरत्वाद्वा छाया। “यस्य॑ छाया-मृतम् (ऋ॰ सं॰ ८, ७, ३, २)”—इति निगमः॥

(२१) शर्म। शृणातेः शरेः श्रयतेर्वा मन्। श्रयतेर्बाहुलकाद्रूपसिद्धिः। श्रीयते हि तत्। अन्यत्र शरणमर्थः। “त्वामिदिन्द्र॑स्य शर्म॑णि (ऋ॰ सं॰ १, १, ८, १)”—“त्रिधातु॑ शर्म॑ वहतं शुभस्पती (ऋ॰ सं॰ १, ३, ४, ६)”—इति निगमौ॥

(२२) अज्म। अजी ‘सर्वधातुभ्यो मनिन् (उ॰ १, १३७)’—इत्यादिना बाहुलकात् मन्। पूर्ववदर्थः। “येषा॑-मज्मे॑षु पृथिवी (ऋ॰ सं॰ १, ३, १२, ३)”—इति निगमः॥

इति द्वाविंशतिर्गृहनामानि॥४॥

**ई॒र्ष्यति॑ (१)। वि॒धेम॑ (२)। स॒पर्य॑ति (३)। न॒म॒स्यति॑ (४)। दु॒व॒स्यति॑ (५)। ऋ॒ध्नोति॑ (६)। ऋ॒णद्धि॑ (७)। ऋ॒च्छति॑ (८)। सप॑ति (९)। विवासति (१०)। इति दश परिचरण-कर्माणः॥५॥**

(१) ईर्ष्यति। ‘ईर्ष्य ईर्ष्यायाम्’ कण्ड्वादि, यगि-

मंसु। अनेकार्थत्वात् इत्यादि यदुक्तं तदिहाध्याये सर्वत्र धातुषु तद् बोद्धव्यम् ॥

(२) विधेम। 'विध विधाने' तुदादि। लिङुत्तमपुरुष बहुवचनम्। "यज्ञैर्विधेम नमसा हविर्भिः (ऋ० सं० २, ७, २४, २)"—"हविष्मन्तो विधेम ते (ऋ० सं० १, ३, ८, २)"—"होतेव सद्म विधतो वि तारीत् (ऋ० सं० १, ५, १, १)"—इति निगमः॥

(३) सपर्यति। 'सपर पूजायाम्' कण्ड्वादि.। "दूतं देव सपर्यति (ऋ० सं० १, १, २३, २)"—इति निगम॥

(४) नमस्यति। 'नमोवरिवश्चित्रङ क्यच् (३, १, १९)'। नमस. सत्पूजायाम्। नमः करोति। "इन्द्रं नमस्यन्नुपमेभिरर्कैः (ऋ० सं० १, ३, १, २)"—"ये नमस्यन्ति हृदयः (ऋ० सं० १, २, ११, ४)"—इति निगमौ॥

(५) दुवस्यति। 'दुवस् परिचरणे, परितापे च' कण्ड्वादिः। "दुवस्यन्ति स्वसारो अह्वायम् (ऋ० सं० १, ५, २, २)"—इति निगमः॥

(६) ऋध्नोति। "ऋधु वृद्धौ" स्वादिः। अतएव "आ ऋध्नोति हविष्कृतिम् (ऋ०. सं० १, १, ३१, ३)"—इति निगम.॥

(७) ऋणद्धि। व्यत्ययेन श्नम्॥

(८) ऋच्छति। 'ऋच्छ गतीन्द्रियप्रलयमूर्त्तिभावेषु' (तु० प०)॥

(९) सपति। 'षप समवाये (भ्वा० प०)'। "यविष्ठांसो विदुष्टरं सपेम (ऋ० सं० ४, ५, १८, ५)"—इति निगमः॥

(१०) विवासति। नैरुक्तधातु.। 'विपूर्वात् वसतेश्च'। 'छन्दस्युभयथा (३, ४, ११७)'—इति अपि आर्द्धधातुकत्वात्

खिलोप'—इति भट्टभास्करमिश्रः। "द्रविणोदा द्रविणसः (ऋ० सं० १, १, २३, ३)"—इति निगमः॥

इति दश परिचरणकर्माणि ॥ ५ ॥

शिम्बाता (१)। शतरा (२)। शातपन्ता (३)। शर्म (४)। स्यूमकम् (५)। शेव धम् (६)। मयः (७)। सुग्म्यम् (८)। सुदिनम् (९)। शूषम् (१०)। शुनम् (११)। शग्मम् (१२)। भेषजम् (१३)। जलाषम् (१४)। स्योनम् (१५)। सुम्नम् (१६)। शेवम् (१७)। शिवम् (१८)। शम् (१९)। कम् (२०) इति विंशतिः सुखनामानि ॥ ६ ॥

(१) शिम्बाता। 'शिङ निशाने (स्वा० उ०)'। निम्ब विम्बशिम्बडिम्बकुम्बस्वादय'—इति शिनोतेर्वप्रत्ययो मुम निपात्यते। अततेर्डञ। दुःखानि तनूकुर्वत् प्राप्यते॥

(२) शतरा। शत बहु, अनेकमिन्द्रियप्रसादादि राति ददाति 'आतोऽनुपसर्गे कः (३, २, ३)।

(३) शातपन्ता। 'शो तनूकरणे (दि० प०)' निष्ठा। पतते 'हसिमृग्रिण्वामि (उ० ३, ८६)'—इति बाहुलकात् तन्। शातेन दुःखानां तनूकरणेन पत्यते प्राप्यते। त्रिष्वपि द्विवचनस्याकारः। "शिमेषं कृता शतरा शातपन्ता (ऋ० सं० ८, ६, १, ५)"—इति निगमः॥

(४) शर्म। व्याख्यातं गृहनामसु (२५६पृ०)। "ता नो देवी सुहवा शर्म यच्छत (ऋ० सं० ४, २, २८, ७)"—इति

निगमः ॥ अन्ये स्थाने "गिन्नु."—इति केचित् पठन्ति । 'गल गतौ (भू० प०)' । 'वलिफल्योर्गुक् च)'—इति क्नुप्रत्ययो बाहुलकादकारस्येकारः । गम्यते पुरुषवद्भिः, गच्छत्यनेन व्यसिम्, गच्छति वाल्यमानित्वत्वात् । एवमर्था गत्यर्थेषु बोद्धव्याः । निगमोऽन्वेषणीयः ॥

(५) स्यूमकम् । 'षिवु तन्तुसन्ताने (दि० प०)' । 'अवि-सिविसिमिशुषिभ्यः कित् (उ० १, १४१)'—इति मन्प्रत्ययः । 'छ्वोः शूडनुनासिके च (६, ४, १९)' यणादेशः, स्वार्थे कः । स्यूतं पुरुषगति । निगमोऽन्वेषणीयः ॥

(६) शेवृधम् । शेशब्दे उपपदे वृधेः इगुपधलक्षणः कः । शेवस्य वर्द्धयितृ शेवृधम् । पृषोदरादित्वादुभयत्र रूपसिद्धिः । "न शेवृधमधि धाद्युन्नमुक्ये (ऋ० सं० १, ४, १८, ६)"—इति निगमः ॥

(७) मयः । 'मिञ् हिंसायाम् (स्वा० उ०)' । असुन् । हिनस्ति दुःखम् । "मयं कृणोषि प्रय आ च सूरये (ऋ० सं० १, २, ३१, २)"—इति निगमः ॥

(८) सुग्म्यम् । सुपूर्वात् गमेः अघ्न्यादित्वात् यत्प्रत्यय उप-धालोपश्च । "ऊर्जा ददातु सुग्म्यम् (ऋ० सं० १, ४, ५, ३)"—"आ सुग्म्याय सुग्म्यम् प्राता (ऋ० सं० ६, ७, ७, ५)"—इति निगमौ ॥

(९) सुदिनम् । व्याख्यातमहर्नामसु (६७ पृ०), अत्र सुपूर्वम् । सुष्ठु द्यति दुःखम्, खण्ड्यते वा भाग्यवद्भ्यां येन । निगमोऽन्वेषणीयः ॥

(१०) शूषम् । व्याख्यातं बलनामसु (१८२ पृ०) । शूय-त्यनेन दुःखम्, प्रियावहत्वं सुखम् । "आशाके भिरेतरी न शूषैः (ऋ० सं० ४, ५, १४, ४)"—इति निगमः ॥

(११) शुनम्। 'शुन गतौ (तु० प०)'। 'गेहे क (३, १, १४४)'—इति बाहुलकात् कः। "शुनं नः फाला वि कृषन्तु भूमिम् (ऋ० म० ३, ८, ९, ८)"—शुनं हुवेम मघवानमिन्द्रम् (ऋ० म० ३, २, ४, ७)—इति निगमौ।

(१२) शग्मम्। शशब्दे उपपदे गम 'गेहे क (३, १, १४४)'—इति कः। गमहनेत्युपधालोप (६, ४, ९८)। पृषोदरादित्वात् शमो मलोप। सुखं गम्यतेऽनेन दुष्कृतादि शमनेन वा। यद्वा, शकि 'युजिरुचितिजां कुश्च (उ० १, १४३)'—इति बाहुलकात् मक्प्रत्यय, ककारस्य गकारश्च। शक्नोति तृप्तिं जनयितुम्। "वाश्रो यति शग्मया सु मदा रे (ऋ० स० ४, ४, २१, २)"—इति निगमः॥

(१३) भेषजम्। (१४) जलाषम्। व्याख्याते उदकनामसु (१०८पृ०) भिषक्त्वतिरत्र सुखनार्थः। "हृद जलाषभेषजम (ऋ० म० १, ३, २६, ४)"—इति निगमः॥ 'जलाषं सुखौषधम्'—इति स्कन्दस्वामिभाष्यम्॥

(१५) स्योनम्। 'षिवु तन्तुसन्ताने (दि० प०)'। 'सिवेष्टेरूट् च (उ० ३, ८)'—इति नप्रत्यये गुण। स्युमवर्थः। स्योनमिति सुखनाम, 'स्यतेरवस्यन्त्येतत'—इति (निरु० ८, ९) भाष्ये 'स्यतेः सेवतेश्च स्योनम'—इति व्याख्यातं स्कन्दस्वामिना। तत्र बाहुलकान्नप्रत्यये टेरूट्। "दुवेभ्यो ... तये स्योनम् (ऋ० स० ८, ६, ८, ४)"—"स्योना पृथिवि भव (ऋ० म० १, २, ६, ५)"—इति च निगमौ॥

(१६) सुम्नम्। 'राम्नासास्नासुम्नद्युम्नानिम्नेति' भोजसूत्रम शोभनेन कर्मणा मीयते निमीयते, सुष्ठु मीयते पारं भाग्यनेति वा। "... व सुम्ना नव्यांसि (ऋ० स० १, ३, १५, ३)" "सुम्नाय वर्तयामसि (ऋ० स० ६, ४, ५५, १)"—इति निगमौ

(१७) शेवम्। (१८) शिवम्। 'शीङ् स्वप्ने (अदा० आ०)'। 'इण्शीभ्यां वन् (उ० १, १५०)'। 'सर्वनिघृष्व (उ० १, १५१)'—इति शीङो इस्वत्वं वन्प्रत्ययो गुणाभावश्च निपात्यते। "शेवमिति सुखनाम (निरु० १०,१७)' इत्यादि-भाष्ये। शिष्यतेर्व्युत्पादितावेतौ। तत्रार्थस्तु—शेपति हिनस्ति क्लेशं, शेपयति वा स्वाश्रयम्। "जने न शेवं आहूर्यः सन् (ऋ० सं० १, ५, १३, २)"—"शिवाभिर्न स्मयमानाभि रागात् (ऋ० सं० १, ५, २७, २)" —इति निगमौ॥

(१८) शम्। निपातोऽयम्। यद्वा, शाम्यतेर्विच्। शाम-यितृ क्लेशानाम्। "श ते सन्तु प्रचेतसे (ऋ० सं० १, १, १०, २)"—इति निगमः।

(२०) कम्। अयमपि निपातनम्। "श्रियसे कं भानुभिः सम्मिमिक्षिरे (ऋ० सं० १, ६, १२, ६)"—"आ वो मक्षू तनाय कम् (ऋ० सं० १, २, १८, २)"—इति निगमौ। "अधे कमिन्द्र चरतो वितर्तुरम् (ऋ० सं० १, ७, १४, २)"—इत्यत्र 'कमिति सुखनामेदमव्ययम्'—इति स्वरदत्तः॥

इति विंशतिः सुखनामानि॥ ६॥

निर्णिक् (१)। वव्रिः (२)। वर्पः (३)। वपुः (४)। अमतिः (५)। अप्सः (६)। प्सुः (७)। अप्नः (८)। पिष्टम् (९)। पेशः (१०)। कृशनम् (११)। भरः (१२)। अर्जुनम् (१३)। ताम्रम् (१४)। अरुषम् (१५)। शिल्पम् (१६)। इति षोडश रूपनामानि॥ ७॥

(१) निर्णिक्। 'णिजिर् शौचपोषणयोः (जु० उ०)'

निशब्दपूर्वं क्विप्। निर्णिक्तं हि तत्, पोषयति वा प्रीतिम्। "शकपो वस्त निर्णिजम् (ऋ० सं० १, २, १८, ३)"—इति निगमः॥

(२) वव्रिः। 'वृञ् वरणे (स्वा० उ०)'। 'आदृगमहन जन किकिनौ लिट् च (३, २, १७१)' द्विर्वचनम्, कित्त्वाद् गुणाभावः, यणादेशः। तद्धि स्वाश्रयमावृणोति, व्रियते वा। "विद्युन्न भवन्ती प्रति वव्रिमौहत (ऋ० सं० २, ३, १८, ४)"—इति निगमः॥

(३) वर्पः। 'वृङ् सम्भक्तौ (क्र्या० आ०)'। 'वृञ्शीङ्भ्यां रूपस्वाङ्गयोः पुट् च (उ० ४, १९६)'—इत्यसुन्। भज्यते हि तत्। वृणोतेर्वा बाहुलकादसुन् पुट् च। वर्णवदर्थः। "मा वर्पो अस्मदप गूह एतत् (ऋ० सं० ५, ६, २५, ६)"—इति निगमः॥

(४) वपुः। व्याख्यातमुदकनामसु (१०६ पृ०)। उच्यते आश्रयः "वपुर्भिराचरतो अन्यान्या (ऋ० सं० १, ५, २, ३)"—इति निगमः॥

(५) अमतिः।

(६) अप्सः। 'अप्स इति रूपनामाप्नोतेः (निरु० ५, १३)'—इत्यादिभाष्ये स्कन्दस्वामिना अप्सशब्दो व्युत्पादितः। तत् प्रकारेण निर्वचनं प्रदर्श्यते। नञ्पूर्वात् प्सातेरसुनि बाहुलकादाकारलोपः आप्नोतेर्वा। 'वृतृवदिहनिकमिकषिभ्यः सः (उ० ३, ५८)'—इति सप्रत्ययः। "उषा हस्नेव निर्णीते अप्सः (ऋ० सं० २, १, ८, २)"—"अप्सरसः परि जज्ञे वसिष्ठः (ऋ० सं० ५, ३, २४, २)"—"अप्सरसां गन्धर्वाणाम् (ऋ० सं० ८, ७, २४, ६)"—इति निगमाः॥

(७) प्सुः। 'स्फुर स्फुरणे (तु० प०)'। 'मृगय्वादयश्च (उ०

१,२६)—इति डुन्प्रत्यय, सकारपकारयोः फकारस्य च व्यत्ययश्च निपात्यते। स्फुरति हि तत्। "यद्दन्ते भङ्गुत प्सवः (ऋ० सं० ६, १, ३७, २)"—"गुभा इन्द्र मधुाता भङ्गुत प्सवः (ऋ० सं० १, ४, १२, ४)"—इति निगमौ।

(८) अप्नः। अपत्यनामसु व्याख्यातम् (१४५ पृ०)। तेन हि तत्कर्माश्रयं व्याप्नोति। "अभिसर्गन्ति अप्नया ता अनुप्रसः (ऋ० सं० २, ६, १०, ४)"—इति निगमः।

(९) पिष्टम्। 'पिश अवयवे (तु० प०)' 'पिस गतौ (भू० प०)'—इति क्षीरस्वामी। 'पिशेः किच (उ० ३, ८२)'—इति क्तः, गुणाभावश्च, 'तितुत्र (७,२, ९)'—इतीट्प्रतिषेधः। 'पिशितम्, अवयवशो विभक्तमित्यर्थः'—इति स्कन्दस्वामी। 'पिश आक्षेपणार्थः'—इति माधवः। आश्लिष्यत्याश्रयम्। "पिष्टं रूपमिरुन्क्षिभिः (ऋ० सं० ४, ३, १८, १)"—इति निगमः॥

(१०) कृशनम्। (११) पेशः। व्याख्याते हिरण्यनामसु (१६पृ०) दीप्यते हि तत्, दीप्यतेऽनेन वा तद्वान्। पेशसः पिष्टवदर्थः। कृशनस्य निगमोऽन्वेषणीयः। "पेशो मर्या अपेशसे (ऋ० सं० १, १, ११, २)"—इति निगमः।

(१२) स्पर्ः। 'स्फुर स्फुलने (तु० प०)'। असुन्। पृषोदरादित्वात् (६, ३, १०९) सकारपकारयोर्व्यत्ययः। स्फुरति हि तत्। "महि प्सरो वरुणस्य (ऋ० सं० १, ३, २३, २)"—"वचो दैव प्सरस्तमम् (ऋ० सं० १, ५, २३, १)"—इति निगमौ।

केचिदत्र मर्क्रूच्छ पठन्ति। तद्धिरण्यनामसु व्याख्यातम् (१७पृ०)। निगमोऽन्वेषणीयः॥

(१३) अर्जुनम्। व्याख्यातमुपोनामसु (४१पृ०) अर्ज-

मीत्यत्र। "यद्देवं स्तुयमद्गरजुं नयं (ऋ॰ सं॰ ४, १, ११, १)"—इति निगम ॥ ।

(१४) ताम्रम। 'तमु काङ्क्षायाम् (दि॰ प॰)' । 'अमितम्योर्दीर्घश्च (उ॰ २, १४)'—इति रक्प्रत्यय । काङ्क्ष्यं हि तत्, तस्मात् ताम्रम्। "धायो दिवाहा ताम्र"—इति निगम। "असौ यस्ताम्रो अरुण (य॰ वा॰ सं॰ १६, ६)" —इति च ।

(१५) भरुपम । व्याख्यातमुपर्णोनामसु भरुपीत्यत्र (४१पृ॰)। स्या रोचते। निगमोऽन्वेषणीय ॥

(१६) शिल्पम। 'षिल्ह विशेषणे (त॰ प॰)'। 'खष्प शिल्पशष्पवाष्परूपतल्पा (उ॰ ३, २६)'—इति पप्रत्यय। षकारस्य लकारो बाहुलकात् गुणाभावश्च निपात्यते। विशेषयति तदङ्गम्। "ऋक्सामयो शिल्पे स्थ (य॰ वा॰ सं॰ ४, ८)"—इति निगम ॥

इति षोडश रूपनामानि ॥ ७ ॥

अमेमाः (१)। अमेमाः (२)। अमेद्याः (३)। अनवद्याः (४)। अनभिशस्ताः (५)। उक्थ्यः (६)। सुनीथः (७)। पाकः (८)। वामः (९)। वयुनम् (१०)। इति प्रशस्यस्य ॥८॥

(१) अमेनाः । 'मिवु गतिशोषणयो (प॰)' दिवादिर्नञ्पूर्व, 'मनिन् सर्वधातुभ्यः (उ ४, १४०)'—इति मनिनि बाहुलकात् आडभाव', 'लोपोव्योर्वलि (६, १ ६६)'—इति वकारलोप, गुण । न गच्छत्यकीर्त्तिम्, अगम्यो ।

याम्, न गच्छन्त्यस्माद् गुणाः । अघ्नेमाणं सूरयो वीलु-जम्भम् (ऋ० सं० २, १, २४, २)"—इति निगमः ॥

(२) अनेमाः । नञ्पूर्वान्नयतेर्मनिन् । नेतुमशक्यो दुर्मर्षम् । निगमोऽन्वेषणीयः ॥

(३) अनेद्यः । 'णिदि कुत्सायाम् (भू० उ०)' नञ्पूर्वः, आगमानित्यत्वान्नुम् न क्रियते, 'ऋहलोर्ण्यत् (३, १, १२४)' "माध्यन्दिनस्य सवनस्य वृत्रहन्ननेद्य (ऋ० सं० ६, ३, १८, १)" —इति निगमः ॥

(४) अनवद्याः ।

(५) अनभिशस्ताः । 'शस्त हिंसायाम् (अदा० प०)' । निगमोऽन्वेषणीयः ॥

(६) उक्थ्यः । 'वच परिभाषणे (अदा० प०)' । 'पातृतुदिवचिरिचिसिचिभ्यस्थक् (उ० २, ६)' सम्प्रसारणञ्च । उक्थशब्दः स्तुतिपर्य्यायः । उक्थमर्हति । 'छन्दसि च (५, १, ६७)'—इति यः । स्तुत्यर्ह इत्यर्थः । "क्रतुर्भवत्युक्थ्यः (ऋ० सं० १, १, २२, ५)"—"गाय गायत्र मुक्थ्यम् (ऋ० सं० १, १, १७, ४)"—इति निगमौ ॥

(७) सुनीथः । नयतेः 'हनिकुषिनीरमिकाशिभ्यः क्थन् (उ० २, २)' । नीथा स्तुतिः । शोभना नीथा यस्य सः । "हिरण्यहस्तो असुरः सुनीथः (ऋ० सं० १, ३, ७, ५)"—"गभीरवेपा असुरः सुनीथः (ऋ० सं० १, २, ७, १)"—इति निगमौ ॥

(८) पाकः । पातेः 'इण्भीकापाशल्यतिमर्चिभ्यः कन् (उ० ३, ४३)'—इति कन् । रक्ष्यते राजादिना गुणवत्त्वात् । "तं पाकेन मनसा पश्यमन्तितः (ऋ० सं० ८, ६, १६, ४)"—इति निगमः । "अपाको विश्वायंशसे सुरूपि"—इति च ॥

(९) धाम । 'वनषण सम्भक्ती (भू०प०)' । 'मनिन्... मक (उ० ४, १४२)'—इति प्रत्ययः, नकारस्याकारश्च । सम्भजनीयो हि प्रशस्यः । "प्र तद्वो इ अनुददासि धामम् (ऋ० स० २, ३, १२, ५)"—इति निगमः ।

(१०) वयुनम् । अजति 'अजियमिशीङ्भ्यश्च (उ० ३, ५८)'—इत्युनन्प्रत्ययः, वीभावः । अस्मिन्नर्थे । 'वयुन वेते, कान्तिर्वा प्रज्ञा वा (निरु० ५, १४)'—इति भाष्यम् । तत्र बाहुलकादुनन्, मत्वर्थीयस्य लुक्, कान्तिमान् प्रज्ञावान् वा । "विमानमग्निर्वयुनश्च वाघताम् (ऋ० स० २, ८, २०, ४)"—इति निगमः ॥

॥ इति दश प्रशस्यनामानि ॥ ८ ॥

केतः (१) । केतुः (२) । चेतः (३) । चित्तम् (४) । क्रतुः (५) । असुः (६) । धीः (७) । शचीः (८) । माया (९) । वयुनम् (१०) । अभिख्या (११) । इत्येकादश प्रज्ञानामानि ॥९॥

(१) केत । 'चायृ पूजानिशामनयोः (भू०उ०)' । 'चायः की (उ० १, ७५)'—इति तप्रत्ययो धातोः कीरादेशो गुणश्च । पूज्यते । "पुरु त्वोऽऽनुतेकेतमायम् (ऋ० स० ८, ४, १, ५)" —इति निगमः ।

(२) केतु ।

(३) चेत । (४) चित्तम् । 'चिती संज्ञाने (भू०प०)' । 'अचित्तिसिभ्य (उ० ३, ८६)'—इति बाहुलकात् क्त । केतय-

इथः। "ऋतावान॑ विचे॑तसम् (ऋ० सं० ३, ५, ६, २)"—
"सम्यक् चित्तं चित्तेन मतम्" इति निगमौ॥

(५) क्रतुः। व्याख्यातं कर्मनामसु (१२९ पृ०) क्रियतेऽनया धर्माऽविचारः। "अग्निर्होता॑ क॒विक्र॑तुः (ऋ० सं० १, १, १, ५)"—इति निगमः॥

(६) असुः। असतेः 'शॄस्वृस्निहित्रप्यसिवसि (उ० १, १०)'—इति उप्रत्ययः। 'असुरिति प्राणनाम (निरु० ३, ८)'—इति भाष्ये, अस्यति क्षिपत्यनर्थान्, अस्ताः क्षिप्ताः अस्यामर्थाः इत्यर्थप्रापणनर्थपरिहारात्मकमुभयमपि प्राप्नोति॥

(७) धीः। (८) शची। व्याख्याते कर्मनामसु (१४१, १४२, पृ०)। निधीयते द्रव्येषु, धारयत्यर्थान् ध्यायन्तेऽनया देवता, गम्यन्ते अवगम्यन्तेऽनयार्थाः, गच्छत्यनया इष्टप्राप्तिमनिष्टपरिहारञ्च। "चित्र॑सि म॒नासि॒ धीर॑सि॒ (य० वा० सं० ४, १९)"—"दीध्या॑वसुर्धि॒या व॒यम् (ऋ० सं० १, १, २, १)"—"क॒र्णोत्व॒ न शची॑भिः (ऋ० सं० १, २, ३१, ५)"—इति निगमाः॥

(९) माया। 'माङ् माने (धातु० पा०)'। 'माछाससिभ्यो यः (उ० ४, १०६)'—इति यप्रत्ययः। मीयन्ते परिच्छिद्यन्तेऽनया पदार्थाः। "मा॒याभि॑रिन्द्र मा॒यिन॑म् (ऋ० सं० १, १, २१, ७)"—"इ॒मामू॒ नु क॒वित॑मस्य मा॒याम् (ऋ० सं० ४, ४, ३१, १)"—इति निगमौ॥

(१०) वयुनम्। व्याख्यातं प्रशस्यनामसु (२६६ पृ०)। गतौ यथोदयः, चयवेऽस्त्ववत्। "वि॒हि॑ अ॒ग्ने व॒युना॑नि चि॒ती॒नाम् (ऋ० सं० १, ५, १०, २)"—इति निगमः॥

(११) अभिख्या। 'ख्या प्रकथने (धातु० प०)'। 'आतश्चोपसर्गे (३, ३, १०६)'—इत्यङ्। प्रकर्षेण कथ्यन्तेऽनयार्थाः।

"घृभिरक्ष्या भासा हस्तुता शुंशुकानि. (ऋ० सं० ६, २, ८, ५)"
—इति निगमः । माष्य द्रष्टव्यम् ।

इत्येकादश प्रज्ञानामानि ॥ ९ ॥

बट् (१) । श्रत् (२) । सत्रा (३) । अद्धा (४) । इत्था (५) । ऋतम् (६) । इति षट् सत्यनामानि ॥ १० ॥

(१) बट् । (२) श्रत् । (३) सत्रा । (४) अद्धा । (५) इत्था । बडादयो निपाताः । "बण्महाँ असि सूर्य (ऋ० सं० ६, ७, ८, १)"—"श्रदस्मै नरो वचसे दधातन (ऋ० सं० ८, ८, ८, १)"—"सत्रादावृधिनो हवि (ऋ० सं० १, १, १५, १)"—"सत्यमद्धा नकिरन्यस्त्वावान् (ऋ० सं० १, ४, १४, ३)"—"मूर्त्विदित्था धिया वरा (ऋ० सं० १, १, ४, १)"—इति निगमाः ॥

(६) ऋतम् । व्याख्यातमुदकनामसु (१०० पृ०) । गत्त्वनेन सुगतिम् । 'ऋतम् ऋते:, प्राप्यते तदिन्द्रिये'—इति माधवः । "ऋतेन मित्रावरुणौ (ऋ० सं० १, १, ४, २)"—इति निगमः ।

इति षट् सत्यनामानि ॥ १० ॥

चिक्यत् (१) । चाकनत् (२) । आचक्ष्म (३) । चष्टे (४) । विचष्टे (५) । विचर्षणिः (६) । विश्वचर्षणिः (७) । अवचाकशत् (८) । इत्यष्टौ पश्यतिकर्माणः ॥ ११ ॥

(१) चिक्यत् । (२) चाकनत् । (३) आचक्ष्म । (४) चष्टे । (५) विचष्टे । इति पञ्चैते दर्शनार्थानि व्याख्यातानि ।

'विचक्षदित्यादीनि चायत्यर्थनिगमानि'—इति स्कन्दस्वामिना भाष्यमुक्तम्। 'कित ज्ञाने (भू० प०)' यङ्लुकि शतरि व्यत्ययेन 'नुगतोऽनुनासिकान्तस्य (७, ४, ८५)'—इति न भवति। विगमोऽन्वेषणीयः॥

(३) आचक्ष। आङ्पूर्वस्य चक्षिङो लङि मध्यमो मसादेशो व्यत्ययेन। "अतश्चाच्छ मरुतः दिदिदिर्व (ऋ० स० ४, २, ३१, ३)"—इति निगमः॥

(४) चष्टे। (५) विचष्टे। केवलाद् विपूर्वाच्च आत्मनेपदप्रथमपुरुषैकवचने संयोगादिलोपे टुत्वे च रूपम्। "तेभिश्चष्टे वरुणो मित्रो अर्यमा (ऋ० स० ८, ४, २४, १)"—"द्युतो जातो विश्वमिदं विचष्टे (ऋ० स० १, ७, ६, १)"—इति निगमौ॥

(६) विचर्षणिः। (७) विश्वचर्षणिः। विपूर्वाद् विश्वपूर्वाच्च 'कृष विलेखने (भू० प०)'—इत्यस्मात् 'कृषेरादेश्च चः (उ० २, ८०)'—इति अनिप्रत्ययः, आदेः ककारस्य चकारश्च। यद्वा, चायतेरेव बाहुलकात् अनिप्रत्ययो धातोर्ह्रस्वत्वमभावश्च। विविध द्रष्टा विचर्षणिः। विश्वस्य द्रष्टा विश्वचर्षणिः। "सकान् पिपर्षि विदथे विचर्षणे (ऋ० स० १, २, ३३, १)"—"स्तोमेभिर्विश्वचर्षणे (ऋ० स० १, १, १७, ३)"—इति निगमौ॥

(८) अवचाकशत्। 'काशृ दीप्तौ (भू० आ०)' अवपूर्वं। यङ्लुकि शतरि व्यत्ययेन ह्रस्वत्वम्। "जनाना धेना अवचाकशद् वृषा (ऋ० स० ७, ८, २५, १)"—"उभे सोमावचाकशत् (ऋ० स० ६, ८, २२, ४)"—इति निगमौ।

इत्यष्टौ पश्यतिकर्माणः॥ ११॥

हिकम् (१)। नुकम् (२)। सुकम् (३)। आहिकम् (४)। आकीम् (५)। नकिः (६)। माकिः (७)। नकीम् (८)। आकृतम्। (९) इति नवोत्तराणि पदानि सर्वपदसमाम्नानाय ॥१२॥

(१) हिकम्। (२) नुकम। (३) सुकम्। (४) आहिकम्। (५) आकीम्। (६) नकिः। (७) माकिः। (८) नकीम्। एते निपाताः। "वसुवंसु पतिर्हिकम् (ऋ० सं० ६, ३, ४०, ४)"—"इमा नु कम्भुवना (ऋ० सं० ८, ८, १५, १)"—"मीव भामातिष्वतेत्सवताम्सुकम्"—"पृङ्क्त इन्द्रोऽपि मधुना हि कं गतम् (ऋ० सं० २, ८, १, ५)"—"आकीं सूर्यस्य रोचनात् (ऋ० सं० १, १, २७, २)"—"न किरिन्द्र त्वदुत्तरो (ऋ० सं० ३, ६, १८, १)"—"माकिर्नेशन्माकीं रिषत् (ऋ० सं० ४, ८, २०, २)"—"नकीं हृधीक इन्द्र ते (ऋ० सं० ६, ५, २१, ४)" —इति निगमाः॥

(९) आकृतम्। निघान्तस्य क्रयशब्दस्यात पाठात् सङ्ख्येयमपि निपातसमाहाररूपो निपातितः। कृतशब्दस्य विभक्तिप्रतिरूपकत्वात् निपातत्वमित्याहु। निगमोऽन्वेषणीय॥

इति नव सर्वपदसमाम्नाय॥ १२॥

इदमिव (१)। इदं यथा (२)। अग्निर्न ये (३)। चतुरश्चिद्ददमानात् (४)। ब्राह्मणा व्रतचारिणः (५)। वृक्षस्य नु ते पुरुहूतवयाः (६)। जार आ भगम् (७)। मेषो भूतोऽभि

यन्नयः (८)। तद्रूपः (९)। तद्वर्णः (१०)। तद्वत् (११)। तथा (१२)। इत्युपमाः॥ १३॥

इदमित्यादीनि भाष्यकारेणैव व्याख्यातानि (निरु० ३, १३—१८)॥ १३॥

अर्चति (१)। गायति (२)। रेभति (३)। स्तोभति (४)। गूर्धयति (५)। गृणाति (६)। जरते (७)। ह्वयते (८)। नदति (९)। इच्छति (१०)। रिफति (११)। धमति (१२)। कृपायति (१३)। कृपण्यति (१४)। पनस्यति (१५)। पनायते (१६)। वल्गूयति (१७)। मन्दते (१८)। भन्दते (१९) छन्दति (२०)। छदयते (२१)। शशमानः (२२)। रञ्जयति (२३)। रजयति (२४)। शंसति (२५)। स्तौति (२६)। यौति (२७)। रौति (२८)। नौति (२९)। भनति (३०)। पणायति (३१)। पणते (३२)। सपति (३३)। पप्टचाः (३४)। महयति (३५)। वाजयति (३६)। पूजयति (३७)। मन्यते (३८)। मदति (३९)। रसति (४०)। स्वरति (४१)। वेनति (४२)। मन्द्रयते (४३)। जल्पति (४४) इति चतुश्चत्वारिंशदर्चतिकर्माणः॥ १४॥

(१) अर्चति। 'अर्च पूजायाम् (भू॰ प॰)'। "अर्चन्त्यर्कमर्किणः (ऋ॰ सं॰ १, १, १८, १)"—इति निगमः॥

(२) गायति। 'कै गै शब्दे (भू॰ प॰)'। "गायन्ति त्वा गायत्रिणः (ऋ॰ सं॰ १, १, १८, १)"—इति निगमः।

(३) रेभति। (४) स्तोभति। 'रेभृ शब्दे (भू॰ आ॰)' 'ष्टुभ स्तम्भे (भू॰ आ॰)'। आत्मनेपदिनौ व्यत्ययेन परस्मैपदम्। "रेभन्तो वै देवाय ऋषयश्च स्वर्गं लोकमायन् (ऐ॰ ब्रा॰ ६, ५, ६)"—"सोमं प्रविशमभ्येति रेभन् (ऋ॰ सं॰ ७, ४, ७, १)"—"परिष्टोभन्त यिशुति (ऋ॰ सं॰ १, ५, १०, ४)"—इति निगमाः॥

(५) गूर्दयति। नैरुक्तधातुः। "तद्गूर्दयुः संयरम् (ऋ॰ सं॰ ६, १, २८, १)"—इति निगमः॥

(६) गृणाति। 'गॄ शब्दे' क्र्यादि स्वादिश्च। "काव्यतमो नामं गृणाति नृणाम् (ऋ॰ सं॰ १, ४, ३, ४)"—इति निगमः॥

(७) अरते। नैरुक्तधातुः। "पुरुष्टुतो अरते सूक्तवाचान् (ऋ॰ सं॰ १, ४, २५, ७)"—इति निगमः॥

(८) ह्वयते। 'ह्वेञ् स्पर्धायाम् (भू॰ उ॰)'। "वाहिष्ठो वां हवानाम् (ऋ॰ सं॰ ६, २, २८, १)"—इति निगमः। 'हवाः स्तोमाः ह्वयतेरर्चतिकर्मत्वात्'—इति स्कन्दस्वामी॥

(९) नदति। 'णद अव्यक्ते शब्दे (भू॰ प॰)'। "नदस्य मा रुधतः काम आगन् (ऋ॰ सं॰ २, ४, २२, ४)"—इति निगमः॥

(१०) पृच्छति। 'प्रच्छ ज्ञीप्सायाम्' तुदादि.। 'अहिर्वा (६, १, १६)'—इत्यादिना सम्प्रसारणम्॥

(११) रिहति। 'रिह कत्थनादौ'—इति क्षीरस्वामी।

तुदादिः । "शिशुं न विप्रा मतिभी रिहन्ति (ऋ० सं० ८, ७, ७, १)"—इति निगमः । अत्र भाष्ये तु "समानवृत्तित्व-प्रदर्शनपरं लिहन्ति पर्यायवचनम्"—इति । "विप्रा रिहन्ति धीतिभिः (ऋ० सं० १, २, ६, ४)"—इत्यत्र 'रिहतिधर्मतीत्यर्चतिकर्मसु पाठात्'—इति स्कन्दस्वामी ।

(१२) धमति । गतिकर्मसु व्याख्यातः (२०२ पृ०) ॥

(१३) क्षपायति । (१४) क्षपस्यति । (१५) पनस्यति । नैरुक्तधातवः । "मुर्वताता ये कृपणन्त रत्नम् (ऋ० सं० ८, ३, ५, ३)"—इत्यत्र क्षपणन्त स्तुवन्ति'—इति भट्टभास्कर-मिश्रः । "त्वं पनस्युमर्किणम् (ऋ० सं० १, १, १७, ५)"—इति निगमः । 'पनस्यतिरर्चतिकर्मा, स्तुत्यमित्यर्थः'—इति स्कन्दस्वामी ॥

(१६) पनायते । 'पण व्यवहारे स्तुतौ च'—'पन च (भू० आ०)' । गुपूधूपविच्छिपणिपनिभ्य आयः (३, १, २८)' । "प्रभोर्जुनां महिमानं पनायत (ऋ० सं० १, १, २०, १)"—इति निगमः ॥

(१७) वल्गूयति । 'वल्गु पूजामाधुर्ययोः' कण्ड्वादिः । "वल्गूयति वन्दते पूर्वभार्जम् (ऋ० सं० २, ७, २७, २)"—इति निगमः ॥

(१८) मन्दते । 'मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु (भू०)' आत्मनेपदी । "प्र वो महे मन्दमानायान्धसः (ऋ० सं० ८, १, ८, १)"—इति निगमः ॥

(१९) भन्दते । 'भदि कल्याणे सुखे च' आत्मनेपदी । "पुरुप्रियो भन्दते धामभिः कविः (ऋ० सं० २, ८, २०, ४)"—इति निगमः ॥

(२०) छन्दति । 'छदि संवरणे' चुरादिः । बहुलमन्यत्रापि

सञ्ज्ञायाच्छन्दसोः (उ० २, २१)'—इति लुक्। "तृषायाच्छन्दुर्भवति हर्यतो हृषा (ऋ० सं १, ४, १८, ४)"—इति निगमः।

(२१) छदयते। 'छद अपवारणे' चुरादि.। 'सञ्ज्ञापूर्वको विधिरनित्यः (प० शे० ९३)'—इति वृद्ध्यभावः। 'चदन्तोऽद्रष्टव्य.'—इति भट्टभास्करमिश्र ॥

(२२) शशमान.। 'शशमानः शंसमानः (निरु० ६, ८)'—इति भाष्ये 'शसु स्तुताविव्यस्य शंशस्त्रियमव्यते'—इति स्कन्दस्वामी। शसेर्लटि पृषोदरादित्वाद्रूपसिद्धि.। यद्वा, 'शश प्लुतगतौ (भू० प०)'। 'ताच्छील्यवयोवचनशक्तिषु चानश् (३, २, १२९)'। "यो वां यज्ञैः शशमानोह दाशति (ऋ० सं० २, २, २१, २)"—इति निगमः॥

(२३) रञ्जयति। (२४) जरयति। 'रञ्ज रागे (भू० उ०)', 'जृष् वयोहानौ (दि०प०)' हेतुमति णिच्॥

(२५) शंसति। 'शंसु स्तुतौ (भू० प०)'। "मा चिदन्यद्वि शंसत (ऋ० सं० ५, ७, १०, १)"—इति निगम.॥

(२६) स्तौति। 'ष्टु स्तुतौ' अदादिः। 'उतो वृद्धिर्लुकि-हलि (७, ३, ८९)'। "इदमित् स्तोतारं वघवं सचासुत"—इति निगम.॥

(२७) यौति। (२८) रौति। (२९) नौति। 'यु मिश्रणे' 'रु शब्दे' 'नु स्तुतौ' अदादयः। "कवष्योयापमृष्यानेभिरैवैः (ऋ० सं० ३, ८, ८, १)"—इति निगम। "घुक्षे॑भि प्र णो॑नुमः (ऋ० सं० १, ५, २६, १)"—इति निगम.॥

(३०) भनति। नैरुक्तधातु।

(३१) पणायति। (३२) पणते। पण व्यवहारे स्तुतौ च (भू० आ०)'। 'गुपूधूप (३, १, २८)'—इत्यादिना आय., आर्धधातुकत्वात् आयप्रत्यये विकल्पिते पणते इति रूपम्।

"देवो नयत् सविता सुपाणिः (ऋ० सं० ३, २, १२, १)"—इति निगमः। 'पाणिः पणायतेः पूजाकर्मणः (२, २६)'—इति निरुक्तम्।

(३३) सपति। 'षप समवाये (भू० प०)'। "मरुत्वान्‌: प्रसुर्प साकमो रते (ऋ० सं० ७, २, २२, २)"। 'प्रसुप, सपते-रर्चतिकर्मणः'। "वि ये चृतन्त्यृता सपन्तः (ऋ० सं० १, ५, ११, ४)"—इति निगमौ॥

(३४) पपृचाः। पृचतिर्नैकधातुः। पृचेः सनि 'हल-न्ताच्च (१, २, १०)'—इत्यत्र चत्वघटस्य जातिवाचकत्वात् 'अनिदिताम् (६, ४, २४)'—इति नलोपः गुणाभावश्च। सन-न्ताल्लेटि (३, ४, ७), सिपि (३, १, ३४), आडागमे (३, ४, ९४), 'इतश्चलोपः (३, ४, ९७)'। "वायो तव प्रपृञ्चती (ऋ० सं० १, १, ३, ३)'—इत्यत्र 'पपृचाः, मंहयति,—इत्यर्चति-कर्मसु पाठात् पृचतिः स्तुत्यर्थोऽपि'—इति स्कन्दस्वामी॥

(३५) मंहयति। 'मह पूजायाम् चुरादिरदन्तः'। "त्वं नु सुवं मंहया स्वर्विदम् (ऋ० सं० १, ४, ११, १)"—इति निगमः॥

(३६) वाजयति। वजेर्णिच्। "वाजयामः शतक्रतो (ऋ० सं० १, १, ८, ४)"—इति निगमः॥

(३७) पूजयति। 'पूज पूजायाम्' चुरादिः॥

(३८) मन्यते। 'मन ज्ञाने' दिवादिः। "इमा उ वां भूमयो मन्यमाना (ऋ० सं० ३, ४, ८, १)"—इति निगमः॥

(३९) मदति। 'मदी हर्षग्लेपनयोः (दि० प०)'। "द्युमन्तो याभिर्मदेम (ऋ० सं० १, २, २०, ३)"—इन्द्रं गीर्भिर्मदता वस्वो अर्णवम् (ऋ० सं० १, ४, ८, १)"—इति निगमौ। 'मदति रसतीत्यर्चतिकर्मसु पाठात्'—इति स्कन्दस्वामिभाष्यम्॥

(४०) रसति। 'रस शब्दे (भू० प०)'।

(४१) स्वरति। 'स्वृ शब्दोपतापयोः (भू० प०)'। "स्वरे-याद्रिं स्वर्याः नवग्वैः (ऋ० स० १, ५, १, ४)"—"ऋषिस्वरं चरति यासु नाम ते (ऋ० स० ४, २, २४, ३)"—इति निगमौ। "स्वरेयाद्रिम्"—इत्यत्र 'स्वरति वेनतीत्यर्चति-कर्मसु पाठात्'—इति, "ऋषिस्वरम्"—इत्यत्र 'स्वरतिरर्चति-कर्मा'—इति च स्कन्दस्वामी।

(४२) वेनति। (४३) मन्द्रयते। नैरुक्तधातू। "अनु-र्वाणं वृषभं मन्द्रजिह्वम् (ऋ० स० २, ५, १२, १)"—इति निगमः। 'मन्द्रयतिरर्चतिकर्मा स्तुत्यवाचकम्'—इति स्कन्द-स्वामी।

(४४) जल्पति। 'जल्प व्यक्तायां वाचि (भू० प०)'।

इति चतुश्चत्वारिंशदर्चतिकर्माणि ॥ १४ ॥

विप्रः (१)। विग्रः (२)। गृत्सः (३)। धीरः (४)। वेनः (५)। वेधाः (६)। कण्वः (७)। ऋभुः (८)। नवेदाः (९)। कविः (१०)। मनीषी (११)। मन्धाता (१२)। विधाता (१३)। विपः (१४)। मनश्चित् (१५)। विपश्चित् (१६)। विपन्यवः (१७)। आकेनिपः (१८)। उशिजः (१९)। कीस्तासः (२०)। अद्धातयः (२१)। मतयः (२२)। मतुथाः (२३)। वाघतः (२४)। इति चतुर्विंशतिर्मेधाविनामानि ॥ १५ ॥

(१) विप्रः । 'टु वप बीजसन्ताने (भू०उ०)' । 'विप क्षेपे'—इति क्षीरस्वामी । 'ऋज्रेन्द्राग्रवज्रविप्र (उ० १, २७)' —इत्यादिना रन्प्रत्यये इत्वं गुणाभावश्च निपात्यते । उप्यतेऽस्मिन्नतिशयेन मेधा । क्षिपत्यनया पापं वा । यद्वा, 'विप्'—इति सत्रामनामसु व्याख्यातम् (१६२ पृ०), सास्यास्तीति रो, मत्वर्थीयः, पृषोदरादित्वात् जश्त्वाभावः । बाहुयी हि मेधा । यद्वा, 'प्रा पूरणे (अदा० प०)' विपूर्वः । 'आतोऽनुपसर्गे (३, २, ३)'—इति कः । 'आतो लोप इटि च (६, ४, ६४)' । विशेषेण पूरयति विद्यार्थिनामपेक्षाः । "गृणन्ति विप्र ते धियः (ऋ० सं० १, १, २६, २)"—इति निगमः ।

(२) विप्रः । विपूर्वात् ख्यातेः 'अन्येष्वपि दृश्यते (३, २, १०१)'—इति डः । विविधं ख्यात्यर्थान् । "परं हि विप्रमस्तृतम् (ऋ० सं० १, १, ७, ४)"—इति निगमः ।

(३) गृत्सः । 'गृधु अभिकाङ्क्षायाम् (दि०प०)' 'हृपिशुषिरुहिचियिमृगृदृभ्यः कित्'—इति सप्रत्ययः । अभिकाङ्क्षते सर्वं । यद्वा, गृणातेः स्तुतिकर्मणो बाहुलकात् सक्प्रत्ययो कुत्वं तुगागमश्च । स्तुत्यो लोकस्य, स्तोता वा देवानाम् । "गृत्सस्य धीरा स्तवसो विवो मदे (ऋ० सं० ७, ७, ११, ५)" —"नमो गृत्सेभ्यो गृत्सपतिभ्यश्च (य० वा० सं० १६, २५)" —इति निगमौ ॥

(४) धीरः । दधातेः 'सुसूधागृधिभ्यः क्रन् (उ० २, २३)' —इति क्रन्प्रत्ययः, 'घुमास्थागापा (६, ४, ६६)'—इतीत्वम् । धत्ते श्रुतमर्थम्, ददाति वा विद्याः शिष्येभ्यः । यद्वा, धीः प्रज्ञा कर्म वा, रो मत्वर्थीयः । 'धियमीरयति'—इति क्षीरस्वामी । तत्र धीशब्दे उपपदे 'कर्मण्यण् (३, २, १)' ।

"समाधीत्‌ याकुमत्वाविवेश (ऋ० सं० २, ३, १८, १)"—इति निगमः॥

(५) वेनः। अजतेः 'धापूवस्यज्यतिभ्यो नः (उ० ३, ६)'—इति नप्रत्ययः, वीभावः। अजति सत्कार्यं लोके, अवमच्छत्यर्थान्, अवमच्छत्यस्मादर्थसंशयान्, गच्छत्येन विद्वाविन:, विपत्तमर्थान् पापं वा। यद्वा, वेनतेः कान्तिकर्मणो गतिकर्मणो वान्तिकर्मणो वा 'घुंसि संज्ञायां घः (३, ३, ११८),' "गिरि न वेना अधिरोह तेजसा (ऋ० सं० १, ४, २१, २)'—इति निगमः॥

(६) वेधाः। दधातेर्विपूर्वात् 'विधाञो वेध च (उ० ४, २१८)'—इत्यसुन् वेधादेशश्च। विदधाति काव्यादि। "मोर्षया वृष कपुनेव वेधसः (ऋ० सं० ४, २, १५, १)"—"सोमो न वेधा ऋतप्रजातः (ऋ० सं० १, ५, ८, ५)"—"आ पृणो विश्वतिर्विश्ववेधाः (ऋ० सं० १, ४, २६, २)"—इति निगमा॥

(७) कण्वः। 'कण शब्दे (भू०प०)' 'कण निमीलने (चु० प०)' वा। 'अशुप्रुषिलटिकणिखटिविशिभ्यः क्वन् (उ० १, १४८)'। कणति स्तोत्रलक्षणं शब्दं करोति, काणते स्तूयते वा, निमीलयति परान् वा स्वतेजसा। "कण्वा अभि प्रगायत (ऋ० सं० १, ३, १२, १)"—'कण्वतमो नाम गृणाति नृणाम् (ऋ० सं० १, ४, ३, ४)"—इति निगमौ॥

(८) ऋभुः। 'ऋभुवा इत्यत्र व्याख्यातम् (२४८ पृ०)'। "ऋभुर्ऋभुभिरभि वः स्याम (ऋ० सं० ३, ४, १५, २)"—इति निगमः॥

(९) नवेदाः।"एषां भूत नवेदा मतानाम् (ऋ० सं० ३, २, २६, ३)"—इत्यत्र नवेदेति न वेत्तीत्यभिमर्थ्य वर्त्तते। अत्र

एतत् ? निपातनात्, वैयाकरणा 'नभ्राण्नपान्नवेदा (६, ३, ७५)'—इति निपातयन्ति'—इति स्कन्दस्वामी । तत्र द्विनञ्-पूर्वाद् विदेः कर्त्तर्यसुनि एकस्य नञो लोपोऽन्यस्य प्रकृति-भावश्च निपात्यत इति भावः । "विश्विश्रो युधा भवतं नवेदसा (ऋ० सं० १, ३, ४, १)"—इति निगमः ॥

(१०) कविः । 'कविः क्रान्तदर्शनो भवति कवतेर्वा (निरु० १२, १३)'—इति भाष्ये 'क्रामतेः कवतेर्वा गतिकर्मण इति रूपम्'—इति स्कन्दस्वामी । क्रामतेः कवतेश्च 'इन् सर्व-धातुभ्यः (उ० ४, ११८)'—इतीन्प्रत्ययः क्रामतेर्मकारस्य वत्वं रेफलोपश्च बाहुलकात् । क्रान्तमस्यास्तीति मत्वर्थीयस्य लुक् । कविः क्रान्तदर्शनः । 'अतीतानागतविप्रकृष्टविषयं युगपत् ज्ञानं यस्य स क्रान्तदर्शनः'—दुर्गवटः । "कवी नो मित्रावरुणा (ऋ० सं० १, १, ४, ३)"—इति निगमः ॥

(११) मनीषिणः । 'मनु अवबोधने (दि० आ०)' । 'कृतॄभ्यामीषन् ( उ० ४, २६ )'—इति बाहुलकादीषन् । मनीषा प्रज्ञाऽस्यास्ति व्रीह्यादित्वात् इनिः । यद्वा, मनस ईषा स्तुतिः प्रज्ञा वा मनीषा । पृषोदरादित्वाद्रूपसिद्धिः । पूर्ववदीषन् । "घृतपृष्ठं मनीषिणः (ऋ० सं० १, १, २४, ५)"—इति निगमः ।

(१२) मन्धाता । मन्यतेर्ल्युट्, दधातेस्तृच् । मानस्य ज्ञानस्य विधातयिता, पृषोदरादिः (६, ३, १०६) । "मन्धा-तारिं द्रविणोदा ऋता वा (ऋ० सं० ७, ५, २०, २)"—इति निगमः ॥

(१३) विधाता । विपूर्वात् दधातेस्तृच् । वेधःशब्दव-दर्थः । निगमोऽन्वेषणीयः ॥

(१४) विपः । 'विप क्षेपे (चु० प०)' । इगुपधत्वात्कः

कः (३, १, १, ३५)। विप्रवदर्थः। "वस्य्वाद् ब्रुवन्तो विप्रा (ऋ॰ सं॰ ६, ४, ४३, १)"—इति निगमः॥

(१५) मनश्चित्। मनःशब्दोपपदात् 'चिती संज्ञाने (भू॰ प॰) इत्यस्मादौणादिकः क्विप्। मनसा चेतयते। निगमोऽन्वेषणीयः॥

(१६) विपश्चित्। विपो वाचश्चेतयते 'तत्पुरुषे कृति बहुलम् (६, ३, १४)'—इत्यलुक्। 'विपश्यंश्चेतयते'—इति क्षीरस्वामी। पृषोदरादित्वात् पश्यतेरूपम्। "धर्मं क्रतुं विपश्चिते पनस्यवे (ऋ॰ सं॰ ६, ७, २, १)"—इत्यत्र पृक्षा विपश्चितम् (ऋ॰ सं॰ १, १, ७, ४)"—इति निगमौ।

(१७) विपन्यवः। विपतेः 'कत्युच् विपेश्च (उ॰ ३, ४८)'—इत्यत्र प्राक्प्रत्ययनिर्देशस्याधिकविषयत्वात् अन्युच्प्रत्ययः। यद्वा, विविधं पननं स्तुतिः 'मृगय्वादयश्च (उ॰ १, ३६)'—इति कुप्रत्ययः। "विपन्यवो विप्रासो वाजसातये (ऋ॰ सं॰ ६, ६, १०, ६)"इति निगमः।

(१८) आकेनिपः। आङ्शब्दे, केशब्दे, निशब्दे चोपपदे त्रिपूर्वात् पततेः 'अन्येष्वपि दृश्यते (३, २, १०१)'—इति डः। 'तत्पुरुषे कृति बहुलम् (६, ३, १४)'। के आत्मनि पतन्ति अध्यात्मध्याने पतन्त इत्यर्थः। "अग्नौ यज्ञे केनिपा-नामृषिणो वृधे (ऋ॰ सं॰ ७, ८, २६, ४)"—इति निगमः॥

(१९) उशिजः। 'वश कान्तौ (अदा॰प॰)' 'वशेः किच्च (उ॰ २, ६८)'—इति इजिप्रत्ययः। 'ग्रहिज्या (६, १, १६)'—इत्यादिना सम्प्रसारणम्। कामयते आत्मात्मभिन्नं व्याख्यातुं वा। "कक्षीवन्तं य औशिजः (ऋ॰ सं॰ १, ३४, १)"—इति निगमः॥

(२०) कीस्तासः। कीर्तयतेः पचाद्यचि (३, १, १

धृश्नि वा । कीर्त्तयन्ति प्रशस्तानर्थान् "कीस्तासो भृमिर्थवः (ऋ० सं० २, १, १२, २)"—इति निगमः ॥

(२१) ऋतायवः । ऋतेति सत्यनाम । ऋततेरतयः । सत्यं प्राप्नोति, गत्यर्था बुद्ध्यर्थाः, सत्यं जानाति वा । "तदृतायुर्विदुः (ऋ० सं० ८, ३, २३, १)"—इति निगमः ॥

(२२) मतयः । मन्यतेः क्तिन् । प्रायस्तेऽस्मादर्थाः । यद्वा, मतिरस्यास्ति मत्वर्थीयस्य लुक् । "भद्रो'ह्यर्थावं मतिभिः शविष्ठम् (ऋ० सं० ४, ६, १३, २)"—"त्वामिन्द्र मतिभि सुतम्"—इति निगमौ ॥

(२३) मतुथाः । 'पृषोदरादय'—इति मनेस्थकि नकारस्य तुभावो निपात्यते । "तुवोऽसि विश्ववेदाः (य० ब्रा० स० ५, ३१)" । 'विभजत्य. 'ब्रह्म वै तुथः (य० ब्रा० ४, ३, ४, १५)'—इति श्रुति —इत्युवटः । मत ज्ञानं तुथो मनुथेः । तेन मनतुथाः सन्त पृषोदरादित्वेन मतुथाः । निगमोऽन्वेषणीय ॥

(२४) वाघतः । वहेः 'सन्महत्पृषद्बृहत् (उ० २, ८६)'—इति प्रत्यय, उपधावृद्धिः, हकारस्य घकारश्च निपात्यते । निवहति यज्ञार्थान् । "त्रिष्टो यमी तरणित्वेन वाघतः (ऋ० सं० १, ७, ३०, ४)"—इति निगमः ॥

इति चतुर्विंशतिर्मेधाविन इति मेधाविनामानि ॥१५॥

**रेभः (१) । जरिता (२) । कारुः (३) । नदः (४) । स्तामुः (५) । कीरिः (६) । गौः (७) । सूरिः (८) । नादः (९) । छन्दः (१०) । स्तुप् (११) । रुद्रः (१२) । कृपण्युः (१३) इति त्रयोदश स्तोतृनामानि ॥ १६ ॥**

(१) रेभः। रेभतिरर्चतिकर्मा (२७२ पृ०)। अच्। स्तौति। निगमोऽन्वेषणीयः ।

(२) जरिता। जरतेरर्चतिकर्मणः (२७२ पृ०)। "त्वामग्ने जरितारः (ऋ० सं० १, १, ३, २)"—इति निगमः ।

(३) कारुः। करोतेः 'कृवापाजि (उ० १, १)'—इत्युण्। कर्त्ता "विदुष्टे तस्य कारवः (ऋ० सं० १, १, २१, ६)"—इति निगमः ।

(४) नदः। नदति स्तुतिकर्मा (२७२ पृ०)। अच्। "नदस्य मा रुधतः काम आगन् (ऋ० सं० २, ४, २२, ४)"—इति निगमः ।

(५) स्तामुः। 'ष्टन ष्टम वैक्लव्ये (भू० प०)'। 'छन्दसीणः (उ० १, २)'—इति बाहुलकादुण्। स्तोत्रकर्मणि "तामु"—इति केचित् पठन्ति। 'तमु काङ्क्षायाम् (दि० प०)'। पूर्ववद् बाहुलकादुण्। काङ्क्षति स्तोतुम्। उभयोरेव निगमोऽन्वेषणीयः ।

(६) कीरिः। 'कै गै रै शब्दे (भू० प०)'। 'कायः कीः'—इति इप्रत्ययः। आकारलोपः। स्तोत्रलक्षणं शब्दमारचयति। 'इन् सर्वधातुभ्यः (उ० ४, ११४)' "कीरेश्चिन्मन्म मनसा वनोषि तम् (ऋ० सं० १, २, ३४, ३)"—इति निगमः ।

(७) गौः। व्याख्यातं पृथिवीनामसु (४ पृ०)। गायन्ति स्तूयन्तेऽनेन देवताः। "यो अश्वानां गवां गोपतिर्वशी (ऋ० सं० १, ७, १२, ४)"—इति निगमः। 'गोपतिः स्तोतृपतिः'—इति स्कन्दस्वामी ।

(८) सूरिः। 'षू प्रेरणे (तु० प०)'। 'सूरेः क्रिः (उ० ४, ६६)'—इति सुवतेः क्रिर्भवति। प्रकर्षेण ईरयति स्तोत्रम्।

"सदा पश्यन्ति सूरयः (ऋ० सं० १, २, ७, ५)"—इति निगमः ॥

(८) नादः । नदतेर्घञ् । भवत्यस्मात् स्तुतिः । निगमोऽन्वेषणीयः ॥

(१०) छन्दः । छन्दतिरर्चतिकर्मा (२७३ पृ०) । असुन् । 'छद आच्छादने (चु० प०)' । 'छदेर'—इत्यसुन् । आच्छादयति स्तोतॄन् । निगमोऽन्वेषणीयः ॥

(११) स्तुप् । स्तोभतिरर्चतिकर्मा (२७२ पृ०) । क्विप् । निगमोऽन्वेषणीयः ॥

(१२) रुद्रः । रौतेः क्विप्, रुत् शब्दः, मत्वर्थीयो रः । स्तोत्रलक्षणशब्दवानित्यर्थः । "क्राणा रुद्रेभिर्वसुभिः पुरोहित (ऋ० सं० १, ४, २३, ३)"—इति निगमः ॥

(१३) कृपण्युः ॥

इति त्रयोदश स्तोतृनामानि ॥ १६ ॥

**यज्ञः (१) । वेनः (२) । अध्वरः (३) । मेधः (४) । विदथः (५) । नार्यः (६) । सवनं (७) । होत्रा (८) । इष्टिः (९) । देवताता (१०) । मखः (११) । विष्णुः (१२) । इन्दुः (१३) । प्रजापतिः (१४) । धर्मः (१५) । इति पञ्चदश यज्ञनामानि ॥ १७ ॥**

(१) यज्ञः । 'प्रख्यातं यजतिकर्मेति नैरुक्ता (३, १९)'—इत्यादि भाष्यकारेण, स्कन्दस्वामिना च यज्ञशब्दो बहुधा व्युत्पादितः । यजेः 'यजयाचयतविच्छप्रच्छरक्षो नङ् (३, ३, ९०)' । यजनम् । इज्यन्तेऽत्र देवताः । अन्येषु पृषोदरा-

टित्वेन रूपसिद्धिः। "प्रप्रेयं यज्ञो नु उदेव (ऋ० सं० ३, ८, २१, ४)"—इति निगमः॥

(२) वेन.। व्याख्यातं मेधाविनामसु (२७८ पृ०)। गच्छत्यनेन स्वर्गम्, प्रचिम्यते देवतोद्देशेन वाज्ञिन् द्रव्यम्, तेनात्र देवताः काम्यन्ते वा। निगमोऽन्वेषणीयः॥

(३) अध्वरः। ध्वरतिर्वधकर्मा। 'पुंसि संज्ञायां घः (३, ४, ११८)'। नञ्पूर्वः। ध्वरा हिंसा, तदभावो यत्र। अतएव शिष्टा, आरन्ति—"औपधः पशवो ब्रह्मास्वयंभुः पश्चिमस्तथा। यज्ञार्थे निधनं प्राप्ताः प्राप्नुवन्त्युच्छ्रितां गतिम्'—इति। तस्मादुपयम् यज्ञे हिंसा स्वलिंप्यामितयथोयवचनादहिंसा प्रतीयते। अन्यत्र विस्तरेणोपपादितः। अथवा यज्ञार्थे बहुव्रीहि। अविद्यमानोऽध्वरो यस्य सोऽध्वर' रक्षोभिरहिंसितः। "राजन्तमध्वराणाम् (ऋ० सं० १, १, ३, ३)"—इति निगम.।

(४) मेध'। व्याख्यातं धननामसु (१८० पृ०)। गच्छन्त्यत्र देवता हविर्ग्रहीतुं, दक्षिणार्थं वा सदस्यात्, हिंसनयनेन प्रायं वा। 'अस्मिं यज्ञो द्रव्याणामुत्तसामर्थ्यात्तविषयं सारभूतात्' —इति माधवः। "मेधं सुपस्तु वर्द्धयः (ऋ० स० १, १, ३, ३)"—"तं मेधेषु प्रथम देवयन्तीः (ऋ० सं० १, ५, २४, ३)" —इति निगमौ॥

(५) विदथः। 'विद ज्ञाने (अदा०प०)' 'विद विचारणे (रु० आ०)' 'विद्लृ लाभे (तु० उ०)' 'विद सत्तायाम् (दि० आ०)'। 'रुदिविदिभ्यां ङित् (उ० ३, ११९)'—इति अथ-प्रत्ययः। ज्ञायते हि यज्ञ, लभते हि दक्षिणादिरत्र, विचार्यते हि विहाति, भावयत्यनेन फलम्। "यथा जिवो विदथमावदाम (ऋ० सं० ८, ३, २१, २)"—इति निगमः॥

(६) नार्यः । 'णी नये' भ्वादिः । 'ऋहलोर्ण्यत् (३, १, १२४)' । नयति स्वर्गं कर्त्तारम्, नीयतेऽन्नमनुष्ठानेन वा । निगमोऽन्वेषणीयः ॥

(७) सवनम् । 'षुञ् अभिषवे (स्वा०उ०)' । 'सुयुरुहभ्यो युच् (उ० २, ७०)' । अभिषूयतेऽस्मिन् सोम । "उप नः सवना गहि (ऋ० सं० १, १, ७, २)"—इति निगमः ॥

(८) होत्रा । व्याख्यातं वाङ्नामसु (७३ पृ०) । हूयतेऽस्मिन् हवि । "होत्राविदः स्तोमतष्टासो अर्कैः (ऋ० सं० ७, ६, १८, ४)"—इति निगमः ॥

(९) इष्टि । यजेरिषेर्वा क्तिन् । यजतेर्यज्ञवदर्थः, इष्यते हि सः । 'इष्टिशब्दो हविर्यज्ञे आद्युदात्तः, यज्ञमात्रे मोदात्तः' —इति माधवः । "यथातद्यज्ञमीष्टये (ऋ० सं० १, २, ३०, २)"—इति निगमः ॥

(१०) देवताता । 'दिवु क्रीडादौ (दि० प०)' । दीव्यन्ति स्तुवन्त्यत्र देवताः । देव एव देवता । 'सर्वदेवात्तातिल् (४, ४, १४२)' सप्तम्या आकारः (७, १, ३९) । "त्रिर्देवताता त्रिरुताहन् धियः (ऋ० सं० १, ३, ४, ५)"—"आ देवताता हविषा विवासति ( ऋ० सं० १, ४, २३, १ )"—इति निगमौ ॥

(११) मखः । 'मह पूजायाम् (भू० प०)' । 'महेः ख च' घप्रत्ययो हलोपश्च । महन्त्यत्र देवता । यद्वा, 'मख गतौ' घः । वेनवदर्थः । "मखः सहस्त्रदर्चति (ऋ० सं० १, १, १२, ३)"—"विवक्षि वह्निः स्वपस्य ते मखः (ऋ० सं० ७, ६, १०, १)"—इति निगमौ ॥

(१२) विष्णु । 'विष्लृ व्याप्तौ (जु० उ०)' । 'विषेः किच्च (उ० ३, ३९)'—इति नुप्रत्ययः । विशेषेणाप्नोति स्वर्गम् ।

(६) नार्ये । 'नॄ नये' क्र्यादिः । 'ऋहलोर्ण्यत् (३, १, १२४)' । नयति स्वर्गं कर्त्तारम्, नीयतेऽथमनुष्ठानेन वा । निगमोऽन्वेषणीयः ॥

(७) सवनम् । 'षुञ् अभिषवे (स्वा० उ०)' । 'सुयुरुहभ्यो युच् (उ० २, ७०)' । अभिषूयतेऽस्मिन् सोम । "उप नः सवना गहि (ऋ० सं० १, १, ७, २)"—इति निगम. ॥

(८) होत्रा । व्याख्यात वाङ्नामसु (७३ पृ०) । दीयतेऽस्मिन् हवि । "होत्राविदः स्तोमतष्टासो अर्कैः (ऋ० म० ७, ६, १८, ४)"—इति निगम ॥

(९) इष्टि । यजेरिषेर्वा क्तिन् । यजतेरर्थमयदर्थं, इष्यते हि सः । 'इष्टिशब्दो हविर्यज्ञे आद्युदात्त., यज्ञमात्रे मोदात्त.' —इति माधवः । "यथाविदुष्टमग्नीष्टये (ऋ० सं० १, २, ३०, २)"—इति निगमः ॥

(१०) देवताता । 'दिवु क्रीडादौ (दि० प०)' । दीव्यन्ति स्तुवन्त्यत्र देवताः । देव एव देवता । 'सर्वदेवात्तातिल् (४, ४, १४२)' समम्या आकार. (७, १, ३९) । "विदेवताता बिभृ माहेत धियाः (ऋ० सं० १, २, ४, ५)"—"आ देवताता हविर्वा विवासति (ऋ० सं० १, ४, २२, १)"—इति निगमौ ॥

तथ (६, ४, १०३)'—इति धीभावो मकारलोपाभावश्च। "दुह यो' यन्धि स्रीवसि' (ऋ० सं० ६, ५, ३, २)"—इति निगमः॥

(१४) इषुध्यति। 'इषु चरणे' कण्ड्वादिः। "विश्वो' राय इषुध्यति (ऋ० सं० ४, २, ४, १)"—इत्यत्र 'इषुध्यतिर्याच्ञाकर्मणः'—इत्युवटः॥

(१५) मदेमहि। 'मदी हर्षग्लपनयोः' स्वरितेत्, लिङ्॥

(१६) मनामहे। 'म्ना अभ्यासे' व्यत्ययेनात्मनेपदम्, पाघ्राध्मास्थाम्ना (७, ३, ७८)'—इत्यादिसूत्रेण मनादेशः। "सुम्नयो' मनामहे' (ऋ० सं० १, २, २१, ६)"—इति निगमः॥

(१७) मायते। सौत्रधातुः॥

इति सप्तदश याच्ञाकर्माणः॥ १९॥

दाति (१)। दाशति (२)। दासति (३)। राति (४)। रासति (५)। पृणक्षि (६)। पृणाति (७)। शिक्षति (८)। तुञ्जति (९)। मंहते (१०) इति दश दानकर्माणः॥ २०॥

(१) दाति। 'दाप् लवने' अदादिः, ददातेर्वा 'बहुलं छन्दसि (२, ४, ७३)'—इति शपो लुक्। "दाति प्रियाणि चिद्वसु' (ऋ० सं० ३, ५, ८, ३)"—इति निगमः॥

(२) दाशति। 'दाशृ दाने' स्वरितेत्। "धनं' यस्मै' सुदाशुमर्त्यः (ऋ० सं० १, २, ८, ४)"—इति निगमः॥

(३) दासति। 'दासृ दाने' स्वरितेत्॥

(४) राति। 'रा दाने' अदादिः। "तस्य मे रास्व तस्य ते भक्षणाय"—इति निगमः॥

(५) रासति। 'रासृ शब्दे' व्यत्ययेन परस्मैपदम्। ध

नो रायस्कुरर्धगुन्द्राग्रा: (ऋ॰ सं॰ ४, ८, ६, २)"—इति निगमः॥

(६) पृणचि। 'पृची सम्पर्के' रुधादिः। "पृणचि सानसि क्रतुम् (ऋ॰ सं॰ ८, ७, २८, ४)"—इति निगमः॥

(७) पृणाति। 'पॄ पालनपूरणयोः' क्र्यादिः स्वादिश्च। "यः पृणाति स ह देवेषु गच्छति (ऋ॰ सं॰ २, १, १०, ५)"—इति निगमः॥

(८) मिनति। शचेः 'सनि मीमा (७, ४, ५४)'—इति इस्। 'अत्र लोपोऽभ्यासस्य (७, ४, ५८)' संयोगादिलोप (८, २, २९) "यस्तुभ्यं दाशाद् यो वा ते मिनात् (ऋ॰ सं॰ १, ५, १९, ३)"—इति निगमः। 'मिनतिर्दानकर्मा पठित' —इति स्कन्दस्वामिभाष्यम्॥

(९) तुञ्जति। 'तुजि हिंसायाम् पालने च'। "तुञ्जे तुञ्जे य उत्तरे (ऋ॰ सं॰ १, १, १४, २)"—इति निगमः॥

(१०) मंहते। 'मंहि महि वृद्धौ' आत्मनेपदी। "स्तोतृभ्यो मंहते मघम् (ऋ॰ सं॰ १, १, २१, ३)"—इति निगमः॥

इति दश दानकर्माणः॥ २०॥

## परिस्रव (१)। पवस्व (२)। अभ्यर्ष (३)। आशिषः (४)। इति चत्वारोऽध्येषणाकर्माणः॥ २१॥

(१) परिस्रव। 'स्रु गतौ (भ्॰ प॰)' परिपूर्वः। लोटम-ध्यमैकवचनम्। "इन्द्रायेन्दो परिस्रव (ऋ॰ सं॰ ६, ६, १४, ३)"—इति निगमः॥

(२) पवस्व। 'पूङ् पवने (भ्॰ आ॰)'। "पवस्व सोम मन्दयन् (ऋ॰ सं॰ ७, २, १६, १)"—इति निगमः॥

(३) अभ्यर्षं। 'ऋष गतौ' तुदादिः। 'छन्दस्युभयथा (३, ४, ११७)'—इति आर्धधातुकत्वे कित्त्वाभावाद् गुणः। "अभ्यर्षं स्वायुध"—इति निगमः॥

(४) आशिषः। अश्नोतेर्लेट्। 'सिब्बहुलं लेटि (३, १, ३४)' इट्, 'लेटोऽडाटौ (३, ४, ९४)'॥

इति चत्वारोऽध्येषणाकर्माणः ॥ २१ ॥

स्वपिति (१)। सस्ति (२)। इति द्वौ स्वपितिकर्माणौ ॥ २२ ॥

(१) स्वपिति। 'ञि ष्वप शयने' अदादिः। तिपि 'रुदादिभ्यः सार्वधातुके (७, २, ७६)'—इतीट्। "यो दीक्षितः स्वपिति"—इति निगमः॥

(२) सस्ति। 'षस स्वप्ने' अदादिः। "सस्तु माता सस्तु पिता (ऋ० सं० ५, ५, २२, ५)"—इति निगमः॥

इति द्वे स्वपितिकर्माणी ॥ २२ ॥

कूपः (१)। कातुः (२)। कर्तः (३)। वव्रः (४)। काटः (५)। खातः (६)। अवतः (७)। क्रिविः (८)। सूदः (९)। उत्सः (१०)। ऋश्यदात् (११)। कारोतरात् (१२)। कुशयः (१३)। केवटः (१४)। इति चतुर्दश कूपनामानि ॥२३॥

(१) कूपः। कुशब्दोपपदात् पिबतेः 'अन्येष्वपि दृश्यते (३, २, १०१)'—इति डः, 'अन्येषामपि दृश्यते (६, ३, १३७)'—इति दीर्घः। कुत्सितं पानमत्र, अप्रसाध्यत्वात्कौपासम्भवाद्वा। यद्वा, 'कुप क्रोधे' दिवादिः। इगुपधलक्षणः कः,

पृषोदरादित्वात् दीर्घः । कुप्यन्त्यस्मै मनुष्याः 'दुरादानत्वात् । यद्वा, कवतेर्गतिकर्मणः, 'कुयुभ्याञ्च (उ० २, २५)'—इति पप्रत्ययः, किन्त्वाद्दीर्घश्च । गम्यते जलार्थिभिः । "त्रितः कूपेऽवहितः (ऋ० स० १, ७, २३, २)"—इति निगमः ॥

(२) कातुः । 'कै गै शब्दे (भू० प०)' । 'सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन् (उ० १, ६७)'—इति बाहुलकात्तुन् । शब्दयते बहुलत्वादिना । यद्वा, कशब्दे उपपदे अततेः 'छन्दसीणः (उ० १, २)'—इति बाहुलकादुण् । कमुदकमस्मिन् अत्यते अधिगम्यते । निगमोऽन्वेषणीयः ॥

(३) कर्त्तः । करोतेर्वा हिंसायाः । 'हसिमृग्रिण्वामिदमिलूपूधुर्विभ्यस्तन् (उ० ३, ८३)'—इति बाहुलकात्तन् । क्रियते उत्पाद्यते पुरुषैः, हिंस्यन्त्यत्र चौराः पथिकादीनर्थमतः, कस्य उदकस्य ऋत मार्गमस्त्येति वा । "कर्त्तमन्वस्य वित्तमादाय घ्नन्ति"—इति निगमः ॥

(४) वव्रः । 'वृञ् सम्भक्तौ (स्वा० उ०)' । 'घञर्थे कविधानम् (३,३,५८ वा० २)'—इति कः । 'ऋजादीनां के द्वे भवतः (३, ३, ५८ वा० ३)' । सम्भज्यते जलार्थिभिः । "वव्रं चकृत्वा अनुसा पदोष्ट (ऋ० सं० ५, ७, ८, २)"—इति निगमः ॥

(५) काटः । 'कटे वर्षावरणयोः (भू० प०)' घञ् । आश्रियते जलार्थिभिः । यद्वा, 'चट पट गतौ (भू० प०)' घञ् । "काटे निबाळ्ह ऋषिरह्व ऊतये (ऋ० सं०, १, ७, २४, ६)"—इति निगमः ॥

(६) खातः । 'खनु अवदारणे (भू० उ०)' । निष्ठा । निगमोऽन्वेषणीयः ॥

(७) अवतः । अवपूर्वादततेः पचाद्यचि (३, १, १३४) शकन्ध्वादित्वात् पररूपम् (६, १, ९४ वा०) । अवातति

स्यन्यमानोऽधोमच्छति द्रोणाहावमवतमश्मचक्रम् (ऋ० सं० ८, ५, १८, १)"—"आहतासोऽवतासो न कर्तृभिः (ऋ० सं० १, ४, २०, ३)"—इति निगमौ ।

(८) क्रिविः । करोतेः कृणोतेर्वा 'कृविघृष्विछविस्थविकिकीदिवि (उ० ४, ५६)'—इतीन्प्रत्ययो रिदादेशश्च निपात्यते । कर्त्तर्यर्थः । "आपु इन्द्रं क्रिविं यथा (ऋ० सं० १, २, २८; १)"—इति निगमः ।

(९) सूदः । 'षूद क्षरणे हिंसायाञ्च (भू० आ०)' । क्षरणात् जलं, हिंसायां कर्त्तर्यर्थः । 'शोभनोदकः सुस्थिरोदको वा सूदः'—इति हरदत्तमिश्रः । 'उदकस्योदः सञ्ज्ञायाम् (६, ३, ५७)' । निगमोऽन्वेषणीयः ।

(१०) उत्सः । उत्पूर्वात् सर्त्तेः सदेः स्यन्देर्वा डप्रत्ययः । स्यन्देर्यलोपो बाहुलकात् । उन्देर्वा 'उन्देर्नलोपश्च'—इति सप्रत्ययः । उदगच्छत्यस्मात् जलम्, स्यन्दते, आर्द्रीक्रियते वा जलेन । "उत्सं न कश्चिज्जनुपानमक्षितम् (ऋ० सं० ७, ५, २२, ५)"—इति निगमः ।

(११) ऋश्यदात् । 'ऋषी गतौ (तु० प०)' । 'अघ्न्यादयश्च (उ० ४, १०८)'—इति यत्प्रत्ययो मूर्द्धन्यस्य शादेशो गुणाभावश्च निपात्यते । ऋश्या मृगाः । ऋश्यान् द्यति । 'आतोऽनुपसर्गे कः (३, २, ३)' । पञ्चम्येकवचनम् । कूपो हि दुर्ग्रहजलत्वात् ऋश्यान् खण्डयति, खण्डितत्वाच्च जलादानेच्छां न करोति । "युवं मन्दनमृश्यदादुदूपथुर्युवं (ऋ० सं० ७, ८, १६, ३)"—इति निगमः ।

(१२) कारोतरात् । करणं कारः । करोतेर्घञ् । कारेण खननक्रियया उत्तरः अधिकः प्रदेशान्तरादुत्कृष्टो वा । यद्वा, उत्खातमुदकं यस्य सः कारोत्तरः क्षतोदको वा पृषोद-

रादित्वात् कारोत्तरः। पञ्चम्येकवचनम्। निगमोऽन्वेष-णीय.।

(१३) कुशय। कौ शेते। 'अधिकरणे शेते. (३, २, १५)'—इत्यच्प्रत्यय.। निगमोऽन्वेषणीय.॥

(१४) केवटः। 'केवृ सेवने (भू० आ०)'। 'शकादिभ्यो-ऽटन् (उ० ४, ७८)'—इत्यट्प्रत्ययः। सेव्यते जलार्थिभि। "मा कौ च शारि केवटे (ऋ० स० ४, ८, २०, २)"—इति निगम.।

इति चतुर्दश कूपनामानि। २३।

तृपुः (१)। तक्वा (२)। रिभ्वा (३)। रिपुः (४)। रिक्वा (५)। रिहायाः (६)। तायुः (७)। तस्करः (८)। वनर्गुः (९)। हुरश्चित् (१०)। मुषीवान् (११)। मलिम्लुचः (१२)। अघशंसः (१३)। वृकः (१४)। इति चतुर्दशैव स्तेननामानि ॥ २४ ॥

(१) तृपुः। 'तृप प्रीणने (दि० प०)'। 'दृषे किच्च (उ० १, २३)'—इति बाहुलकादुप्रत्ययः किच्च। परद्रव्यापहारात् तृप्यति। निगमोऽन्वेषणीय॥

(२) तक्वा। तकतिर्गतिकर्मा, 'तक हसने (भू० प०)'। 'अन्येभ्योऽपि दृश्यन्ते (३, २, ७५)'—इति वनिप्। गच्छति मोषणार्थम्, मोषणेन वा हसते अभिभवति। "तक्वा न भूर्णिर्वना सिषक्ति (ऋ० सं १, ५, १०, १)"—इति निगम॥

(३) रिभ्वा.। 'रभ राभस्ये (भू०आ०)'। पूर्ववद्वनिप्।

पृषोदरादित्वात् इकारो गुणाभावश्च। रमते भोगवस्तुषु वेगेन करोति। निगमोऽन्वेषणीय.॥

(४) रिपु.। 'रिफ कत्थनयुद्धनिन्दाहिंसादानेषु (तु० प०)' 'ईपेः किच्च (उ० १, १३)'—इति बाहुलकादुप्रत्ययः। "रिपति" केचित् पठन्ति। तत्र बाहुलकादेव फकारस्य पकारः। रिफति, मोक्षणार्थं युद्धते हिनस्ति वा निन्द्यते च सत्पुरुषैः। "मा नु स रिपुरीशत (ऋ० सं० १, ३, ११, १)"—इति निगमः।

(५) रिक्था। 'रिचिर् वियोजने (रु० उ०)'। 'अन्येभ्योऽपि दृश्यन्ते (३, २, ७५)'—इति क्वनिप्। चकारस्य ककारो व्यत्ययेन। वियोजयत्यर्थंरर्थान्, वियुज्यते वा प्राणैः। निगमोऽन्वेषणीय॥

(६) रिहायाः। 'रिह कत्थनादौ'—इति चीरस्वामी। 'परस्मैकृत्सुधाविहायस्'—इत्यादिनासुनि आयुडागमो गुणाभावश्च निपात्यते। रिपुवदर्थः। निगमोऽन्वेषणीयः।

(७) तायुः। 'ताय सन्तानपालनयोः (भ्वा० आ०)'। 'छन्दसीणः (उ० १, २)'—इति बाहुलकाद् उण्। तायते यस्मात् सर्वम्। यद्वा, तसेरुपक्षयार्थात् पूर्ववदुणि बाहुलकात् सकारस्य यकारः। 'उपक्षीणोऽसाविह लोके आयुषा, यदा तदा राज्ञामारिप्यमाणत्वात्, परलोकेऽपि अन्यधर्मकत्वात्'—इति स्कन्दस्वामी। "अपत्ये तायवो यथा (ऋ० स० १, ४, ७, २)"—उत स्मैनं वस्त्रमथिं न तायुम् (ऋ० स० ३, ७, ११, ५)"—इति निगमौ॥

(८) तस्करः। तत्करोतीति विगृह्य 'दिवाविभानिशाप्रभा (३, २, २१)'—इत्यादिना टप्रत्ययः। 'करोति यत् पापकम्—इति नैरुक्ताः। तच्छब्देन प्रकारवसामान्यादर्थप्राधा-

न्याच पापकर्मनिर्देशमभिप्रेतमित्याह—'यत् पापकमिति नैरुक्ताः'—इति। वैयाकरणास्तु शब्दपरत्वात् सामान्येऽप्याहुः 'तद्बृहतोः करपत्योश्चौरदेवतयोः सुट् तलोपश्च (६, १, १५७ ग० सू०)'—इति। तनोतेर्वा स्यात् सन्तानकर्मेति सम्मतम्। तच्च सन्ततकर्मत्वं दर्शयति—'दिवा पथि मोषणेन, रात्रौ सन्धिच्छेदनेन'—इति स्कन्दस्वामी। तनोतेः क्विपि नलोपे तुकि चत्वम्। यद्वा, 'त्यजियजितनिभ्यो डित् (उ० १, १३१)'—इति अदिप्रत्यये तत्। कर्मशब्दस्य मकारलोपः। पृषोदरादित्वात् रूपम्। "तनूत्यजेव तस्करा वनर्गू (ऋ० सं० ७, ५, १२, ६)"—"तस्कराणां पतये नमः (य० वा० स० १६, २१)"—इति निगमौ॥

(९) वनर्गुः। वनशब्दोपपदात् गमेः 'खगुग्वादयश्च (उ० १, ३६)'—इति डुप्रत्ययो रुडागमश्च निपात्यते। तस्करो हि मोषणार्थं सदा वनं गच्छति। निगमोऽन्वेषणीयः॥

(१०) ह्वरश्चित्। 'ह्वृ कौटिल्ये (भू० प०)'। क्विप्। 'राल्लोपः (६, ४, २१)'—इति वकारलोपः। 'चिती सञ्ज्ञाने (भू० प०)'। क्विप्। ह्वरः कौटिल्यानि चेतयते। यद्वा, ह्वरतेः 'अन्येभ्योऽपि दृश्यन्ते (३, २, ७५)'—इति विचि गुण, पृषोदरादित्वात् अकारस्योकारः। ह्वुरः अर्थानामाहर्तॄन्, चेतयतेः चिनोतेर्वा क्विप्। ह्वरः ह्वतानर्थान् सञ्चिनोति। अपिशब्दात् अत्र कर्मणि विच्। 'तत्पुरुषे कृति बहुलम् (६, ३, १४)'—इत्यलुक्। "अप्रप्रोथन्तः सनुतर्ह्वुरश्चितः (ऋ० सं० ७, ४, २४, ५)"—इति निगमः॥

(११) मुषीवान्। 'मुष स्तेये (क्र्या० प०)'। अच्। 'कृदिकारादक्तिनः (४, १, ४५ वा०)'—इति ङीप्। मुषी मोषणमस्यास्ति। 'छन्दसीवनिपौ (५, २, १२२ वा० २)'—इति

वनिप्। "सुग्रीवाणं हुरयितम् (ऋ० सं० १, २, २४, २)" —इति निगमः। अत्र 'परोक्षहर्ता चौरो सुग्रीवान्, प्रत्यक्षहर्ता हुरयित्'—इति माधवः॥

(१२) मलिम्लुचः। मलमस्यास्ति। 'ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः (५, २, ११४)' —इति मलिनो निपात्यते। म्लुच स्तेयकरणे (भ्वा० प०)। 'इगुपधज्ञाप्रीकिरः कः (३, १, १३५)'। मलिनयामी म्लुचश्च मलिम्लुच.। पृषोदरादित्वेन नलोपः। निगमोऽन्वेषणीयः।

(१३) अघशंसः। आङ्पूर्वात् हन्तेः 'अन्येष्वपि दृश्यते (३, २, १०१)'—इति डः। पृषोदरादित्वात् आङो ह्रस्वत्वं हकारस्य घत्वञ्च। शंसे. यथायथ्। आहन्ता, वधस्तभावः, आघशंसनाय। "अघशं सस्य कस्यचित् (ऋ० सं० १, २, २४, ४)"—इति निगमः॥

(१४) वृकः। व्याख्यातमलिस्नामसु (२८७पृ०)। वारको मार्गस्य। "यो नः पूषन्नघो वृकः (ऋ० सं० १, ३, २४, २)" —इति निगमः॥

इति चतुर्दश स्तेननामानि॥ २४॥

निण्यम् (१)। सस्वः (२)। सनुतः (३)। हिरुक् (४)। प्रतीच्यम् (५)। अपीच्यम् (६)। इति षट्निर्णीतान्तर्हितनामधेयानि॥ २५॥

(१) निण्यम्। निर्शब्दपूर्वात् नयतेः 'अघ्न्यादयश्च (उ० ४, १०८)'—इति यत्प्रत्ययष्टिलोपो रेफलोपश्च निपात्यते। निर्णीत बहिर्नीतम्, निर्गतमन्तर्हितं वा। "हृदयस्य निण्यं. चेरुत्वार्थः (ऋ० सं० १, २, २७, ५)"—"निण्यः सन्नो मनसा चरामि (ऋ० सं० २, ३, २१, २)"—इति निगमौ।

(२) सस्तः। सम्पूर्वात् स्वरतेर्गतिकर्मणो विचि रपरगुणः। मस्तोऽन्त्यलोपः। सम्यगन्तर्गतं विनिर्गतं वा। "सुखद् यन्म-रुतो गोतमो वः (ऋ० सं० १, ६, १४, ४)"—"यत् सुसत्तो जिह्वीब्विरे यदाविः (ऋ० सं० ५, ४, २८, ५)"—इति निगमौ।

(३) सनुतः। (४) हिरुक्। स्वरादिः।. "स नुतर्हिरु तं ततं (ऋ० सं० ६, ६, २६, २)"—"य ईं चकार न सो अस्य वेद य ईं ददर्श हिरुगिन्नु तस्मात् (ऋ० सं० २, ३, २०, २)"—इति निगमौ॥

(५) प्रतीच्यम्। (६) अपीच्यम्। अपीच्यमपगतमप-चितम् (निरु० ४, २५)'—इत्यादिभाष्ये 'प्रत्यपचित स्थितम्' इति स्कन्दस्वामी। प्रतिपूर्वात् अपमातपूर्वाच्च चिनोतेः न्यग्रादित्वात् यप्रत्ययटिलोपादि च निपात्यते। प्रतीच्यस्य निगमोऽन्वेषणीयः॥ "नाम त्वष्टुरपीच्यम् (ऋ० सं० १, ६, ७, ५)"—"य उस्राणामपीच्या' (ऋ० सं० ६, २, २६, ५)"—इति निगमौ॥ 'य उस्राणामपीच्या'—इत्यत्र 'अपिपूर्वाद-ञ्चतेः 'ऋत्विगित्यादिना (३, २, ५९) क्विन्प्रत्ययः, ततो 'भवे छन्दसि च (४, ४, ११०)'—इति यत्, 'अचः (६, ४, १३८)'—इत्यकारलोपः, 'चौ (६, ३, १३८)'—इति पूर्वपदस्य दीर्घः। 'अपीच्योऽप्रकाशः'—इति भट्टभास्करमिश्रः॥

इति षट् निर्णीतान्तर्हितनामानि॥ २५॥

## आके (१)। पराके (२)। पराचैः (३)। आरे (४)। परावतः (५)। इति पञ्च दूरना-मानि॥ २६॥

(१) आके। (२) पराके। आङ्पूर्वात् परापूर्वाच्च एते 'पिनाकादयश्च (उ० ४, १५)'—इति आकप्रत्ययो धातुलो-

च निपात्यते। यद्वा, आङ्पूर्वात् परापूर्वाच्च किरतेः 'अन्येष्वपि (३, २, १०१)'—इति डः। आकीर्णं पराकीर्णं च तद् विक्षिप्तमिव भवति आके निगमोऽन्वेषणीयः॥ "पर्यन्तमस्य रजसः पराके (ऋ० सं० ५, ६, २५, ५)"—इति निगमः॥

(३) पराचैः। 'नीचैरिति यदस्य पराचैः'—इति भट्टभास्करमिश्रः। निगमोऽन्वेषणीयः॥

(४) आरे। अव्ययम्। "नु हि त्वदारे निमिषश्चनेशे (ऋ० सं० २, ७, १०, १)"—इति निगमः॥

(५) परावतः। ईरयतेर्वहतेर्गतिकर्मणो वा संबाधनेऽर्थे वर्तमानात् प्रोपसर्गात् परोपसर्गाद्वा 'उपसर्गाच्छन्दसि धात्वर्थे (५, १, ११८)'—इति वतिः। पृषोदरादित्वात् प्रथमस्य पराभावः। प्रकर्षेण ईरति विक्षिप्तं परागतमिव वा तद् भवति। "परावतं परमा गन्तवा उ (ऋ० सं० ८, ५, ३, ४)"—"प्रसार्य्यसीं परावतः (ऋ० सं० ६, ५, २१, १)"—इति निगमौ॥

इति पञ्च दूरनामानि॥ २६॥

प्रत्नम् (१)। प्रदिवः (२)। प्रवयाः (३)। सनेमि (४)। पूर्व्यम् (५)। अह्नाय (६)। इति षट् पुराणनामानि॥ २७॥

(१) प्रत्नम्। 'नश्च पुराणे प्रात् (४, ३, २३ वा० २)'—इति त्नप्प्रत्ययः। "तम् प्रत्नथा पूर्वथा विश्वथेमथा (ऋ० सं० ४, २, २३, १)"—इति निगमः॥

(२) प्रदिवः। "यदीमनु प्रदिवः (ऋ० सं० २, १, ८, १)"—इत्यत्र पुंलिङ्गद्विवचनान्तेन, "यत्र रोचना प्रदिवः (ऋ० सं० ३, २, २६, १)"—इत्यत्र, बहुवचनान्ते

॥395

"इन्द्रा॑य॒ सोमा॑: प्र॒दिव॑: (ऋ० सं० ३, २, १८, २)"—इत्यत्र प्रथमाबहुवचनान्तेन च प्रदिव इत्येव सामानाधिकरण्यदर्शनात् सकारान्तमेतदव्ययमित्याहुः। इन्द्रार्थत्वेनानादिकालप्रवृत्ता इत्यभाषयत्। तेन प्रगतानि दिनान्यस्य पृषोदरादित्वान्नकारस्य वकारः इत्यादि व्युत्पत्तिः। निगमेषु वचनव्यत्ययश्चान्वेषणीय एव ॥

(३) प्रवयाः। प्रगतं वयो यस्य। वयः कालमात्रमत्र। निगमोऽन्वेषणीयः ॥

(४) सनेमि। अव्ययम्। "सने॑म्यु॒स्मद्यु॑यु॒तम॒मी॑वा: (ऋ० सं० ५, ४, ५, ७)"—"सने॑मि स॒ख्य॑ स्व॑प॒स्यमा॑नः (ऋ० सं० १, ५, २, ४)"—"स॒ने॒म्य॑स्म॒ मरु॑तो॒ जुनन्ति (ऋ० सं० २, ४, ८, १)"—इति निगमाः ॥

(५) पूर्व्यम्। 'पूरी पूरणे (भू० प०)'। पचाद्यच् (३, १, १३४)। वयःप्रवृत्ति पूरयतीति, पूर्वस्मिन् काले भवं पूर्व्यम् 'भवे छन्दसि (४, ४, ११०)'—इति यत्। यद्वा, 'पूर्वैः कृतमिनयौ च (४, ४, १३३)'—इति यः। "पू॒र्व्यं होतरस्य नः (ऋ० सं० १, २, २०, ५)"—"यः स्तोमे॑भिर्वावृ॒धे पू॒र्व्ये॑भिः (ऋ० सं० २, २, ११, २)"—इति निगमौ ॥

(६) अह्नाय। अव्ययम्। निगमोऽन्वेषणीयः ॥

इति षट् पुराणनामानि ॥ २७ ॥

नवम् (१)। नूत॑म् (२)। नूतनम् (३)। नव्यम्(४)। इदा(५)। इदानीम्(६)। इति षडेव नवनामानि ॥ २८ ॥

(१) नवम्। यद्वा, 'णु स्तुतौ (अदा० प०)'। 'ऋदोरप्



॥394

(३, ३, ५०)'। नूयते स्तूयते, अचिरकृतत्वेन रमणीयत्वात् इति। "नवेन पूर्वं दयमानास्स्याम"—इति निगमः।

(२) नूत्नम्। नौतेरेव। 'रास्नासास्ना (उ० ३, १३)'—इत्यादिना नप्रत्ययो दीर्घश्च निपात्यते। "नूयते नूत्ना इदिन्द्र ते वृषमूतो (ऋ० स० ६, २, २, २)"—इति निगमः।

(३) नूतनम्। नवस्य नू—आदेशः 'त्नप्तनप्खाश्च प्रत्यया वक्तव्याः (५, ४, २५ वा० १)'—इति तनप्प्रत्ययः। "ईड्यो नूतनैरुत (ऋ० स० १, १, १, २)"—इति निगमः।

(४) नव्यम्। नवमेव नव्यम्। 'शाखादिभ्यो यत् (५, ३, १०३)'—इति स्वार्थे यत्। यद्वा, नौतेः 'अचो यत् (३, १, ९७)'—'वान्तो यि प्रत्यये (६, १, ७९)'। "इन्द्राग्नी स्तोमं जनयामि नव्यम् (ऋ० स० १, ७, २८, २)"—इति निगमः।

(५) इदा। 'तयोर्दार्हिलौ च छन्दसि (५, ३, २०)'—इति इदंशब्दात् सप्तम्यन्तात् दाप्रत्ययः। "इदा हि व उपस्तुतिम् (ऋ० स० ६, २, ३३, १)"—इति निगमः।

(६) इदानीम्। 'दानीं च (५, ३, १८)'—इति तस्मादेव दानीम्प्रत्ययः। "इदानीमह्न उपवाच्यो नृभिः (ऋ० स० ३, ८, ५, १)"—इति निगमः।

इति षडेव नवनामानि॥ २८॥

प्रपित्वे (१)। अभीके (२)। दभ्रम् (३)। अर्भकम् (४)। तिरः (५)। सतः (६)। त्वः (७)। नेमः (८)। ऋक्षाः (९)। स्तृभिः (१०)। वम्रीभिः (११)। उपजिह्विका (१२)। ऊर्दरम् (१३)। कृदरम् (१४)। रम्भः (१५)। पिनाकम् (१६)।

मेना(१७)। ग्नाः(१८)। शेपः (१९)। वैतसः (२०)। अया(२१)। एना(२२)। सिषक्तु(२३)। सचते(२४)। भ्यसते (२५)। रेजते(२६)। इति षड्विंशतिर्द्विश उत्तराणि नामानि ॥२९॥

प्रपित्वे इत्यादीनि भाष्यकारेणैव निरुक्तानि (निरु० ३, २०, २१) ॥ २९ ॥

स्रुधे (१)। पुरंधी (२)। धिषणे (३)। रोदसी(४)। क्षोणी(५)। अम्भसी(६)। नभसी (७)। रजसी(८)। सदसी(९)। सद्मनी(१०)। घृतवती (११)। बहुले (१२)। गभीरे (१३)। गम्भीरे (१४)। ओण्यौ (१५)। चम्वौ (१६)। पार्थ्वी(१७)। मही (१८)। उर्वी (१९)। पृथ्वी (२०)। अदिती (२१)। अह्नी (२२)। दूरेअन्ते (२३)। अपारे (२४)। अपारे इति चतुर्विंशतिर्द्यावापृथिवीनामधेयानि नामधेयानि ॥ ३० ॥

उर्व्यं हन्मङ्गयद्भ्र ज्यतिश्विम्बातानिर्णि-
गर्ह्ये माकेतुर्वट्‌चिकयद्विकामिदमिवार्चतिविप्रो रे-
भोयन्नोभरतार्द्रमद्वेदातिपरिष्वक्षपितिक्रूपस्तृ-
पुर्निरृयमाकेमलन्त्वकम्रपित्वे सचे विंशत् ॥

इति निघण्टौ तृतीयाध्यायः समाप्तः ॥ ३ ॥

(१) स्वधे। व्याख्यातमन्ननामसु (१०७ पृ० । १७५ पृ०)। स्वेनात्मना भूतग्रामं धारयतः, स्वं धनं धीयते अनयोरिति वा। द्यावापृथिवीनामसु सर्वत्र द्विवचनान्तत्वम्। तथा च "धातुं भुवाते मिथुनानि नाम (ऋ० सं० ३, ३, २४, २)"—इत्यत्र, स्कन्दस्वामी—'मिथुनानि द्विवचनसंयुक्तानि नामानि 'स्वधे पुरन्धी'—इत्यादीनि स्तोतव्यः'—इति।

(२) पुरन्धी। पुराणि धीयन्तेऽनयोः। 'कर्मण्यधिकरणे च (३, ४, ९३)'—इति किप्रत्ययः। पृषोदरादित्वात् अकार उपजनः। निगमोऽन्वेषणीयः॥

(३) धिषणे। व्याख्यातं वाङ्नामसु (७५ पृ०)। स्व रक्षितुं प्रगल्भे समर्थे, धारयित्र्यौ वा देवमनुष्यादीन्, धष्यते स्तूयते वा। निगमोऽन्वेषणीयः॥

(४) रोदसी। 'इमौ इदमपि स्त्रीलिङ्गद्विवचनान्तम्, द्यावापृथिव्योर्वर्त्तमानं चापि नपुंसकद्विवचनान्तम्, अपि चाव्ययम्। तत्र निगमानां साधारण्यात् तेषां त्रयाणामपि साधारणोऽयं पाठः'—इत्याह। 'प्रस्तरस्यापि विभुत्वात् "रोदसी रोदसी च ते"—इत्यत्र आद्य ईयसो दिवि भुवि च वर्त्तते, अन्य. आन्तः'—इति क्षीरस्वामी। तत्र रुधेरसुन्, पृषोदरादित्वात् धकारस्य दकारः, स्त्रीलिङ्गे तु 'उगितश्च (४, १, ६)'—इति ङीप्, 'वा छन्दसि (६, १, १०६)'—इति पूर्वसवर्णः। आभ्यां हि विविधं रुधानि सर्वभूतानि। "नमो दिवे बृहते रोदसीभ्याम् (ऋ० सं० २, १, २६, ६)"—"होतारं सत्ययजं रोदस्योः (ऋ० सं० ३, ४, २०, १)"—"इमे [illegible] रोदसी अपारे (ऋ० सं० ३, २, १, ५)"—इति निगमाः। "शिपिविष्टा रोदसी नृम्णाः (ऋ० सं० २,४,४,५)" अन्तोदात्तो रोदसीशब्दो रुद्रपत्नीवचनः'—इति माधवः।

(५) धोषी । व्याख्यातं पृथिवीनामसु (७ पृ०)। "अयः धोषी संचते माहिना वाम् (ऋ० सं० २, ४, २३, ५)"—इति निगमः ।

(६) अम्मसी । व्याख्यातमुदकनामसु (८२ पृ०)। बाहुलकादत्रापि तुम् । यद्वा, अम्भ उदकमनयोरस्ति, मत्वर्थीयस्य लुक् । एकस्यावशिष्टमपरस्यावशिष्यमाणमादित्यमण्डलम् । निगमोऽन्वेषणीयः ॥

(७) नभसी । 'णह बन्धने (दि० उ०)' । 'नहेर्दिवि भश्च (उ० ४, २०५)'—इति असुन् । ताद्धर्थ्यात् उभे अपि नभःशब्देनोच्यते । सम्बध्यते पुण्यवद्भिः । निगमोऽन्वेषणीयः ॥

(८) रजसी । 'रञ्ज रागे (भू० उ०)' । 'भूरञ्जिभ्यां कित् (उ० ४, २११)'—इत्यसुन् । 'रजकरजनरजःसूपसंख्यानम्' इति वा नलोपः, रजके स्वगुणे भूतानां 'रजोरजतेर्गतिकर्मणः'—इति माधवः । गम्यते पुण्यवद्भिः । निगमोऽन्वेषणीयः ॥

(९) सदसी । सदेरसुन् । सीदन्त्यनयोर्देवमनुष्यादयः । निगमोऽन्वेषणीयः ॥

(१०) सद्मनी । सदेरेव मनिन् । "पुराणोः सद्मनोः केतुरन्तः (ऋ० सं ३, ३, २८, २)"—इति निगमः । भाष्य द्रष्टव्यम् ।

(११) घृतवती । उदकवत्यौ । निगमोऽन्वेषणीयः ॥

(१२) बहुले । 'बर्हिष'—इति महन्नामसु व्याख्यातम् (२५१ पृ०) बहुभिः पदार्थैस्तद्वत्यौ । "उर्वी पृथ्वी बहुले दूरेअन्ते (ऋ० सं० २, ५, ३, २)'—इति निगमः ॥

(१३) गभीरे । (१४) गम्भीरे । व्याख्याते वाङ्नामसु (६१ पृ०)। गम्यते सत्पुरुषैः, प्रतितिष्ठन्त्यनयोर्देवमनुष्यादयः । निगमावन्वेषणीयौ ॥

(१५) क्षोणी। 'क्षोणृ अपनयने (भ्वा० प०)'। "इन् सर्वधातुभ्यः (उ० ४, ११८)'। 'कृदिकारादक्तिनः' (४, १, ४५ वा०)'—इति ङीष्। अपनयतः स्वाश्रितानां क्षोभान्। यद्वा, क्षयतेर्लुटि, छान्दसत्वात् सम्प्रसारणे गुणश्च, टित्त्वात् ङीप्। "अभि त्वा देव सवितारमोण्योः (य० वा० सं० ४, २५)"—इति निगमः।

(१६) चम्वौ। 'चमु अदने (भ्वा० प०)'। 'कषिचमितनिधनिसर्जिखर्जिभ्य ऊः (उ० १, ८२)'—इति ऊप्रत्ययः। चमन्त्यनयोः। "ऋतावानो चम्वोर्योर्निवृत्तः (ऋ० सं० २, ३, २०, ३)"—इति निगमः।

(१७) पार्थ्यौ। 'स्पृश संस्पर्शने (तु० प०)'। 'स्पृशेः श्वण्शुनौ पृ च (उ० ५, २७)'—इति श्वण्प्रत्यये धातोः पृभावश्च। णित्त्वाद् वृद्धिः। व्यत्ययेन पुलिङ्गता। "पार्श्वे"—इति पाठान्तरम्। संस्पृशतो व्याप्नुतः सर्वान् पदार्थान्। निगमोऽन्वेषणीयः।

(१८) मही। एतदादीनि चत्वारि पृथिवीनामसु व्याख्यातानि (८ पृ०)। महत्यौ पूजनीये वा। "ते हि मिथुसा मही (ऋ० सं० १, ५, ३१, १)"—इति निगमः।

(१९) उर्वी। विस्तीर्णे, चाच्छादयित्र्यौ वा सर्वाभःस्थितलोकस्य। निगमोऽन्वेषणीयः।

(२०) पृथ्वी। प्रथिता विस्तारिता प्रजापतिना सृष्टिकाले। निगमोऽन्वेषणीयः।

(२१) अदिती। देवमनुष्यादिसकलपदार्थधारणेऽप्यदीने इत्यर्थः। निगमोऽन्वेषणीयः।

(२२) अह्नी। गोनामसु व्याख्यातम् (१८२ पृ०)। अहन्तव्ये मनुष्यैः। निगमोऽन्वेषणीयः।

(२३) दूरेअन्ते । दुःशब्दोपपदात् एते ‘दुरीणो लोपश्च (उ० २, १८)’—इति रक्प्रत्ययो धातोर्लोपश्च । ‘रोरि (८, ३, १४)’—इति रेफलोप, लोपे पूर्वस्य दीर्घ (६; ३, १११)। ‘अन्तो अततेः (निरु० ४, २५)’—इति भाष्यम् । तत्र बाहुलकात्तन् मकारस्यान्तादेश । ‘दुःखेन गम्यते दूरमतोऽह्यादिमध्याद्य सततगतो भवति, न कदाचिदादौ मध्ये वास्ति’—इति स्कन्दस्वामी । दूरं अन्तमवसानगतिर्ययो । ‘तत्पुरुषे कृति बहुलम् (६, ३, १४)’—इत्यलुक्। “सुमाञ्च विद्युते दूरेअन्ते (ऋ० स० ३, ३, २५, २)”—इति निगम ।

(२४) अपारे । ‘पार तीर कर्मसमाप्तौ’ चुरौत्यादिरदन्तः । अच् । समाप्तिरिति वा समाप्यतेऽनेनेति वा पार । ‘अपारे दूरपारे (निरु० ६, १)’—इति भाष्ये । ‘अविद्यमान पारमन्त ययो तं अपारे । दूरत्वेन पराभव दर्शयति पुरा एतद्या वा लोकयव्यन्तताम्’—इति स्कन्दस्वामी । निगमोऽन्वेषणीयः ॥

अध्यायपरिसमाप्तिसूचकद्विर्वचनमिति सिद्धम् ॥

इति देवराजयज्वविरचिते नैघण्टुककाण्डनिर्वचने तृतीयाध्याय ॥ ३ ॥

इति नैघण्टुकं नामाद्यं काण्डं समाप्तम् ॥

———

# (नैघण्टुक-टीका-परिशिष्टम्)

स्वरादीनीति पूर्वसूक्तस्य प्रकरणद्वयस्य (२५७पृ०, २७०पृ०, ३०२ पृ०), निगमदेवताकाण्डयोश्च निर्वचनं भाष्यस्कन्दस्वामिभ्यां प्रदर्शितं तदत्र क्रमेण लिख्यते। तत्र, निगमव्याख्यानादि यदत्रानुक्तमिति, तत् तत्रैव द्रष्टव्यम्।

(१) स्वः। सुपूर्वादर्त्तेरीरयतेर्वा 'अन्येभ्योऽपि दृश्यन्ते (३, २, ७५)'—इति विचि हविषयहणस्य प्रयोगानुसरणार्थत्वादकर्त्तर्य्यपि भवति। ईरयतेरिकारस्याकारो व्यत्ययेन, गुणः। 'स्वरादिनिपातमव्ययम् (१, १, ३०)' सुपो लुक् (२, ४, ७१), रेफस्य विसर्जनीयः (८, ३, १५)। शोभनमरणं गमनं सुखाय हिताय वा यस्य, शोभन वा प्रेरणं तमसा यस्य, सुष्टु वा ऋतो रश्मिभिः रसानादातुम्, भासं वा ज्योतिषां नक्षत्रादीनां, भासा सुष्टु ऋतः प्राप्त इति वा, स आदित्यः द्यौश्च। सु सुष्टु शोभनमरणमस्यामरूपैर्वा पुण्यवद्भिरर्य्यते, सुष्टु वा पुण्यकृत ईरयति ऋतो रवेः ऋतो भाभिर्ज्योतिषा, स्वयमेव वा दीप्तम्। "भूर्भुवः स्वः (य० वा० सं० ३, ३७)—इति दिव उदाहरणम्। "पृ भिर्नो युक्तैर्भवानो मुयाङ् स्व ' यं ज्योतिः (ऋ० सं० ३, ५, १०, ३)'—इत्यादित्यस्य॥

(२) पृश्निः। प्रपूर्वादश्नोतेः स्पृशतेर्वा 'घृणिपृश्निपार्ष्णिचूर्णिभूर्णि (उ० ४, ५२)'—इति निप्रत्ययः, प्राशेः स्पृशेश्च पृशभावो निपात्यते। प्राश्नु त एनं शुक्लो वर्णः संसृष्टा रसान्। कृतव्याख्यानमन्यत् पूर्वेण। सम्पृष्टा भासं ज्योतिषामश्नुते, भातीति वा पृश्निरादित्यः। द्यौस्तु संसृष्टा ज्योतिर्भिः पुण्यकृद्भिश्च 'शुक्रतां वा एतानि ज्योतींषि यन्नक्षत्राणि (का० सं०

१, ४, ७, २, मा० भा०)'—इति श्रुतेः। "पृश्नेः पुत्रा उपमासो रभिष्ठाः (ऋ० सं० ४, ३, २३, ५)"—इति निगमो दिवः। "अयं वेनश्चोदयत्पृश्निगर्भाः (ऋ० सं० ८, ७, ७, १)"—इत्यादिरस्य॥

(३) नाकः। नयतेः 'पिनाकादयश्च (उ० ४, १५)'—इत्याकप्रत्ययष्टिलोपश्च निपात्यते। नेता रसानाम्, नेता भासामात्मीयानाम्, ज्योतिषां प्रणायकश्चादित्यः। द्यौस्तु, कमिति सुखनाम, न कम् अकम् असुखम्, न अकं यत्र स नाकः। 'नभ्राण्नपान्नवेदा (६, ३, ७५)'—इत्यादिना नञः प्रकृतिभावः। "न वा अमुं लोकं जग्मुषे किञ्च नाकम् (निरु० २, १४)"—इति ब्राह्मणम्। अत्यन्तसुखमित्यर्थः। "नाकस्य पृष्ठे अधितिष्ठति श्रितः (ऋ० सं० २, १, १०, ५)"—इति दिवः। तत्रे अधि नाके अस्मिन् (ऋ० सं० ८, ७, १८, २))"—इति निगम आदित्यस्य॥

(४) गौः। व्याख्यातं पृथिवीनामसु (४ पृ०)। गमिरत्रान्तर्णीतण्यर्थः। गमयति रसान् मण्डलं प्रति रश्मिभिः, गच्छति वान्तरिक्षे इति गौरादित्यः। यत् पृथिव्या उपरि दूरं गता, यद्वास्यां ज्योतींऽपि गच्छन्तीति गौः द्यौः। "गवामसि गोपतिरेक इन्द्र (ऋ० सं० ५, ६, २३, ६)"—इति दिवः। "उतादः परुषे गवि (ऋ० सं० ४, ८, २२, ३)"—इत्यादिरस्य॥

(५) विष्टप्। 'टाबि आविष्ये (अदा० औ० प०)'। विधूर्वात् क्विपि भकारस्य पकारो व्यत्ययेन। विटश्चिराविशतेऽर्थे वर्त्तते। यद्वा, विशेरेव बाहुलकाद्रूपसिद्धिः। पृथिवीतो रसानादातुमाविष्टोऽभिनिविष्ट इत्यर्थः। एवमेव भासं ज्योतिषां भासा वाविष्टो व्याप्तः आदित्यः। द्यौराविष्टा ज्योतिर्भिः पुण्य-

छदिष। "उपदद्रप्सस्य त्रिष्टुभम् (ऋ० सं० ६, ५, ६, १)"—इत्याद्युदाहरणम्।

(६) नभः। णयतेरसुनि गुणे 'नय.' इति स्थिते बाहुलकात् यकारस्य भकारः। नाकशब्देन समानोऽर्थः। अथवा भासनशब्दस्य ह्रस्वत्वं, सकारलोपः, नकारभकारयोश्च स्थानविपर्ययः, सान्तत्वञ्च। सर्वत्र सूत्रस्यानुक्तौ पृषोदरादित्वात् द्रष्टव्यम्। यद्वा, न भाति 'नभः'। असुनि भातेष्टिलोपश्च। एतेन द्योर्व्याख्याता। "ज्योतिष्मति प्रतिमुञ्चते नभः"—"स्वर्ण- घ्राणोनभसा (ऋ० सं० ७, २, १४, ५)"—इत्युदाहरणम्।

इति षट् साधारणानि दिवसादित्ययोः ॥ १, ४ ॥

---

इदमाद्युपमानामानि। भाष्यकारेण स्कन्दस्वामिना च विस्तरेण व्याख्यातानि (निरु० ३, १३—१८)। निपातप्रायत्वात् शब्दनिर्वचनस्यावक्तव्यत्वात् उदाहरणमात्रमत्र प्रदर्श्यते।—

(१) इदमिव। (२) इदं यथा। अत्र इदंशब्द उपमानशब्दसन्निधानाय प्रयुक्तः। इवादयश्च निपाताः, परान्वयस्योपमानत्वस्य धर्मस्य प्रतिपादनार्थाः। "इन्द्रं वहेह भुवत्सिंहाः (ऋ० सं० ८, ८, २१, २)"—"यथा वातो यथा वनम् (ऋ० सं० ४, ४, २०, ४)"॥

(३) अग्निर्न ये। अत्र नशब्द उपमानार्थः। "अग्निर्न ये भ्राजसा रुक्मवक्षसः (ऋ० सं० ८, ३, १२, २)"॥

(४) "चतुरश्चिद्ददमानात्" (ऋ० सं० १, ३, २३, ४)। अत्र चिच्छब्दः॥

(५) "ब्राह्मणा व्रतचारिणः (ऋ० सं० ५, ७, ३, १)"। उपमाप्रतिपादनेनादिलोपाल्लुप्तोपमः॥

(६) "वृषण्यु नु ते पुरुहूत वृषाः (ऋ० सं० ४, ६, १७, ३)"। अत्र नूशब्दः॥

(७) जार आ भगम्। "उदीरय पितरा जार आ भगम् (ऋ० सं० ७, ६, १०, १)"। अत्र आकारः॥

(८) "मेषो भूतो ३ भि यन्नयः (ऋ० सं० ५,७,२४, ५)"। अत्र भूतशब्देनोपमोच्यते।

(९) तद्रूप.। (१०) तद्वर्णः। रूपशब्देन वर्णशब्देन चोत्तरपदेन समासादुपमा प्रतीयते।.

(११) तद्वत्। पूर्ववत्तच्छब्दस्यार्थः। "प्रियमेधवदत्रिवत् (ऋ० सं० १, २, ३१, ३)"। 'तेन तुल्यं क्रिया चेद्वतिः (५, १, ११५)"॥

(१२) तथा। "तमृत्नथा पूर्वथा विश्वथेमथा (ऋ० सं०.४, २, २२, १)"। 'प्रत्नपूर्वविश्वेमात् थाल् छन्दसि (५, ३, १११)'—इति इवार्थेऽयं थाल् विहितः॥

इति द्वादशोपमानामानि। ३, १३।

"तथा"—इत्यस्यानन्तरं "सिंहः"—इति केषुचित् कोशेषु दृश्यते, तन्न पठनीयम्, अथ लुप्तोपमानि (निरु० ३, १८)'—इत्यादिभाष्यस्य तु "ब्राह्मणा व्रतचारिणः (५)"—इति पूर्वसूत्रस्य लुप्तोपमस्य प्रपञ्चत्वात्।

(१) प्रपित्वे। (२) अभीके। इत्यासन्नस्य। प्रपूर्वादाप्नोतेर्निष्ठायां प्राप्तशब्दस्य प्रपित्वभावः। यद्वा, 'इत्वनादयोऽन्येभ्योऽपि दृश्यन्ते'—इतीत्वन्प्रत्यये बाहुलकादाप्नोतेराकारलोपः। पित्वशब्द आसन्नार्थः। प्रकृष्टदेशकालयोः प्राप्तिः प्रपित्वं इति॥ अभिपूर्वादञ्चतेः 'अलीकादयश्च (उ० ४, २५)--इतीकन्प्रत्ययो धातुलोपश्च निपात्यते। अभ्यक्तं आसन्न इत्यर्थ.। सोपसर्गौ सप्तम्यन्तौ यथादृष्टाविति पठितौ॥

"आपित्वे नः प्रपित्वे तूय मागहि (ऋ० सं० ५,७, १०, ४)"—"अभीके चिदु लोककृत् (ऋ० सं० ८, ७, २१, १)"—इत्यपि निगमौ ॥

(३) दभ्रम् । (४) अर्भकम् । इत्यल्पस्य । दभ्रमिति दम्भोतेर्बधकर्मणः 'स्फायितञ्चि (उ० २, १३)'—इत्यादिना रक्, 'अनिदिताम् (६, ४, २४)'—इति नलोपः । सुदभं सुच्छेदम् अल्पत्वात् ॥ ऋच्छतेः 'अर्भकाश्च पृथुकपाका वयसि'—इति कप्रत्यये, ऋकारस्य भकारे गुणे रपरत्वे भकारे लोपजने च अर्भकमिति निपात्यते । अवहृतमूलपरिमाण इत्यर्थः ॥ "मा मे दुभ्राणि मन्यथाः (ऋ० सं० २, १, ११, ७)"—"नमो महद्भ्यो नमो अर्भकेभ्यः (ऋ० सं० १, २, २४, ३)" ॥

(५) तिरः । (६) सतः । इति प्राप्तस्य । अप्राप्तस्येत्यपरः पाठः । तरतेरसुनि बाहुलकात् अकारस्येकारः । तीर्णं प्राप्तमागतम् ॥ सर्त्तेरसुनि रेफस्य तकारः । सतः संसृतम् ॥ अप्राप्तस्येति पाठे पराजित तरणं सरणं च द्रष्टव्यम् ॥ "तिरश्चिदर्य्यया परि (ऋ० सं० ४, ४, १६, २)"—"पार्वे वभिन्नसत एति रुचसे (ऋ० सं० ५, ७, ८, १)" ॥

(७) त्वः । (८) नेमः । इत्यर्द्धस्य । अर्द्धशब्दोऽत्र समविभागवचनः, अर्द्धं हरते इति नपुंसकनिर्देशात् । त्वः अपगतः अपेत्य समुदायात् गतः पृथग्भूतः । तनोतेरुपधायाः पूर्वं उकारः, यथादेशः, नकारस्य विसर्जनीयः इति स्कन्दस्वामी । तनोतेः 'सर्वनिघृष्वरिष्वलष्व (उ० १, १५१)' इति वन्प्रत्ययष्टिलोपो निपात्यते ॥

नेमशब्दोऽन्यनामसु व्याख्यातः (१०५ पृ०) ।

समुदायादपनीतः पृथग्भूत इत्यर्थः ॥ "पीयति त्वो गृणाति (ऋ० सं० २, २, १६, २)" "प्र नेमस्मिन् सोमो अन्तः (ऋ० सं० ८, १, ६, ४)" ।

(९) ऋचा: । (१०) स्तृभि: । इति नवत्राणाम् । 'ऋच गतौ (तु० प०)' । ऋचेः 'इगुपधात् कित् (उ० ४, ११६)'— इति किदिन्प्रत्ययः । ऋचिरत्र उदर्थविशिष्टः । उद्गतानि ऊर्द्धमीरितानीव प्रकाशन्ते ॥ 'स्तृञ् आच्छादने (क्रया० उ०)' । कर्मण्यौणादिकः क्विप्, बाहुलकात्तुग् न भवति । तीर्णानि प्रसारितानि विस्तीर्णानि च प्रकाशन्ते हि । तस्य पाठो यथादृष्टम् ॥ "प्रमो य ऋचा निहिता स उचा (ऋ० सं० १, २, १४, ५)"—"पश्यन्तो द्यामिव स्तृभिः (ऋ० सं० ३, ५, ६, ३)" ॥

(११) वस्त्रोभि. । (१२) उपजिह्विका । इति सीमिकानाम् । वम्रशब्दो ह्रस्वनामसु व्याख्यात (२४५ पृ०) । 'जातेरस्त्रीविषयात् (४, १, ६३)' इति ङीप् । जातिशब्दश्चायं स्त्रीपुंसयोर्दृष्टो लोके स्त्रीलिङ्गो प्रसिद्ध इति स पठितः ॥ वमन्ति हि ते रसमुपजिह्विका । 'शेवयह्वजिह्वा (उ० १, १५२)'—इति जिह्वतेर्जिघत्तेर्वा वप्रत्ययान्तं निपात्यते जिह्वा, 'संज्ञायां कन् (५, ३, ८७)' 'प्रत्ययस्थात् (७, ३, ४४)'—इतीत्वम् । उपजिघ्नन्ति काष्ठम्, उपरचणाद्वोदकस्य उपजिह्विका ॥ "यदस्य उपजिह्विका यद्वम्रो अतिसर्पति (ऋ० सं० ६, ७, १२, ६)" वम्रशब्दस्यायमेव निगम. । "वम्रीभिः पुत्रमग्रुवो अदानम् (ऋ० सं० ३, ६, २, ४)"—इति स्त्रीलिङ्गस्य ॥

(१३) उर्दरम् । (१४) सूदरम् । इत्यावपनस्य । ऊर्दरम्— उत्पूर्वात् 'दृ विदारणे (क्र्या० प०)'—इत्यस्मात् 'ईर गतौ (अदा० आ०)'—इत्यस्माद्वा 'ऋदोरप् (३, ३, ५७)' घञि च उर्दरमुदीरं वा सदूर्दरम् । ऊर्द्ध्वं तद्दीर्णञ्च मध्यत', ऊर्द्धमीर्णं गतं वा दीर्णमिति त्वादित्वान्निष्ठानत्वम् (८, २, ४४) ॥ सूदरम्, गृहनामसु व्याख्यातम् (२५२ पृ०) । सूतदरम् ।

"तमूर्दरं न पृणता यवेन (ऋ० सं० २, ६, १४, ४)"—
"समिद्धो अञ्जन् कृदरं मतीनाम् (य० वा० सं० २८, १)" ॥

(१५) रम्भ। (१६) पिनाकम्। इति दण्डस्य। 'रभ राभस्ये (भ्वा० आ०)' अयमात्मने वर्त्तते। कर्मणि घञ्। 'रभेरशब्लिटोः (७, १, ६३)'—इति नुम्। आरभन्ते आश्रयन्ति अवष्टभ्याय दण्डम्। "आ त्वा रम्भं न जिव्रयः (ऋ० सं० ६, २, ४५, ४)" ॥ पिनाक—'पिष सञ्चूर्णने (रु० प०)'। 'पिनाकादयश्च (उ० ४, १५)'—इति आकप्रत्यय, षकारस्य नकारो गुणाभावश्च निपात्यते। प्रतिपिनष्टि हिनस्त्यनेन शत्रून्, दण्डाकारं धनुरुच्यते, तच्च रूढितो महादेवीयमेव सामान्येन। "अवततधन्वा पिनाकावसः कृत्तिवासाः (य० वा० सं० ३, ६१)" ॥

(१७) मेना। (१८) ग्ना। इति स्त्रीणाम्। उभावपि शब्दौ व्याख्यातौ वाङ्नामसु (६७पृ०। ७४पृ०)। मानयन्ति एताः पतिश्वशुरमातुलादयः पूज्या भूषयितव्याश्चेति मानात्। गच्छन्त्येना उपस्थायिन। "अमेनांश्चिज्जनिवतश्चकर्थ (ऋ० सं० ४, १, २८, २)"—"ग्नास्त्वाकृन्तन्नपसोऽतन्वत (ता० ब्रा०)" ॥

(१९) शेप। (२०) वैतस। इति पुंस्प्रजननस्य। शेपः—स्पृशतेरसुनि बाहुलकात् स्पशब्दस्य शेभाव। स्पर्शत्वेन स्त्रीन्द्रियम्। तदेतच्च विशिष्टानन्दसाधनं स्त्रीसुखं अयं शब्देनोच्यते। त्वगिन्द्रियस्पर्शभावश्च शेपमित्युदाहरणेऽप्याकारान्तत्वेन दर्शनात् करणे घञन्त इति केचित्, वा तत्र द्रष्टव्य। यद्यपि 'शीङ्गीभ्यां रूपस्वाङ्गयोः पुट् (उ० ४, १९६)'—इति शीङः पुडागमेन सिध्यति तथापि तदार्थानौचित्यात् "मुष्कयोरदधात्

—"मुष्कयोर्मिहिता सप."—"मा नो मवीव नि:पपि"—इत्यादौ सपशब्देन मेहनस्याभिधानादश्लीलत्वाच्च सपशब्दस्य शेभावेन कथञ्चिन्निवोढुं युक्तमिति सपतेरित्युक्तम्। तथाचोक्तम्—'अर्थो नित्य. परीक्षेत न संस्कारमाद्रियेत'—इति॥ विपूर्वात् 'तसु उपक्षये (दि० प०)'—इत्यस्मात् पचाद्यचि (३, १, १३४) वितसः। वितस एव वैतसः। प्रज्ञादित्वादण्। विशेषेण तस्यति क्षीणोभवति प्राक् सम्भोगकालात्। यद्वा, विशब्दिकमितिवत् विशब्दः प्रतिषेधार्थीय। न तस्यति अक्षीणम् सेकसामर्थ्यस्यानुपक्षीणत्वात्। "यस्यामुषन्तः प्रहराम शेपम् (ऋ० सं० ८, ३, २०, २)"—"वि श्रु माङ्क्षः श्वयथो वैतसेन (ऋ० सं० ८, ५, १, ५)"॥

(२१) भया। (२२) एना। इत्युपदेशस्य। प्रत्यक्षाभिधानमिहोपदेशोऽभिमतः। सामान्येन चैते त्रिष्वपि लिङ्गेषु। अनयेति पदस्य नशब्दलोपेन भया। "भ्रया ते अग्ने सुमिधा विधेम (ऋ० सं० २, ४, २५, ५)"—इति स्त्रिया समिधा सामानाधिकरण्यात्॥ एना 'द्वितीयाटौस्स्वेन (२, ४, ३४)"—इति इदमेतदोरन्वादेशविषये एनादेशः, तृतीयैकवचनस्याकारः। "एना वो अग्निम्नमसा (ऋ० सं० ५, २, २१, १)"—इति नपुंसकस्य मनसो सामानाधिकरण्यात्। एना पत्या तन्व१ं सं सृजस्व (ऋ० सं० ८, ३, २५, २)"—इति पुंसः पत्युः सामानाधिकरण्यात्॥

(२३) सिषक्तु। (२४) सचते। इति। सिषक्तिति कर्त्तुरभिधानम्। तस्य प्रत्ययार्थत्वेन प्राधान्यादत आह सेवमानस्येति। वैयाकरणसिद्धान्तप्रसिद्धार्थमेवमवोचत्, परमार्थतस्तु धात्वर्थप्रतिपादनपरतयैवाख्यातपदोपादानमर्थाभिगमत्वञ्च। अतश्चैतदुक्तं भवति। सिषक्तु सचत इति सेवार्थौ धातू इति।

तथाहि। "भावप्रधानमाख्यातम्"—इति हि स्वसिद्धान्तः। सिपक्ष्मः सचते। 'षच समवाये' भ्वादिः स्वरितेत्, अत्र सेवार्थः। सिषक्तीति लोटि तिपि शप्। तस्य 'बहुलं छन्दसि (२, ४, ७६)'—इति श्लुः। 'षस्तिपिपर्त्योश्च'। 'बहुलं छन्दसि (७, ४, ७८)'—इत्यभ्यासस्येत्वम्। "स नः सिषक्तु यस्तुरः (ऋ० सं० १, १, २४, २)"—सचस्वा नः स्वस्तये (ऋ० सं० १, १, २, ४)"—इति तु यथानिगमसुदाहरणम्।

(२१) भ्यसते। (२६) रेजते। इति। भयवेपनयोर्भीतुः भ्यसते इति। रेजते इति नैरुक्तो धातुः। उभावप्युभयोरर्थयो। "यस्य शुष्माद्रोदसी अभ्यसेताम् (ऋ० सं० २, ६, ७, १)"—"रेजते अग्ने पृथिवी मखेभ्यः (ऋ० सं० ५, १, ८, ४)"—इति।

इति षड्विंशतिर्दिशनामानि॥ ३, २८॥

(इति नैघण्टुकाण्डपरिशिष्टं समाप्तम्)

---

## अथ चतुर्थोऽध्यायः।

—:○:—

अथ नैगमं नाम द्वितीयं काण्डं व्याख्यायते—

जहा(१)। निधा(२)। शितामं(३)। मेहनाः(४)। दमूनाः(५)। मूषः(६)। इषिरेण(७)। कुरुतनं(८)। जठरे(९)। तितउ(१०)। [illegible] (११)। मध्या(१२)। मन्दू(१३)। [illegible] (१४)। कायमानः(१५)। लोधम्(१६)। [illegible]

(१७) । विद्रधे (१८) । द्रुपदे (१९) । तुर्वणि (२०) । नंसन्त (२१) । नसन्त (२२) । आहनसः (२३) । अद्भसत् (२४) । इषिराः (२५) । वाहः (२६) । परितक्म्या (२७) । सुविते (२८) । दयते (२९) । नूचित (३०) । नूचं (३१) । दावने (३२) । अकूपारस्य (३३) । शिशीते (३४) । सुतुकः (३५) । सुप्रायणाः (३६) । अप्रायुवः (३७) । च्यवनः (३८) । रजः (३९) । हरः (४०) । जुहुरे (४१) । व्यन्तः (४२) । क्षाणाः (४३) । वायो (४४) । विषुणः (४५) । जामिः (४६) । पिता (४७) । शंयोः (४८) । अदितिः (४९) । एरिरे (५०) । जसुरिः (५१) । जरते (५२) । मन्दिने (५३) । गौः (५४) । गातुः (५५) । दंसयः (५६) । तूताव (५७) । चयसे (५८) । वियुते (५९) । ऋधक् (६०) । अस्याः (६१) । अस (६२) । इति द्विषष्टिः पदानि ॥ १ ॥

(१) जहा । हन्तेर्लिडुत्तमैकवचने णलि, द्विवचने, अभ्यासचर्त्वं, कुत्वाभावो नकारलोपश्छान्दसत्वात् । जघानेत्यर्थः । "जहा को अस्मदीषते (ऋ० म० ६, २, ४९, २)" ॥

(२) निधा । निपूर्वाद्धाते 'अ तश्चोपसर्गे (३, ३, १२६)' --इति क । निधीयते स्थाप्यते मृगपक्षिग्रहणाय । निधा

पाशसमूहः । "मुमुग्ध्यस्मान्निधयेव बद्धान् (ऋ० सं० ८, १, ४, ६)" ॥

(३) शिताम । श्रितशब्दस्य रेफलोपोऽतो दीर्घत्वं मकारश्चोपजनः । षड्भिः श्रितत्वाद् दोः शिताम । सितशब्दस्य वा सकारस्य शकारः, अन्यत् पूर्ववत् । योनिः शिताम । योनिर्गुदम् । विषितः । विविधं सितो बद्धो भवति गुदोपोऽस्थवि-मायो विकसति सङ्कोचः । "पार्श्वतः श्रोणितः शितामतः (य० वा० सं० २१, ४३)" ॥

(४) मेहना । मंहतेर्दानकर्मणो ल्युट्, बाहुलकादकारस्यैकारो नकारलोपश्च । सुपां सुलुगित्यादिना सोराकारादेशः । मंहनीयं धनादि । छन्दोगानां 'मदहना'—इत्येवं रूपं पाठः । प्रसङ्गेन च वेदान्तरपाठस्य व्याख्यानं भाष्यकारेण कृतम् (निरु० ४, ४)। "यदिन्द्र चित्र मेहना (ऋ० सं० ६, २, १०, १)" ॥

(५) दमूनाः । 'दम उपशमे दाने वा'। दान्ते पुरुषे वा, दमे गृहे वा मनो यस्य स दमूनाः । दान्तमनश्शब्दस्य नलोपः । दमदान्तशब्दयोर्दभावः, मनःशब्दे मकारात्परस्याकारस्य ऊकारादेशः । दमशब्दो व्याख्यातो गृहनामसु (२५४ पृ०)। ददातेर्ल्युटि दानं, दमेर्निष्ठायां मतुपि दन्तमः । 'दमेरूनसिः (उ० ४, २३८)'—इति वैयाकरणाः । "जुष्टो दमूना अतिथिर्दुरोणे (ऋ० सं० ३, ८, १८, ५)" ॥

(६) मूषः । 'मुष स्तेये (क्र्या० प०)'। 'क्विब्वचिप्रच्छि (३, २, १७८ वा०)'—इत्यत्र 'प्राक् प्रत्ययनिर्देशादिष्टसिद्धि (भा०)'—इति क्विप् दीर्घश्च । जस् । मूषिकाः । सूत्रमर्थं 'मुष्णन्ति हरन्ति । "मूषो न शिश्ना व्यदन्ति माध्यः '(ऋ० सं० १, ७, २१, ३)" ॥

(७) इषिरेण । 'इषु इच्छायाम् (तु० प०)' । 'इषिमदिमुदि उ० १, ५१'—इत्यादिना किरच्प्रत्ययः । यद्वा, ईषतेर्गतिकर्मणः ईषेर्दर्शनार्थस्य वा बाहुलकात् किरच् ह्रस्वश्च । मनो विशेषणमेतत् । "इषिरेण ते मनसा सुतस्य (ऋ० सं० ६, ४, १२, २)" ॥

(८) कृणुतन । करोतेर्लोण्मध्यमपुरुषबहुवचनस्य तशब्दस्य 'तप्तनप्तनथनाश्च (७, १, ४५)'—इति छान्दसस्तनादेशः । तत्र तशब्द एवार्थवान् नशब्दस्तूपजनोऽनर्थकः । कृणुतनेत्यस्य प्रतिपादनार्थमाह भाष्यकार,—'कर्त्त नहन्तनयातनेत्यनर्थका उपजना भवन्ति (निरु० ४, ७)'—इति । अत्र बहुवचनमन्येऽप्येवंरूपा उपजनाः सन्तीति प्रतिपादनार्थम् । 'स्रो यक्' 'प्राज्ञवेरसुक्'—इत्येवमादयः । "रिप्रेण तपसा कृणुतन" —"अध्वर्यवः कर्त्तना श्रुष्टिमस्मै (ऋ० सं० २, ६, १४, ३)" —"तपिष्ठेन हन्मना हन्तना तम् (ऋ० सं० ५, ४, ३०, २)"— "प्रयातन सखीँरच्छा सखायः (ऋ० सं० २, ३, २६, ३)"— "हत्वाय शत्रून् विभजस्व वेदः (ऋ० सं० ८, ३, १८, २)"— "माह्मयासः पितरः सोम्यासः (ऋ० सं० ५, १, २०, ५)" ॥

(९) जठरम् । जग्धशब्दोपपदात् धृञो दधातेर्वा 'क्षदरादयश्च (उ० ५, ६२)'—इति अरन्प्रत्ययो जग्धशब्दस्य जभावो धकारस्य ठकारश्च निपात्यते । जग्धं भक्षितमन्नमस्मिन् ध्रियते तिष्ठति, धीयते प्रक्षिप्यत इत्यर्थः । "आसिञ्चस्व जठरे मध्व ऊर्मिम् (ऋ० सं० ३, ३, ११, १)" ।

(१०) तितउ । तनोतेस्तुदेश्च निष्ठायां मतुपि उपधाया इत्वं दकारलोपो वकारस्य सम्प्रसारणं तलोपश्च । तिलमात्रं तुन्नं वा । तिलशब्दात् तिः, तुन्नशब्दात् उकारतकारौ । मत्वर्थे बहुव्रीहिः । तनेन मध्येन, तुन्नैश्छिद्रैः, तिलमात्रैश्च

तैस्तङ्। तनोतेः क्तान्तादसिर्व्याकरणः। ततं विश्वम्।
"सक्तुमिव तितउना पुनन्तः (ऋ० सं० ८, २, २३, २)"।

(११) सिप्रे। 'सृ गतौ (भू० प०)'। 'स्फायितञ्चिवञ्चि-क्षिप्रकिक्षिपिसृपितृपिदृपि (उ० २, १३)'—इति रक्, बाहुलकात् सकारस्य शिभावः। अर्थं गमयन् प्रसि सृप्रे भवतः। "वि-ष्वेषु सिप्रे विश्वं अस्तु धेने (ऋ० सं० १, ७, १३, ४)"।

(१२) मध्या। मध्यशब्दात् सप्तम्येकवचनस्य 'सुपां सुलुक् (७, १, ३९)'—इत्यादिना आकारः। मध्ये इत्यर्थः। "मध्या कर्तोर्विततं सं जभार (ऋ० सं० १, ८, ७, ४)"।

(१३) मन्दू। मन्देरौणादिकः 'भृमृशीतृचरि (उ० १, ७)'—इत्यादिना बाहुलकादुप्रत्ययः। मदेर्वा उप्रत्ययो नुम् च। प्रथमाद्विवचनम्। सप्तम्येकवचनस्य वा 'सुपां सुलुक् (७, १, ३९)'—इत्यादिना पूर्वसवर्णः। मदिष्णू मदिष्णुना वा। "मन्दू समानवर्चसा (ऋ० सं० १, १, १२, २)"।

(१४) ईर्मान्तासः। 'ईर प्रेरणे (चु० प०)'। 'अर्तिस्तुसुहुसृधृक्षि (उ० १, १४०)'—इति मन्प्रत्ययः। अन्तशब्दो व्याख्यातः (२१८ पृ०)। आदित्याश्वा उच्यन्ते। ते च सप्त। तेषां ये अन्ताः ईर्माः, ईरिताः, प्रेरिताः विरलाः इत्यर्थः। अथवा अश्वस्य अन्ता जघनं सर्वेषामोर्म पृथुरित्यर्थः। "ईर्मान्तासः सिलिकमध्यमासः (ऋ० सं० २, ३, १२, ५)"।

(१५) कायमानः। 'चायृ पूजानिशामनयोः' भ्वादिः, स्वरितेत्। चायमानः। चकारस्य ककारः। यद्वा, कमेर्णिङ्, ततो लटः शानच्। कामयमान इत्यस्य मकारलोपः। "कायमानो वना त्वम् (ऋ० सं० २, १, ४, २)"।

(१६) लोधम्। 'लुभ गार्ध्ये' क्त। लुब्धशब्दस्य बलोप

ऋकारस्यौत्वञ्च। सुवर्णमित्यर्थः। "लोधं नयन्ति पशुमन्य-
मानाः (ऋ॰ सं॰ ३, ३, २३, ३)"॥

(१७) शीरम्। शिङः 'स्फायितञ्चिवञ्चिशकि (उ॰ २;
१२)'—इत्यादिना बाहुलकाद्रक्। अश्नोतेर्वा पूर्ववद्रक् धातोः
शीभावश्च। अयमग्निरुच्यते। अनुशायिनमाश्रितं वा। अनु-
गम्यन्ते भूतानि जङ्गमानि जाठरात्मना, स्थावराणि च
सूक्ष्मेण अनभिव्यक्तमग्न्यात्मना यः शेते व्यवतिष्ठते, अश्नोति
वा। एवंशीलः। "शीरं पावकशोचिषम् (ऋ॰ सं ३,
१, ६, ३,)"॥

(१८) विद्रधे। विपूर्वात् 'दृभी भये' इत्यस्मात् अनेका-
र्थत्वेन हिंसार्थात् क्तः। विहृब्धा इति स्थिते ऋकारस्य रादेशो
बकारलोपश्च। बहुवचनस्य स्थाने एकवचनम्। विविधं
हिंसितेषु कुपितेषु इत्यर्थः। "कनीनकेव विद्रधे (ऋ॰ सं॰
३, ६, २०, ७)"॥

(१९) द्रुपदे। द्रुशब्दो द्रुमपर्यायः। द्रुममयेषु पदेषु पादु-
काख्येषु इत्यर्थः। वचनव्यत्ययः पूर्ववत्। "नवे द्रुपदे अर्भके
(ऋ॰ सं॰ ३, ६, २०, ७)"॥

(२०) तुग्वनि। तूर्णशब्दोपपदात् गमेः 'अन्येभ्योऽपि
दृश्यन्ते (३, २, ७५)'—इति वनिपि तूर्णशब्दस्य तुभावो
गमेष्टिलोपश्च। तुरतीत्यर्थः। तद्विपानायावगाहनाय वा
क्षिप्रमागच्छन्ति। सप्तम्येकवचनम्। "सुवास्त्वा अधि
तुग्वनि (ऋ॰ सं॰ ६, १, २५, ७)"॥

(२१) नंसन्ते। नमेर्मकारात् परः सुगागमः, व्यत्ययेना-
त्मनेपदम्। नमन्ति इत्यर्थः। "कुविन्नंसन्ते मरुतः पुनर्नः
(ऋ॰ सं॰ ५, २, ८, ५)"॥

(२२) नसन्त। 'नस कौटिल्ये' भ्वादिरात्मनेपदी,

अवाप्नोतिरनेनतेवार्थे वर्त्तते। 'छन्दसि लुङ्लङ्लिटः (३, ४, ६)'—इति वर्त्तमाने लङ्। 'बहुलं छन्दस्यमाङ्योगेऽपि (६, ४, ७५)—'इत्यडभावः। 'प्राप्नुवन्ति नमन्ति वा। "घृतस्य धारा समिधो नसन्त (ऋ० सं० २, ८, ११, २)"॥

(२३) आहनसः। आहन्तेरसुन्, मत्वर्थीयस्य लुक्। 'सर्वे इदमाहतम्' 'ब्राह्मणे इदमाहतम्'—इत्यादिप्रयोगदर्शनात् आहन्तिर्वचनार्थः। आहनवन्तो वचनवन्त इत्यर्थः। "ये ते मदा आहनसो विहायसः (ऋ० सं० ७, २, ३३, ५)"॥

(२४) अश्वसत्। 'अदेर्मन्'—इति मनिन्। अद्यते इत्यद्म अन्नम्। तस्मिन् सीदन्ति सनोति वा तत्। अद्मन्युपपदे सदेः सनोतेर्वा 'अन्येभ्योऽपि दृश्यन्ते (३, २, ७५)'—'क्विप् च (३, २, ७६)'—इति क्विपि रूपम्। सनोतेर्नकारलोपे कृत्त्वे पिति तुक्। "अद्मसद्म संनतो बोधयन्ती (ऋ० सं० २, १, ०, ४)"॥

(२५) इविषः। 'इषेरिच्छार्थात् (तु० प०)' 'इषियुधीन्धि (उ० १, १४२)'—इति मक्प्रत्ययः। ईषतेरिषतेर्वा बाहुलकात् मकि धातोरिषभावः। इच्छा, गमनं, दर्शनं वा इषम्। 'अत इनिठनौ (५, २, ११५)'। यद्वा, उणादिको मिन्प्रत्ययः। एषितारो हविषा स्तुतीनाञ्च गन्तारः, द्रष्टारो वा सर्वार्थानाम्। "ते वा मीमन्त इषिको अभीरवः (ऋ० सं० १, ६, ११, ६)"।

(२६) वाहः। वहतेः 'वहश्च'—इति णिदसुन्। देवताः प्रत्युह्यमानत्वात् वाहः स्तुतिः। अथवा यदेतत् कूपसमीपे तदुदकपूर्णीकृतस्य स्थानमावाह इति लोके प्रसिद्धं, तस्मादश-

त्वात् सोमरसस्य पूर्णमभिषवणं चमं वाह इत्युच्यते। "इन्द्राय वार्हं कृणवाम सुष्टम् (ऋ० म० ३, ३,१८, ३)"॥

(२७) परितक्म्या। परिपूर्वात् तकतेर्गतिकर्मणो मनिन्। परित, सर्वतो गच्छति, सर्वस्मिन् देशे रात्रिरस्ति। अथवा तक्मोष्ण तत् परित उभयत एना परिच्छ्रते वर्त्तते इति। तदुक्तम्। 'तक्म त्युष्णनाम, तत इति सत इति तेन परितक्मा सति यकारोपजनेन परितक्म्या'। "कस्मे हिंति का परितक्म्यासीत् (ऋ० मं० ८, ६, ५, १)"

(२८) सुविते। सुपूर्वादेतेः क्तप्रत्ययः। 'षुङ प्राणिगर्भमोचने'—इत्यस्माद्वा क्त छान्दसत्वादिडागमः, उवङ् च। सप्तम्येकवचनम्। शोभनं गम्यते यत्र स्वर्गादौ तत्, प्रसूते प्रजाया वा। "सुविते मा धा (य० वा० स० ५, ५)"॥

(२९) दयते। 'दय दानगतिरक्षणहिंसादानेषु (भ्वा०)' अनेकार्थत्वात् विभागदहनगमनेष्वपि वर्त्तते। "मही-धनानि दयमानः (ऋ० स० २, १, १९, २)"—इति दाने। "नवेन पूर्वं दयमाना स्याम (निरु० ४, १७)"—इति रक्षणे। "य एक इद्विदयते (ऋ० स० १, ६, ६, २)"—इति दाने विभागे वा। "दुर्मर्तुर्भीमो दयते वनानि (ऋ० स० ४, ५, ८, ५)"—इति दहने। "त्रिदर्हसुदयमानो वि शत्रून् (ऋ० म० ३, २, १५, १)"—इति हिंसायाम्। "मा वायसो श्येना दयमानो अबूबुधत् (निरु० ४, १७)"—इति गतिकर्मा॥

(३०) नूचित। (३१) नूच। अनयो पदद्वयो। "यथा चित्पूर्विचित्तदपो नदीनाम् (ऋ० स० ४, ७, २, ३)"—"नूच पुरा च सदनं रयीणाम् (ऋ० स० १, ७, ४, २)"।

(३२) दावने। ददाते 'आतो मनिन्क्वनिब्वनिपश्च (३, २, ७४)—इति व्यत्ययेन कर्मणि वनिप्। तत षष्ठ्यर्थे द्वितो-

यार्थे वा चतुर्थी (२, ६, ६२, वा०), अल्लोपाभावश्छान्दस (६, ४, १३४)। देवस्य देव वेत्यर्थ ॥

(३३) अकूपारस्य। 'पॄ पालनपूरणयो (जु० प०)'। घञ्। पार पालन पूरण वा। अकुत्सितं पालन पूरण वा यस्य तदकुपारं सत् कोर्दीर्घत्वेनाकूपारम्। तस्य दावने इति सम्बन्ध। "अकूपारस्य दावने (ऋ० सं० ४, २, १०, २)"। आदित्यसमुद्रावप्यकूपारौ। पूर्ववत्। कच्छपोऽप्यकूपार। कूपशब्दे कर्मण्युपपदे ऋर्तेः कर्मण्यण्। न कूपार अकूपार। कच्छपो हि सति सम्भवे ह्रद गच्छति न कूपमल्पोदकत्वात्। त्रयाणा निगमा पश्यया ॥

(३४) शिशीत। 'शो तनूकरणे' दिवादि परस्मैपदी। व्यत्ययेन शप श्लो ओकारस्येत्वमात्मनेपदञ्च। श्यतीत्यर्थ। 'शिशीते शृङ्गे रक्षसे विनिक्षे (ऋ० स० ३, ८, १५, ३)" ॥

(३५) सुतुक। सुपूर्वात्तकतेर्गतिकर्मण गेहे क (३, १, १४४)'—इति बाहुलकात् कप्रत्ययोऽकारस्योकारश्च। सुपूर्वाद्वा तुञ्छन्दस्याकार उपजन चकारस्य जकारस्य वा ककारभावश्च। सुगमन. सुप्रजा वा। "अग्नि, सुतुक सुतुकेभिरश्वै (ऋ० स० ७,५,२१,७)" ॥

(३६) सुप्रायणा। सुप्रपूर्वादयतेर्ल्युट्। 'उपसर्गस्यायतौ (८, २, १८)'—इति लत्वाभावश्छान्दस। सुप्रगमना इत्यर्थ। ""सुप्रायणा अस्मिन् यज्ञे विश्रयन्तामृतावृधः (य० वा० स० २८ ५)" ॥

(३७) अप्रायुव। प्र आ इत्युपसर्गद्वयपूर्वात् 'यु मिश्रणे (अदा० प०)'—इत्यस्मात् 'गेहे क (३, १, १४४)'—इति बाहुलकात् कप्रत्यय, उवङि कृते अन्त्यस्याकारस्य लोपे च जसि रूपम्। 'सुपा सुलुक् (७, १, ३९)'—इति जस स्थाने

सुः। न मायुवोऽमायुवः। ,अमगतमनस्काः न प्रमाद्यन्त इति। "अमायुवो रक्षितारो दिवे दिवे (ऋ० सं० १, ६, १५, १)" ॥

(३८) च्यवानः। अन्तर्णीतण्यर्थात् च्यवतेः 'युच् बहुलम् (उ० २, ७४)'—इति युचि पूर्वत्र बाहुलकाद्दीर्घः। देवान् प्रति स्तोमानां च्यावयिता गमयिता स्तोतेत्यर्थः। कृदित्वादिप्रसङ्गनिवृत्तिः। "युव च्यवानं सनयं यथारथम् (ऋ० सं० ७, ८, १५, ४)"। च्यवनस्य तु "च्यवनो भार्गवः शार्यातं मानवमभिषिषेच (ऐ० ब्रा० ८, ४, ७)"—"अप्रवानवत् च्यवनवत् भृगुवत्"—इत्यादिर्निगमः प्रसिद्धः ॥

(३९) रजः। व्याख्यातं द्यावापृथिवीनामसु (२०५ पृ०)। (४०) हरः। ज्वलनामसु (१२४ पृ०) व्याख्यातम्। रजस्तु ज्योतिरुदकलोकासृगहर्दिनवाचकम्। चतुरञ्जयति ह्येतत् सर्वं स्वेन स्वेन व्यापारेण सर्वप्राणिनः। "या ते अग्ने रजःशया (य० वा० सं० ५, ८)"—"भुवो यज्ञस्य रजसश्च नेता (ऋ० सं० ७, ६, ४, ६)"—"त्वया हतानि सुकृतो रजांसि (ऋ० सं० ४, ७, २, ३)"—"विरात्रेण रजस्वला शुचिर्भवति"—"विवर्त्तेते रजसी वेद्याभिः (ऋ० सं० ४, ५, ११' १)"—इति क्रमेण निगमाः॥ हरो ज्योतिरुदकलोकवाचकम्। ज्योतिर्हरति तमसम्, उदकं वहत् हरति सर्वं लोकेषु, म्रियन्ते सर्वा एव वा कालेन मृत्युनाम्रियन्ते। "प्रत्यग्ने हरसा हरः शृणीहि (ऋ० सं० ८, ४, ८, ५)"—इति ज्योतिषाम्। उदकलोकवाचिनिगमौ पर्येष्यौ ॥

(४१) जुहुरे। जुहोतेः 'छन्दसि लुङ्लङ्लिटः (३, ४, ६)'—इति लिट्, 'इरयोरे (६, ४, ७६)'—इति रे, जूहुति।

यद्वा, यथाप्राप्तो लिट् जुह्विरे हुतवन्तः। "जुहुरे वि चित- यन्तः (ऋ० सं० ४, ६, ११, २)"॥

(४२) व्यन्तः। व्यन्त इत्येषोऽनेककर्मा (निरु० ४, १९)'। व्यन्त इत्यत्र य एष धातुः स इयतिवदनेकार्थ इत्यर्थः। 'वी गतिप्रजननकान्त्यसनखादनेषु (धा० प०)'। अनेकार्थत्वात् पश्यत्यर्थोऽपि॥

(४३) क्राणाः। करोतेर्लटः शानचि विकरणव्यत्ययेन लुक्। "गोभिः क्राणा अनूषत (निरु० ४, १८)"॥

(४४) वाशी। व्याख्यातं वाङ्नामसु (६५ पृ०)। यद्वा, वासीशब्दश्छेदनद्रव्यविशेषवचनः, तस्य सकारस्य शकारेण व्युत्पत्तिः। "वाशीभिस्तक्षताश्मन्मयीभिः (ऋ० सं० ८, ५, १८, ४)"॥

(४५) विषुण। विषमशब्दस्य मकारस्योकारो मकारस्य णकारश्च। विषमः। "सधंद्र्यो विषुणस्य जन्तोः (ऋ० सं० ५, २, ३, ५)"॥

(४६) जामिः। व्याख्यातमङ्गुलीनामसु (१६४ पृ०)। अति- रेकवालिशसमानजातीयानां वाचको जामिशब्दः। अति- रेकः पुनरुक्तमुच्यते, पुनर्जायमानत्वात्। "जामि वा एतद् यज्ञे क्रियते (ऐ० ब्रा० २, ५, ३)"। वालिशो मूर्खः। स हि कस्मैचित् पुरुषायालम्। अत्र निगमः पर्येष्यः। समान- जातीयो भगिनीलक्षणोऽर्थः। समानाभ्यां मातापितृभ्यां जातत्वात्। जामिशब्देनैवाभिधातुं शक्यमिति मिशब्द उपजनः। "यत्र जामयः कृण्वन्न जामि (ऋ० सं० ७, ६, ७, ५)"॥

(४७) पिता। 'नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृमातृ- पितृदुहितृ (उ० २, ८८)'—इत्यादिना पातेः केवलात्

स्वन्ताद्वा तृच्प्रत्ययान्तो निपात्यते। पतिशब्दत्वेन च नामार्थो व्याख्यातः (२४० पृ०)। "द्यौर्मे पिता जनिता नाभिरत्र (ऋ० सं० २, ३, २०, ३)" ॥

(४८) शयोः। शाम्यतेः क्विप् शम्। 'यु पृथग्भावे' इत्यस्माद् विच्। अन्ये पदद्वयमिति वर्णयन्ति। 'शमनं रोगाणां यावनं च भयानाम्'। "अथाःनः शंयोररपो दधात (ऋ० सं० ७, ६, १७, ४)"। प्रसङ्गेन स्तुतिसारूप्यात् भाष्ये 'अथापि शयुर्बार्हस्पत्यः (निरु० ४, २१)'—इत्युक्तम् ॥

(४९) अदितिः। पृथिवीनामसु व्याख्यातम् (१० पृ०)। ऐतिहासिकानां मते देवमाता, नैरुक्तानां मते अदीनादिगुणः अथवाऽप्यचे प्रकृतिः। "अदितिर्द्यौरदितिरन्तरिक्षम् (ऋ० सं० १, ६, १६, ५)" ॥

(५०) एरिरे। प्रोपसर्गार्थवृत्त्याङ्पूर्वात् 'ईर गतौ (चु० प०)'—इत्यस्माल्लिटि झस्य रे च। प्रेरितवन्त इत्यर्थः। "यमेरिरे भृगवो विश्ववेदसम् (ऋ० सं० २, २, १२, ४)" ॥

(५१) जसुरिः। 'जसु ताडने (चु० प०)'। 'जसिसहोरुरिन् (उ० २, ६९)'—इति उरिन्प्रत्ययः। यद्वा, अस्यतेर्बाहुलकादुरिन्प्रत्यये जुडागमश्च धातोः। ताडितो बद्धमुक्तो हतवेगश्रान्तो जसुरिः। "नीचायमानं जसुरिं न श्येनम् (ऋ० सं० ३, ७, ११, ५)" ॥

(५२) जरते। नैघण्टुकधातुः। यद्वा, 'गॄ स्तुतौ (क्र्या० प०)'—इत्यस्य गकारस्य जकार इति स्कन्दस्वामी। "इन्धान एनं जरते स्वाधीः (ऋ० सं० ७, ८, २८, १)" ॥

(५३) मन्दिने। मन्दते स्तुतिकर्मणो धात्रि मन्द. स्तुति। छान्दसत्वादत इनिठनौ नेष्यते हि एकाक्षरात्, ततो जाते,

समस्याश्च।" "प्र मन्दिने पितुमदर्चता वचः (ऋ० सं० १, ७, १२, १)" ॥

(५४) गो। व्याख्यात रश्मिनामसु (२६ पृ०)। "अत्रा ह्गोरमन्वत (ऋ० सं० १, १, ७, ५)" ॥

(५५) गातु। व्याख्यात पृथिवीनामसु (१२ पृ०)। अत्र भावे तुन् गमनमित्यर्थः। "गातु यज्ञाय गातु यज्ञपतये (निरु० ४, २१)" ॥

(५६) दसय। दस इति कर्मनामसु व्याख्यातम (१३७पृ०)। अत्र तु 'प्रच इ (उ० ४, १२४)' असू। दमय कर्माणि दस यन्त्यनानि। "कुत्साय मन्मन्नह्यश्च दंसयः (ऋ० सं० ८, ७, २६, १)" ॥

(५७) तूताव। तवतेर्वृद्धिकर्मणो लिटि णलि 'तुजादीनां दीर्घोऽभ्यासस्य (६, १, ७)'। "स तूताव नैनमश्नोत्यंहतिः (ऋ० सं० १, ६, २०, २)" ॥

(५८) चयसे। 'चय गतौ' भ्वादिरात्मनेपदी। अत्र चातयतेर्नाशनार्थस्यार्थे वर्तते। यद्वा, चातयतेरेव विकृतं रूपम्। "बृहस्पते चयसे इत् पियारुम् (ऋ० सं० २, ५, १२, ५)" ॥

(५९) वियुते। यौतिरेव पृथग्भावार्थो विपूर्वः। "समान्या वियुते दूरे अन्ते (ऋ० सं० २, ३, २५, २)" ॥

(६०) ऋधक्। अव्ययमिदं पृथग्भावस्य वाचकम्।, यदिन्द्र दिवि पार्ये यदृधक् (ऋ० सं० ४, ७, १२, ५)"। यथाप्यृध्नोत्यर्थे दृश्यते, तदा 'ऋधु वृद्धौ (स्वा० प०)' अस्मात् 'प्रथ कित् (उ० १, १२०)'—इति बाहुलकादजिप्रत्ययः किश्च। ऋध्नुवन् ऋद्धं कुर्वन्। "ऋधंगया ऋधगुताशमिष्ठा (य० वा० सं० ८, २०)" ॥

(६१) येस्याः । (६२) । यस्य । शब्दान्तरेणानादिष्टस्य सन्निधिविशिष्टपदार्थलक्षणस्याभिधेयस्योच्चारणं प्रथमादेशः आदिष्टतमस्य तस्योच्चारणमन्वादेशः । तत्र प्रथमादेशविषयत्वादुदात्तं पदद्वयं तीव्रार्थतरमतिस्फुटप्रयोजनम्, अन्यानादिष्टस्वार्थत्वात् । अन्वादेशविषयतामत्त्वादनुदात्तं पदद्वयमल्पीयोऽर्थतरमतिशयेनास्फुटप्रयोजनम्, अन्यादिष्टस्वार्थत्वात् । "अस्या ऊ षु ण उप सातये भुवः (ऋ० सं० २, २, २, ४)"— "दीर्घायुरस्या यः पतिः (ऋ० सं० ८, ३, २७, ४)" ॥ "अस्य वामस्य पलितस्य होतुः"—"तृतीयो भ्राता घृतपृष्ठो अस्य (ऋ० सं० २, ३, १४, १)" ॥

इति द्विषष्टिः पदानि ॥ १ ॥

सस्निम्(१) । वाहिष्ठः(२) । दूतः(३) । वावशानः(४) । वार्यम्(५) । अन्धः(६) । असश्चन्ती (७) । वनुष्यति(८) । तरुष्यति (९) । भन्दना: (१०) । आहनः(११) । नदः(१२) । सोमो अक्षाः (१३) । श्वात्रम्(१४) । ऊतिः (१५) । हासमाने (१६) । पड्भिः (१७) । सुमत् (१८) । द्विता (१९) । व्राः(२०) । वराहः(२१) । स्वसराणि (२२) । शर्याः(२३) । अर्कः(२४) । पविः(२५) । वक्षः(२६) । धन्व(२७) । सिनम्(२८) । इत्था (२९) । सचा (३०) । चित् (३१) । आ (३२) । द्युम्नम् (३३) । पवित्रम् (३४) । तोदः (३५) ।

खन्वीः(३६) । शिरिम्बिठः(३७) । विष्णुः(३८) । आघृणिः(३९) । पृथुज्रयाः(४०) । अथर्युम्(४१) । कायुका(४२) । अग्रिगुः(४३) । आङ्गूषः(४४) । आपान्तमन्युः(४५) । श्मशा(४६) । उर्वशी(४७) । वयुनम्(४८) । वाजपस्त्यम्(४९) । वाजगन्ध्यम्(५०) । गध्यम्(५१) । गधिता(५२) । कौरयाणः(५३) । तौरयाणः(५४) । अह्रयाणः (५५) । हरयाणः(५६) । आरितः(५७) । व्रन्दी(५८) । निष्षपी(५९) । तूर्णाशम्(६०) । क्षुम्पम्(६१) । निचुम्पुणः(६२) । पदिम्(६३) । पादुः (६४) । वृकः(६५) । जोषवाकम्(६६) । कृत्तिः (६७) । श्वघ्नी (६८) । समस्य (६९) । कुटस्य (७०) । चर्षणिः(७१) । शम्बः(७२) । केपयः(७३) । तूतुमाकृषे (७४) । अंसत्रम् (७५) । काकुदम् (७६) । बीरिटे (७७) । अच्छ (७८) । परि (७९) । ईम्(८०) । सीम्(८१) । एनम्(८२) । एनाम्(८३) । सृणिः(८४) । इति चतुरशीतिः पदानि ॥ २ ॥

(१) सस्निम् । 'ष्णा वेष्टने (अदा० प०)' 'ष्णा शौचे (अदा० प०)' । ''आदृगमहनजन किकिनौ लिट् च (३, २, १७१)''—इति किन्प्रत्ययः । लिड्वद्भावाद् द्विर्वचनादि । 'आतो-

लोप इटि च (६, ४, ६४)'। अववेष्टयिताभिरन्तःप्रविष्टाभि र्व्यापितो वा मेघ. सन्धि । "सस्निमविन्दच्चरणे नदीनाम् (ऋ० स ८, ०, २७, ७)" ॥

(२) वाहिष्ठ । वोढृशब्दात् 'तुश्छन्दसि (५, ३, ५९)'—इष्ठनि 'तुरिष्ठेमेयःसु (६, ४, १५४)'—इति तृचो लोप । वाहिष्ठ इति उपधादीर्घश्छान्दस । अतिशयेन वोढा वाहिष्ठ । "वाहिष्ठो वां हवानाम (ऋ० स० ६, २, २९, १)" ॥

(३) दूत ।

(४) वावशान । 'वश कान्तौ (अदा० प०)' 'वाशृ शब्दे (दि० आ०)'। 'लिटः कानज् वा ( ३, २, १०६)'। द्विर्वचनादि । 'तुजादीनां दीर्घोऽभ्यासस्य (६, १, ७)'। 'न वश (६, १, २०)'—इति यङि लिटि सम्प्रसारणनिषेधाद् किन् प्रत्यये कानज्यपि न भवति, वाश्यतेरुपधाह्रस्वत्वं व्यत्ययेनैव । यङ्लुकि शानचि रूपमिति श्रीनिवास । "सुतस्सुर्णपोर्वावशान (ऋ० स० ७, ५, २२, ५)" ॥

(५) वार्यम् । 'वृञ् वरणे (स्वा० उ०)'। 'एतिस्तुशास्वृदृजुष क्यप् (३, १, १०९)'—इति क्यपि प्राप्ते 'कृत्यल्युटो बहुलम् (३, ३, ११३)'—इति ण्यत् । 'क्यब्विधौ वृ ग्रहणे वृङो ग्रहणमिष्यते न वृञ'—इति वैयाकरणा । अथवाऽऽवश्यकार्थे ण्यत्प्रत्ययो द्रष्टव्य । वार्यं वरणीयम्, अतिशयेन वरं श्रेष्ठं वा । तद् वार्यं वृणीमहे (ऋ० स० ६, २, २२, ३)" ॥

(६) अन्ध । व्याख्यातमन्ननामसु (१७० पृ०)। "यामंत्रेभिमिस्वता मद्यमन्ध (ऋ० स० २, ६, १३, १)" ॥ तमोऽप्युच्य न्ध । अत्र ध्यायतिर्नञ्पूर्वः अविद्यमानं ध्यानं दर्शनमस्मिन् आलोकाभावात् । अचुर्होने अकारान्तमिदम् । "पश्यदक्ष-

स्वांव सिचे तट्रुयः (ऋ० सं० २, ३, १७, १)"—इति चतुर्दशस्य॥

(७) असश्चन्ती। सश्चतिर्गतिकर्मा, अत्र सश्चतिरव्यतिषेधार्थे वर्तते। शतरि ङीपा नञ्समासः। परस्परेण सांगत्यभावाच्च असश्चन्त्यौ। अव्यतिषक्ते वाऽन्यस्ते वा द्यावापृथिव्या उच्येते। "असश्चन्ती भूरिधारे पयस्वती (ऋ० सं० ५, १, १४, २)"॥

(८) वनुष्यति। व्याख्यातं क्रुध्यतिनामसु (१८४ पृ०)। अत्र तु हन्त्यर्थः। "वनुयाम वनुष्यतः (ऋ० सं० १, १, ११, १)"॥

(९) तरुष्यति। नैरुक्तधातुर्गत्यर्थः। 'मृत्युं तरति' 'ब्रह्महत्यां तरन्ति'। विनाशयन्ति अपोहन्तीति हन्त्यर्थे तरतेः प्रयोगदर्शनात् तरतिरुकारयकारावुपजनावित्याहुः। "इन्द्रेण युजा तरुषेम वृत्रम् (ऋ० सं० ५, ४, १५, २)"॥

(१०) भन्दनाः। भन्दतेः स्तुतिकर्मणः 'युच् बहुलम् (उ० २, ७४)'—इति युच् टाप् अम्। भन्दना स्तुतिरित्यर्थः। "सभन्दना उदियर्ति प्रजावतीः (ऋ० सं० ७, ३, २०, १)"॥

(११) आहनः। आहन्तेरसुनि आहन्ति आहनाः सम्भुवो आहनः अनवद्यवचनादाहनस्तु। "पृश्न्येन मदाहनो याहि तूयम् (ऋ० सं० ७, ६, ७, २)"॥

(१२) नदः। व्याख्यातं स्तोतृनामसु (२८२ पृ०)। "नदस्य मा रुधतः काम आगन् (ऋ० सं० २, ४, २२, ४)"॥

(१३) सीमो अक्षाः। अश्नोतेर्लुङि सिचि 'अदितो वा (७, २, ५६)'—इति अनिट् पक्षे आडागमे च आष्टेति, इट्पक्षे आशिष्टेति प्राप्ते व्यत्ययेन तस्य स्थाने सिपि तस्य आदेशे आकार एतद्विसर्जनीयौ। क्षियतेर्वा अक्षेषमिति प्राप्ते व्यत्ययेन वर्तमाने लुट्, तिपः स्थाने सिप्, चु रक्, धातोरिट्लोपः, दीर्घश्च, एतच विसर्जनीयौ। क्षियतोऽर्थः। "प्रनुदे

गोमान् गोभिरक्षाः (ऋ० सं० ७, ५; १३, ४)"॥ 'क्षर सञ्चलने (भू० प०)' अक्षारीदिति प्राप्ते तिपि सिपि हयो बहुलं छन्दसीतीडभावे इतश्च लोपे संयोगान्तस्य लोपे रात्सस्येति सलोपे रेफस्य विसर्जनीयः आडागम चक्षतीत्यर्थः। "सोमो-दश्वाभिरक्षा. (ऋ० सं० ७, ५, १३, ४)"। 'सर्वे क्षियतिनिगमाः'—इति शाकपूणिर्निर्वाह चक्रः॥

(१४) श्वात्रम्। श्वाश्रातं धननामसु (१८६ पृ०)। इह क्षिप्रनाम। "श्वात्रमग्निरक्लणोज्जातवेदाः (ऋ० सं० ८, ४, १०, ४)"॥

(१५) ऊति। अवतेः 'ऊतियूतिजूतिसातिहेतिति (३, ३, ९७)'—क्तिन्नुदात्तो निपात्यते। ज्वरत्वरेत्यूठ्। अवायम रक्षणं तर्पणं वा। "आ त्वा रथं यथोतये (ऋ० सं० ६, ५, १, १)"॥

(१६) हासमाने। हासतिः स्पर्द्धायां हर्षणे वा वर्त्तते। स्पर्द्धमानौ परस्परं हृष्यन्तौ वा। "अश्वे इव विषिते हासमाने (ऋ० सं० ३, २, १२, १)"।

(१७) पड्भि.। पिबते. आशयतेर्वा अन्यगार्थात् स्पृशतेर्वा 'सर्त्तेरटि (उ० १, १३३)'—इति बाहुलकादटिप्रत्ययो धातूनां पकारभावश्च। पाने. सोमस्य। यद्वा, आशनैर्व्याप्तनैः स्पर्शनैः स्तुतिलक्षणैर्गुणानाम्। "वसुकः पड्भिरुपसर्पदिन्द्रम् (ऋ० सं० ८, ५, १५, ६)"।

(१८) ससम्। 'षस स्वप्ने (अदा० प०)'। पचाद्यच् (३, १, १३४)। स्वपीतीति ससम्, माध्यमिक ज्योतिरुच्यते, वर्षाव्यतिरिक्तकालेऽदर्शनात् स्वापव्यपदेश। "ससं न पक्कमविदच्छुचन्तम् (ऋ० सं० ८, ३, १४, ३)"॥

(१९) द्विता। द्विशब्दात् 'सङ्ख्याया विधार्थे धा (५, ३,

४२)। धकारस्य तकारेण व्युत्पत्तिः। हितेत्यर्थः। "हिता च सती स्वधया च शम्भु (ऋ० सं० ३, १, १७, ५)"॥

(२०) व्राः। 'वृञ् वरणे (स्वा० उ०)'। 'गेहे कः (३, १, १४४)'—इति बाहुलकात् कः, यणादेशः, जस्। वरितारो-ऽन्वेष्टारो मृगादीनाम्। व्राधशानोया लुब्धकादयः। "मृगं न व्रा मृगयन्ते (ऋ० सं० ५, ७, १८, १)"॥

(२१) वराहः। व्याख्यातो मेघनामसु (५३ पृ०)। निगमोऽपि तत्रैव दर्शित.॥

(२२) स्वसराणि। अहर्नामसु व्याख्यातोऽयं शब्दः (४६ पृ०) निगमोऽपि तत्रैव दर्शित.॥

(२३) शर्याः। अङ्गुलीनामसु व्याख्यातः (१६१ पृ०)। अत्र इषव उच्यन्ते। "शर्याभिर्न भरमाणो गभस्त्योः (ऋ० सं० ७, ५, २२, ५)"॥

(२४) अर्कः। अर्चतेः 'कृदाधाराचिंकलिभ्यः कः' (उ० ३, ३८)'—इति कः। अर्चति जीवयतीत्यत्र मन्त्रम् इति मन्ये। स्वयमुदाहरणम्। अतएव केचित्र पठन्त्यत्र अर्कम्। वृक्षो-ऽप्यर्कंति। "अर्कपर्णं जुहोति"॥

(२५) पवि। व्याख्यातो वाङ्नामसु (६६ पृ०)। रथनेमि-र्वज्रश्च पविः। "उत पव्या रथानाम् (ऋ० सं० ४, ३, ८, ४)"। वज्रस्य दर्शितः॥

(२६) वक्ष। वहते. 'वहः. सुट् च'—इत्यसुन्। भध्य काय उपरि कायस्य प्राप्त प्रापित वेत्यर्थ.। उर इत्युच्यते। "उपो' अदर्शि शुम्भुत्रो न वक्ष. (ऋ० सं० २, १, ७, ४)"॥

(२७) धन्व। व्याख्यातमन्तरिक्षनामसु (२१ पृ०)। स एव निगमः॥

(२८) सिनम्। व्याख्यातमन्ननामसु (१७१ पृ०)। स एव निगमः॥

(२९) इत्था। इदंशब्दात् 'था हेतौ च छन्दसि (५, ३, २६)'—इति हेतौ प्रकारवचने, थाल्प्रत्ययः। एतेर्वा थाल्-'प्रत्नपूर्वविश्वेमात्थाल् छन्दसि (५, ३, १११)'—इति इवार्थे थाल् विहितो व्यत्ययेन प्रकृतिभूतादिदंशब्दादपि भवति। अनेन हेतुना, अनेन प्रकारेण, अयमेवेति वार्थः। "इत्था धियं यज्ञसाधम्" (ऋ० सं० ३, २, ५)... अमुथा (निरु० ५, ५)'—इत्यर्थकथनं कथमिति निरूपणीयम्, इत्थाविति स्कान्दस्वामिप्रत्यय निरूपणीयः॥

(३०) सचा। सहार्थोऽयं निपातः। "आदित्यैर्युद्रैर्वसुभिः सचा भुवः (ऋ० सं० ६, ३, १४, १)"॥

(३१) चित्। निपातो नाम च। निपातोऽनुदात्तः। 'चिदित्येषोऽनेककर्मा'—इत्यादिना व्याख्यातः (निरु० १, ४)। "चतुरश्चिद्ददमानात् (ऋ० सं० १, ३, २१ ४)"—इत्युपमायाम्। अवकुत्सनादिष्वपि निगमा अन्वेष्याः। नाम तु चिनोतेश्चयतेर्वा क्विपि चिदिति भवति। चितो भागः चीरादिभिः चिद्रूपा वा सोमक्रयण्युच्यते। "चिदसि मनासि धीरसि (य० वा० सं० ४, १९)"॥

(३२) आ। 'आ इत्यर्वागर्थे'—इत्युपसर्गो व्याख्यातः (निरु० १, ३)। "परा याहि मघवन्ना च याहि (ऋ० सं० २, ३, १८, ५)"—इत्युपसर्गस्य। "जार आ भगम् (ऋ० सं० ७, ६, १०, १)"—इत्युपमायाः। "आमेन्यस्य रजसो यदभ्र आँ अपः (ऋ० सं० ४, ३, २, १)"—इत्यप्यर्थस्य॥

(३३) द्युम्नम्। व्याख्यातं धननामसु (१८८पृ०)। अत्र

यथोऽयं वाभिधीयते। "अयो वृषभम्रियेन्द्र च धेहि (ऋ० सं० ५, ३, ८, ३)" ॥

(३३) पवित्रम्। पुनाति 'पुवः सञ्ज्ञायाम् (३, २, १८५)' —'कर्त्तरि चर्षिदेवतयोः (३, २, १८६)'—इतीत्रप्रत्ययः। मन्त्ररश्मयापोऽग्निवायुसोमसूर्येन्द्राश्चाभिधेयाः। मन्त्रादिषु करणसाधनः अन्यादिषु कर्मसाधनः। "येन देवाः पवित्रेण (सा० सं० २, ५, २, ८, ४)"—इति मन्त्रस्य। "गर्भस्त्रिपूती रश्मिभिरद्भिरि सुत (ऋ० सं० ७, ३, १८, ४)"—"पवित्रवन्तः परि वाचमासते (ऋ० सं० ७, २, २८, ३)"—इति च रश्मीनाम्। "शतपवित्राः स्वधया मदन्तीः (ऋ० सं० ५, ४, १४, ३)"—इत्यपाम्। "अग्निः पवित्रं स मा पुनातु वायुः सोमः सूर्य इन्द्रः पवित्रन्ते मा पुनन्तु (निरु० ५, ६)—इत्यग्न्यादीनाम् ॥

(३४) तोदः। तुद्यते पुत्रपौत्रादिभिः स्वसमीप्सितसाधनाय। तुदेर्घञ्। यद्वा, 'देवसेवमेवादयः पचादौ द्रष्टव्याः' —इति पचाद्यच्। तुदति प्रेरयति कार्येषु कर्मकारानिति तोदो गृहस्थः। "तोदस्येव शरण आ महस्य (ऋ० सं० २, २, १८, १)" ॥

(३५) स्वञ्चाः। सुपूर्वादञ्चतेरसुन्। सुगमन इत्यर्थः। "आ जुह्वानो घृतपृष्ठः स्वञ्चाः (ऋ० सं० ८, २, ८, १)" ॥

(३०) शिपिविष्टः। (३८) विष्णुः। एते विष्णोरादित्यस्य नामनी। शिपिविष्टशब्दोऽत्र सामर्थ्यादन्तर्णीतोपमानार्थः। 'यादृशः शेपो निर्वेष्टितः तादृश इति, शेप इव वेष्टनतया वर्जित.'—इति श्रीमाजनिवासः। . उदितमात्रत्वादप्रतिपन्नरश्मिः। अपिवा, 'उपमानयोगात् कुत्सितार्थीयमिदम्'—

इत्योपसन्ध्वः। पृषोदरादित्वाद्रूपसिद्धिः अर्थसिद्धिश्च। 'प्रशं-सानाम'—इत्याचार्य्यः। शिपिभिः रश्मिभिः आविष्ट शिपिविष्टः सुपान्तरश्मिः॥ विष्णुशब्दो व्याख्यातो यज्ञनामसु (२८५ पृ०) अर्थोऽनुगुणः। "किमित्ते विष्णो परि चक्ष्यं भूत् प्रयद् ववक्षे शिपिविष्टो अस्मि (ऋ० सं० ५, ६, २५, ६)"—इत्युभ-योर्निगमः॥

(३८) आघृणिः। घृणिशब्दो ज्वलनामसु (१३४ पृ०), क्रोधनामसु (१८५ पृ०) च व्याख्यातः। आगतदीप्तिरागत-क्रोधो वा। "आघृणे संसचावहै (ऋ० सं० ४, ८, २१, १)" —इति दीप्तिनामत्वे निगमः। क्रोधवचने त्वेष्य उदाहरणं कर्त्तव्यम्॥

(४०) पृथुजयाः। 'जि अभिभवे (भू० प०)'। असुनि बाहुलकात् जकारस्य रेफः। जयो वेगः। पृथुः जयो यस्य सः। वेगेनान्यानभिभविता महाजव इत्यर्थः। "पृथुजया अमि-नादायुर्दस्योः (ऋ० सं० २, २, १३, २)॥

(४१) अयर्युम्। अततेः। 'जनिमनियजिदमिभ्यः'— इति बाहुलकात् युसप्रत्ययो धातोरयदादेशश्च सकार इत्सञ्-ज्ञकः। अतनं गमनमयर्युशब्दे नोच्यते मत्वर्थीयस्य लुक् गम-नवन्तमित्यर्थः। "दूरे ह्यर्थं गृहपतिमयर्युम् (ऋ० सं० ५, १, २३, १)"॥

(४२) काणुका। कान्तक्रान्तकृतशब्दानां काणुभावः। तत्र स्वार्थे कः। अपि 'शेश्छन्दसि बहुलम् (६, १, ७०)'— इति शेर्लुक्। कान्तानि प्रियाणि, क्रान्तानि आहवनीय प्रति गतानि, ऋत्विक् प्रति कृतानि, ऋत्विग्भिः संस्कृतानि सरांसि विशिष्यन्ते। यद्वा, काणुकेति इन्द्रविशेषणम्। सोमस्य कान्तः वल्लभः। यद्वा, कर्णशब्दः 'कणेमनसी श्रद्धा-

इत्यौपमन्यवः। पृषोदरादित्वाद्रूपसिद्धिः अर्थसिद्धिश्च। 'प्रशं-सानाम'—इत्याचार्यः। शिपिभिः रश्मिभिः आविष्टः शिपिविष्टः उपात्तरश्मिः॥ विष्णुशब्दो व्याख्यातो यज्ञनामसु (२८५ पृ०) अर्थोऽनुगुणः। "किमित्ते विष्णो परि चक्ष्यं भत् प्रयद् ववक्षे शिपिविष्टो अस्मि (ऋ० सं० ५, ६, २५, ६)"—इत्युभयोर्निगमः॥

(३८) आघृणिः। घृणिशब्दो ज्वलनामसु (१३४ पृ०), क्रोधनामसु (१८५ पृ०) च व्याख्यातः। आगतदीप्तिरागतक्रोधो वा। "आघृणे संसचावहै (ऋ० सं० ४, ८, २१, १)"—इति दीप्तिनामत्वे निगमः। क्रोधवचने त्वेष्य उदाहरणं कर्त्तव्यम्॥

(४०) पृथुज्रयाः। 'ज्रि अभिभवे (भू० प०)'। असुनि बाहुलकात् ककारस्य रेफः। ज्रयो वेगः। पृथुः ज्रयो यस्य सः। वेगेनाभ्यानभिभविता महाजव इत्यर्थः। "पृथुज्रया अमिनादायुर्दस्योः (ऋ० सं० ३, ३, १३, २)॥

परिगधिता" (ऋ० सं० २, १, ११, ६)"। आगृहीता, अवयवैर्गाढं परिष्वक्ता सतीत्यर्थः। परिगधिता, सर्वतोऽन्तर्वेष्टिव मिश्रितः आलिङ्गनचुम्बनपुरःसरं प्राप्तप्रजनना सती सानुरागं सम्भोगाय परिगृहीता च सतीत्यर्थः॥

(५३) कीरयाणः। कीरशब्दः ह्रस्वशब्दपर्यायः। शत्रुन् प्रति ह्रस्वमेव यानमायानं नित्यं ह्रस्वमनः। यद्वा, हन्यन्ते वध इत्यादिसङ्ग्रामं ह्रस्वं कल्पितं प्रयाणाभिमुखं यानं वाहनं यस्य स कीरयाणः। "पार्थ स्वामा कीरयाणः (ऋ० सं० ५, ७, २८, १)"॥

(५४) तौरयाणः। तूर्णशब्दस्य तौरभावः। तूर्णयाणः क्षिप्रगमन इत्यर्थः। "स तौरयाण उपयाहि यज्ञम् (ऋ० सं० ३, ३, १६, २ वा०)"।

(५५) अक्रयाणः। क्रीतशब्दस्य क्रभावः। अक्रीयमाणः अलज्जितमानः यो ह्यर्थिभ्यो दातुं न शक्नोति, स क्रीतो गच्छति, तदस्य नास्ति, अतः श्लाघ्यगमन इत्यर्थः। "अनुष्टुपा सोमुह्यक्रयाणः (ऋ० सं० ३, ४, २५, ४)"।

(५६) हरयाणः। हरतेः पचाद्यचि हरः। शत्रूणां जीवितैश्वर्यादिहन्तृ यानं यस्य सः। शत्रुजीवितादीनां हर्त्तेत्यर्थः। "रजतं हरयाणे (ऋ० सं० ६, २, २५, २)"॥

(५७) आरितः। 'ऋ गतौ'। 'सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतीनाम् (३, १, २२ वा०)'—इति विहितस्य यङः 'यङोऽचि च (२, ४, ७४)'—इत्यत्र बहुलानुवृत्तेरनैमित्तिके लुकि प्रत्ययलक्षणेऽत्र 'सन्यङोः (६, १, ९)'—इति ऋ इत्यस्य द्विर्वचने उरदत्वाभ्यामस्य अकारस्यात्वे 'रुग्रिकौ च लुकि (७, ४, ९१)' इति लुकि निष्ठाया छान्दसत्वादिट्, ऋकारस्य यणादेशः 'रोरि (८, ३, १४)' इत्यभ्यासरेफलोपे ढ्रलोपे पूर्वस्य

(६, ३, १११) दीर्घत्वे च आरित इति। क्तान्तस्य लुगभावश्छान्दसत्वात्। स्तोमान् प्रति गतो यज्ञं प्रति गत इत्यर्थः। "य आरितः कर्मणि कर्मणि स्थिरः (ऋ० सं० १,७,१२,४)"॥

(५८) व्रन्दी। व्रन्दतिर्नैरुक्तधातुः। 'गमेरिनिः (उ० ४, ६)'—इति बाहुलकादिनिः। "शुष्णस्य चिद् व्रन्दिनो रोरुवद् वना (ऋ० सं० १, ४, १७, ५)"॥

(५९) निष्षपी। 'षप समवाये (भू० प०)'—इत्यस्मात् स्त्रीप्रत्यये वर्त्तमानात् असुनि सकारषकारविपर्ययः। स्पर्शस्य तद्वारकः सुखातिशयोऽभिप्रेतः। सपति स्पृशति सुखयतीति सपः, निःपूर्वः, निष्षपा इति प्राप्ते निष्षपी। "मा नो मघेव निष्षपी परा दाः (ऋ० सं० १, ७, १८, ५)"। यदा विनिर्गतपसा इति पठन्ति, तदा सर्वैरपि विपर्यस्तानयात् 'पुंसि संज्ञायां घः (३, ३, ११८)'। अर्थः स एव। अन्यत् सर्वं पूर्ववत्। यथापि विनिर्गतपसा इति पाठस्य प्राचुर्यात् तमाश्रित्य स्कन्दस्वामिना व्याख्यातम्॥

(६०) तूर्णाशम्। 'तूर्णाशमुदकं भवति। तूर्णमश्नुते (निरु० ५, १६)'—इति भाष्यम्। तूर्णाशमित्यनवगतं शब्दतयार्थतश्च उदकमभिधेयम्। तूर्णमश्नुते अत्यर्थं व्याप्नोति एवं निर्वचनात् तूर्णशब्दस्य क्रियाविशेषणत्वेनाकर्मत्वात् कर्मोपपदाभावात् क्तो न स्यादिति चेत्,—अश्नुत इत्यश तूर्णश्च तदशश्च तूर्णाशम्। "तूर्णाशं न गिरेरधि (ऋ० सं० ६, २, १, ४)"॥

(६१) क्षुम्पम्। 'क्षुभ सञ्चलने (दि० प०)'। 'शकि लिङ् च (३, ३, १७२)'—इति शक्यार्थे यत्। क्षौभ्यमिति प्राप्ते औकारस्य ह्रस्वत्वं, भकारस्य पकारो यकारलोपो मकारोपजनः। अयत्नेनैव क्षोभयितुं शक्यम्। अहिच्छत्रकस्तु-

चते। "पुरा चुम्बमिव स्फुरत् (ऋ॰ सं॰ १, ६, ६, ३)॥

(६२) निचुम्पुणः। 'वीशाद्भ्रूख्वणम्शचूश्त्राश्वश्च-ण्यादयः'—इति निचान्तनियमनीचैःशब्दोपपदेभ्यः प्रीणाति-पृणातिपृणातिभ्यो यक्प्रत्ययो धातूनां पुभावः उपपदानां निचुभावश्च निपात्यते। नीचैरुपपदात् दधातेर्वा पूर्ववन्निपा-तनम्। 'चमु अदने (दि॰ भा॰)'। निचान्तो भक्षितः सोमो-ऽनेनेति निचुम्पुणः सोमः। "पुनः जामिनिचुम्पुणः (ऋ॰ सं॰ ६, ६, २५, २)"। नियमेन चम्यते इति नियमनमुदकं, तेन पूर्यते इति समुद्रः। निगमः पर्यायः। नीचैरस्मिन् क्वणन्ति नीचैःशब्देनात्र कर्म कुर्वन्ति इत्यवभृथो निचुम्पुणः। "अव-भृथनिचुम्पुण (य॰ वा॰ सं॰ ८, २७)"॥

(६३) पदिम्। 'पत्लृ गतौ (भ्वा॰ प॰)'। 'इन् सर्वधा-तुभ्यः (उ॰ ४, ११८)' पदिः पक्षी। आकाशे ह्यसौ नित्यं पतते गच्छति। "मुचीजयेषु पदिमुत्सितानि (ऋ॰ सं॰ २, १, १०, २)"॥

(६४) पादुः। पद्यतेः 'छन्दसीणः (उ॰ १, २)'—इति बाहुलकादुण् वृद्धिः। पदनं पादुः। "स प्रादुरस्य निर्णिजो न मुच्यते (ऋ॰ सं॰ ७, ७, १८, ४)"॥

(६५) वृकः। व्युपसर्गार्थविशिष्टाद् वृणोतेः 'सृवृभूशुषि-मुषिभ्यः कित् (उ॰ ३, ३८)'—इति कप्रत्ययः। वृकश्चन्द्रमा। विवृतं स्पष्टज्योतिष्कत्वात् विवृत इत्युच्यते, न हि नक्षत्राणा-मिवाव्यक्तमस्य ज्योतिः। विकृतविक्रान्तशब्दयोर्वैकभावः। विकृतत्वं ज्योतिषः शीतत्वात् क्रमहानिभ्यां वा। विक्रान्तत्वं ज्योतिषो दिगन्तरगमनात्। "अरुणो मा सकृद्वृकः (ऋ॰ सं॰ १, ७, २३, ३)"। यद्वा, 'वृजी वर्जने' पदादिः। धर्म-कार्यत्वादात्मनीत्यर्थः। पूर्वसूत्रेण बाहुलकात् को नकारश्चा-

रलोपश्च। आदित्य उच्यते। आङ्‌गे आप्नोति जगत् प्रकाशेन, आप्नोति चोदकानि रश्मिभिः सम्भजत इत्यर्थः। यद्वा, हृष्यतेर्बधकर्मणः पूर्ववद्रूपम्। विनाशयति तमांसि। "आसी यक्ष्मोमसुंखत् वृकस्य (ऋ० सं० १, ८, १६, १")। यिविधं क्रन्तति उरणादीनि विकर्त्ता सन् वृकश्च। विपूर्वात् क्रन्ततेः पूर्ववद्रूपसिद्धिरन्वेया। "वृकश्चिदस्य वारण उरामथिः (ऋ० सं० ६, ४, ४८, २)"। अपि वा शृगाली शिवेति प्रसिद्धा, सा वृक्युच्यते। "शतं मेषान् वृक्यै चचदानम् (ऋ० सं० १, ८, ११, १)"॥

(६६) जोषवाकम्। 'जुषी प्रीतिसेवनयोः (तु० आ०)'। कर्मणि घञ्, वचेर्भावे। जोषयितव्यं वचनम्। विसष्टार्थं सेवितव्यं वचनम्। अविस्पष्टं वचनमित्यर्थः। "जोषवाकं वदतः पञ्जहोषिणा (ऋ० सं० ४, ८, २५, ६)"॥

(६७) कृत्तिः। क्रन्ततेः रूपम्। यशोऽन्नं वा। यशो हि विपतः क्रन्तति दुर्भक्तं चान्नं सापादि भोक्तारम्।"मुष्टी च कृत्तिः मरुणा तं इन्द्र (ऋ० सं० ६, ६, १३, ६)"। शरीरात् क्रन्तति चर्ममय्यपि कृत्तिः। सुवमय्यपि कृत्तिः चरद्‌वस्त्र-खण्डग्रथितत्वात् कर्त्तनसामान्यात्। कृत्तिरिव कृत्तिः चन्द्रो-च्यते। कृत्तिं वसान आचर (य० वा० सं० १६, ५१)"॥

(६८) श्वघ्नी। श्वशब्दे कर्मण्युपपदे भूतेऽर्थे 'कर्मणि हनः (३, २, ८६)'—इति णिनिप्रत्ययः। स्वं धनं हतवान् स्वघाती सन् स्वघ्नी कितवः। स्वशब्दः स्वधेत्यत्र (१०७ पृ०) व्याख्यातः। "कृतं न श्वघ्नी विचिनोति देवने (ऋ० सं० ७, ८, २४, ५)"॥

(६९) समस्य। समशब्दः सर्वपर्यायः सर्वनामसु पठ्यते 'त्वत्त्वसमसिमनेमेत्यनुच्चानि (फि० ४)'—इति सर्वानुदात्त। "मा नः समस्य दूढ्यः" (ऋ० सं० ६, ५, २५, ४)"। "उरु-

स्थाणौ अघायतः समस्मात् (य० वा० सं० ३, २६)"। "उत संसमिन्त्राधिषीहि नो वसो (ऋ० सं० ६, २, २, ३,"। "नभन्तामन्यके समे (ऋ० सं० ६, ३, २२, १)"।

(७०) कुटस्य। (७१) चर्षणिः। ऋतशब्दस्य कुटभावः। कुञ्जयति कुटे कप्रत्यय इत्यन्ये। चर्षणिशब्दो व्याख्यातः पञ्चसित्तमसु (२६८ पृ०)। "विना कुटस्य चर्षणिः (ऋ० सं०, १, ३, ३३, ४"।

(७२) शम्ब। व्याख्यातः शम्बर इति मेघनामसु (५४ पृ०। "वृषो य शम्बं पुरुहूत तेन (ऋ० सं० ७, ८, २३, ३)"।

(७३) केपयः। कुशब्दोपपदात् पुनातेः 'पानिपुणकृतिभ्यः क्यप्'—इति बाहुलकात् क्यप्, कौ कादेशः। कपूय दुपूय दुःशोध्य दुष्कामित्यर्थः। कपूयेन शब्दोऽपि कपूयाः, अकारो मत्वर्थीयः। कुत्सितकर्माणः अनुत्थापितपापकर्माणो वोच्यन्ते। कपूया यस्य केपयः। "इर्मैव ते न्यविशन्त केपयः (ऋ० सं० ७, ८, २७, १)"।

(७४) तूतुमाकृषे। 'तूतुमित्यस्य शीघ्रगत्यर्थस्य तूर्णमित्य यगम'—इति स्कन्दस्वामी। निर्वाहो निरुपसर्गीयः। करोतेस्तुटि याम से (१, ४, ८०)' उपव्ययस्य बहुलं छन्दसि (२, ४ ७३)'—इति लुक् कुरुष इत्यर्थः। "एता विश्वा सवना तूतुमा कृषे (ऋ० सं० ८, २, ८, ६)"।

(७५) अंसत्रम्। आङ्पूर्वाद्धन्तेरसुनि टिलोप आकारस्य ह्रस्वत्वं च। आहन्तीत्यंह पापम्। पापेभ्यो वा तत्प्रभूतप्रहारादिभ्यो रक्षति। अंहसस्त्रायते। 'आतोऽनुपसर्गे कः (३, २, ३)'—इत्यंहसस्त्रम् अंसत्रम्। धनुर्वा कवचं वा। "अंसत्रकोशं सिञ्चता नृपाणम् (ऋ० सं० ८, ५, १८, २)"।

(७६) काकुदम्। कौति शब्दकर्मणो यङि, पचाद्यचि,

'यङोऽचि च (२, ४, ७४)'—इति यङ्लुकि, द्विर्वचनादौ, 'न धातुलोप आर्द्धधातुके (१, १, ४)'—इति गुणनिषेधः। कोकूयते पुनः पुनः शब्दं करोतीति काकुर्जिह्वा। कोकुवाधानं सद् वर्णसृष्ट्यादिना काकुदं तालु। कोकूयमाना नुदतीति वा। ·कोकूयतेर्नुदेश्च काकुदम्। अनुचरन्ति काकुदम् (ऋ० सं० ६, ५, ७, २)" ॥

(७७) बीरिटे। भियो वा नक्षत्रादीनां वाभामस्तमितस्तनं यस्मिन्। तत् भीततनं भास्ततनं वा सत् बीरिटमन्तरिक्षम्, मनुष्यगणो वा अनालम्बेऽन्तरिक्षे हि भीतिः कस्य न जायते, इन्द्रवैरिन्द्रो यतो हि तस्मात्तत्रापि तद् भयं। "आ विद्युन्मद्भिर्मरुतः स्वर्कैः रथेभिर्यात ऋष्टिमद्भिरश्वपर्णैः। आ वर्षिष्ठया न इषा वयो न पप्तता सुमायाः॥"<br>"आ विध्यती'व बीरिटं इयाति (ऋ० सं० ५, ४, ६, २)" ॥

(७८) अच्छ। निपातः। अभेरर्थे। आभिमुख्यार्थे वर्त्तते। आप्तुमित्यस्यार्थे इति शाकपूणिः ॥

(७९) परि। (८०) ईम्। (८१) सीम्। इति व्याख्यातानि प्राथमिके निपातप्रकरणे (१, ३ ख०) अनेकार्थत्वादिहोपन्यासः। एषामुदाहरणानि प्रसिद्धानि।

(८२) एनम्। (८३) एनाम्। एतत्पदद्वयमस्या अस्येत्यनेन पदद्वयेन 'उदात्तम् प्रथमादेशे, अनुदात्तमन्वादेशे'—इत्येवं व्याख्यातम् (निरु० ४, २५)। अनेकार्थत्वादुपन्यासः। "वित एनमायुनग्"—इत्येवमादीन्युदाहरणानि।

(८४) सृणिः। 'सृ गतौ (भू० प०)'। 'घृघृवृत्तिप्रच्छिशम्यरित्वरिभ्यः कित्'—इति णिप्रत्ययः। नवितव्यं प्रति सरणात् सृणिशब्देनात्र दात्रमभिमतम् ॥ "नदीषु इतसृण्यः पृक्षमेयात् (य० वा० सं० १२, ६८)" ॥

इति चतुरशीतिः पदानि ॥ २ ॥

आशुशुक्षणिः(१)। आशाभ्यः(२)। काशिः(३)। कुणारुम्(४)। अलातृणः(५)। सललूकम्(६)। कत्पयम्(७)। विस्रुहः(८)। वीरुधः(९)। नक्षद्दाभम्(१०)। अस्कृधोयुः(११)। निशृम्भाः(१२)। बृबदुक्थम् (१३)। ऋदूदरः (१४)। ऋदूपे(१५)। पुलुकामः(१६)। असिन्वती(१७)। कपना (१८)। भाऋजीकः (१९)। रुजानाः (२०)। जूर्णिः(२१)। ओमना(२२)। उपलप्रक्षिणी(२३)। उपसि(२४)। प्रकलवित्(२५)। अभ्यर्धयज्वा(२६)। ईक्षे(२७)। क्षोणस्य(२८)। अस्मे (२९)। पाथः (३०)। सवीमनि (३१)। सप्रथाः(३२)। विदथानि(३३)। श्रायन्तः(३४)। आघीः(३५)। अशीर्गः(३६)। अमूरः (३७)। शशमानः (३८)। देवो देवाच्या कृपा (३९)। विजामातुः (४०)। ओमासः (४१)। सोमानम् (४२)। अनवायम् (४३)। किमीदिने (४४)। अमवान्(४५)। अमीवा(४६)। दुरितम्(४७)। अप्वे (४८)। अमतिः (४९)। श्रुष्टी (५०)। पुरन्धिः(५१)। रुशत् (५२)। विशार्दसः(५३)। सुदत्रः(५४)। सुविदत्रः(५५)। आनुषक् (५६)।

तुविग्रिः (५७)। गिर्वणाः (५८)। असूक्त सूक्त (५९)। अर्यक् (६०)। यादस्मिन् (६१)। जाद्यर्थ (६२)। अग्रिया (६३)। चनः (६४)। पृच्छता (६५)। शुन्यः (६६)। अस्मिनः (६७)। जञ्जतीः (६८)। अमतिष्क्तः (६९)। शार्यदानः (७०)। सृप्रः (७१)। सुशिप्रः (७२)। रंसु (७३)। द्विबर्हाः (७४)। सुभ्रः (७५) सुदाणः (७६)। स्तियानाम् (७७)। स्तिपाः (७८)। जबारु (७९)। जरूथम् (८०)। कुलिशः (८१)। तुञ्जः (८२)। बर्हणा (८३)। ततनुष्टिम् (८४)। इलीबिशः (८५)। किय धाः (८६)। भृमिः (८७)। विष्पितः (८८)। तुरीपम् (८९)। रास्पिनः (९०)। ऋचीषमः (९१)। ऋजुनीती (९२)। प्रतद्वसू (९३)। हिनोत (९४)। चोष्कूयमाणः (९५)। चोष्कूयते (९६)। सुमत् (९७)। दिविष्टिषु (९८)। दूतः (९९)। जिन्वति (१००)। अमत्रः (१०१)। ऋचीषमः (१०२)। अनर्शरातिम् (१०३)। अनर्वा (१०४)। असामि (१०५)। गल्दया (१०६)। जल्हवः (१०७)। बकुरः (१०८)। बेकनाटान् (१०९)। अभिधेतन

(११०)। अंहुरः (१११)। बतः (११२)। वाताप्यम् (११३)। आकन् (११४)। ऋधयन्ति (११५)। असंक्राम् (११६)। आशुवः (११७)। अनवब्रवः (११८)। सदान्वे (११९)। शिरिम्बिठः (१२०)। पराशरः (१२१)। क्रिविर्दती (१२२)। करूलती (१२३)। दनः (१२४)। शरारुः (१२५)। इदंयुः (१२६)। कीकटेषु (१२७)। बुन्दः (१२८)। बुन्दम् (१२९)। किः (१३०)। उल्बम् (१३१)। ऋबीसम् (१३२)। ऋबीसमिति द्वाविंशच्छतं पदानि ॥ ३ ॥

जहानिधाशुशुक्षणिस्त्रीणि ॥

इति निघण्टौ चतुर्थोऽध्यायः समाप्तः ॥ ४ ॥

(१) आशुशुक्षणि.। शुचेर्ज्वलतिकर्मणः क्विपि शुक् दीप्ति, क्षणिर्हिंसार्थः, 'इन् सर्वधातुभ्य. (उ० ४, ११४)'—इतीन्, सनोतेर्वा इन्। आशु शुचा दीप्त्या क्षणिता हिंसिता तमसा सनिता सम्भक्ता वा पाके दाहप्रकाशनादौ स्वव्यापारस्य। अग्निरुच्यते। यद्वा, आङ्पूर्वाच्छुचेरन्तर्णीतण्यर्थात् सनि आशुशुच इति स्थिते 'आङि शुषे सनः'—इति विहितः अनिप्रत्ययो बाहुलकाच्छुचेरपि भवति। 'आङि शुचे.—इत्येव वा तत्र पाठः। आशु शोचयिषा आदीपयितुमिच्छा, तस्या कर्ता आशुशुक्षणिः आदीपयिषुरित्यर्थः। "त्वमग्ने द्युभिस्त्वमाशुशुक्षणिः (ऋ० सं० २, ५, १०, १)"।

(२) आशाभ्यः। व्याख्यातं दिङ्नामसु (३२ पृ०)। स एव निगमः (ऋ० सं० २, ८, ९, २)॥

(३) काशिः। काशतेः 'इन् सर्वधातुभ्यः (उ० ४, ११४)'—इतीन्प्रत्ययः। प्रकाशते इति काशिर्मुष्टिः। "यत्सं॑गृ॒भ्णा म॑घवन् का॒शिरि॑त्ते (ऋ० सं० ३, २, १, ५)"॥

(४) कुणारुम्। क्वणतेः शब्दकर्मणः 'क्वणेरारुः'—इति बाहुलकात् आरुप्रत्ययस्ताच्छीलिकः, वकारस्य सम्प्रसारणञ्च। शब्दनशीलः कुणारुः, तस्मै च उच्यते। "अ॒ह॒स्त मि॑न्द्र॒ सम्पि-णक् कुणा॑रुम् (य० वा० स० १८, ६९)"॥

(५) अलातृणः। अलंशब्दोपपदात् तृदेर्हिंसार्थात् 'वीणतूण-प्रवणभ्रूणतूणतृणघृणादयः (उ० ३, १३)'—इति णप्रत्ययो दकारलोपो गुणाभावोऽलमोमकारस्याकारश्च निपात्यते। यद्वा, क्षुटि दकारस्य लोपो गुणाभावश्च पृषोदरादित्वात्। अलं पर्याप्तमातर्दनं हिंसा यस्य, महोदकत्वात् मेघो विशिष्यते। "अ॒ला॒तृ॒णो व॒ल इ॑न्द्र व्र॒जो गोः (ऋ० सं० ३, २, २, ५)"।

(६) सललूकम्। सम्पूर्वाल्लुभेर्निष्ठायां 'लुभो विमोहने (७, २, ५४)'—इतीडागमः। यद्वा, सर्तेः 'मण्डूकोलूकोल्मुक-शूकशम्बूकयूकवरूकादयः (उ० ४, ४०)'—इत्यूकप्रत्यये गुणे रपरे कृते परित्यज्य द्विर्वचनरेफयोर्लत्वापत्तिश्च निपात्यते। सरणशीलमत्यन्तदूरं नष्टमित्यर्थः। रथो विशिष्यते। "मा कीव॑तः स॒ल॒लू॑कं॒ चकर्थ (ऋ० सं० ३, २, ४, २)"।

(७) कत्पयम्। कमिति सुखनाम। तस्य मकारस्य तकारः पयसश्च सलोपः। कम्पयसं सुखपयसमित्यर्थः। मेघोऽभिधेयः। "त्यश्चि॑द्दि॒त्था क॑त्प॒यं शया॑नम् (ऋ० सं० ४, १, ३२, ६)"।

(१८) वपना । 'कपि चलने (भ्वा० आ०)'—इत्यस्मात् 'युच् बहुलम् (उ० ४, ७४)'—इति युचि बाहुलकादागमानित्यत्वान्नुम् न क्रियते । युधा: क्रिमय उच्यन्ते । "मोषथा वृक्षं पथेव वेधस: (ऋ० सं० ४, ३, १५, १)" ॥

(१९) भाऋजीक: । ऋजुका अकुटिला अप्रतिहता प्रसिद्धा भा दीप्तिर्यस्य स ऋजुकभा: सन् भाऋजीक: । अग्निरुच्यते । "धूमकेतु: समिधा भाऋजीक: (ऋ० सं० ७, ६, ११, २)" ॥

(२०) रुजाना: । व्याख्यातं नदीनामसु (११२ पृ०) । स निगम: (ऋ० सं० १, २, २७, १) ॥

(२१) जूर्णि: । व्याख्यातं क्रोधनामसु (१८६ पृ०) । अत्र सेनाभिधेया । "क्षिप्रा जूर्णिर्न वक्षति (ऋ० सं० २, १, १७, ३)" ॥

(२२) ओमना । अवनशब्दस्याकारवकारयोरोकारमकारौ विभक्तेराकार: । अवनाय अवनेन वा । "परिवृङ्ग्धि नो ओमना वयो गात् (ऋ० सं० ५, ५, ११, ४)" ॥

(२३) उपलप्रक्षिणी । उपलशब्दोपपदात् क्षिणोते: क्षिपतेर्वा 'सुप्यजातौ (३, २, ७८)'—इति णिनिप्रत्यये व्यत्ययेन टिलोप: । उपलेषु ऋश्मेषु वालुकासु यवान् क्षिणोति हिनस्ति भक्षतीत्यर्थ:, उपलेषु यवान् प्रक्षिपति चूर्णयतीत्यर्थ: । सक्तुकारिकाभिधेया । "उपलप्रक्षिणी नना (ऋ० सं० ७, ६, २५, ३)" ॥

(२४) उपसि । उपस्थशब्दस्य । "आसीन ऊर्ध्वामुपसि क्षिणाति (ऋ० सं० ७, ७, १०, ३)" ॥

(२५) प्रकलवित् । प्रकर्षेण कला: मानोन्मानप्रतिमानादिविषया: प्रस्थाष्टमकपलाष्टमपरीक्षादिका वेद विजानाति ।

'सत्सूद्विष (३, २, ६१)'—इत्यादिना क्विपि 'ङ्यापो सञ्ज्ञाच्छन्दसोर्बहुलम् (६, ३, ६३)'—इति ह्रस्व। प्रकलविद् वणिग् भवति। "दुर्मिवासं प्रकलविन्मिमाना (ऋ० सं० ५, १, २६, ५)"॥

(२६) अभ्यर्धयज्वा। 'ऋधु वृद्धौ (दि० प०)'। णिजन्तात् पचाद्यचि णिलोपे अभ्यर्ध, यजेर्ङ्वनार्थात् 'सुयजोर्ङ्वनिप् (३, २, १०३)' अस्मानपि रसान् अभ्यर्धयन सवद्गमो ददाति धन वा स्तोतृभ्यो यो ददाति स। पूषा विशेष्यते। "सिषक्ति पूषा अभ्यर्धयज्वा (ऋ० सं० ४, ८, ८, ५)"॥

(२७) ईशे। ईश ऐश्वर्ये (अदा० आ०)'। 'लोपस्त आ (१, ४, ८०)'। व्यत्ययेन ईशसे न भवति। "ईशे हि वस्व उभयस्य राजन् (ऋ० सं० ४, ६, ८, ५)"॥

(२८) क्षोणस्य। 'क्षि निवासगत्योः (तु० प०)'। 'कृत्यल्युटो बहुलम (३, ३, ११३)'—इति कर्त्तरि ल्युट्। क्षयण स्येयत्र यकारस्योकारे 'आद्गुण (६, १, ८७)'। निवसितु रित्यर्थ। "मह क्षोणस्याश्विना कण्वाय (ऋ० सं० १, ८, १४, ६)"॥

(२९) अस्मे। अस्मद। जसादीना शे प्रत्यय, लुकेव टे। जसादिषु सुबन्तेषु क्रमेणोदाहरणानि,—"अस्मे ते बन्धु: (य० वा० सं० ४, २२)" "अस्मे यात नासत्या सजोषा (ऋ० स० १, ८, १८, ६)" "अस्मा समानेभिर्वृषभ पौंस्येभि (ऋ० स० २, ३, २५, २)" "अस्मे प्रयन्धि मघवन्नृजीषिन् (ऋ० स० ३, २, २०, ५)" "अस्मे आराच्चिद्द्वेष सनुतर्युयोतु (ऋ० स० ४, ७, ३२, ३)" "ऊर्ज इव पप्रथे कामो अस्मे (ऋ० स० ३, २, ४, ४)" "अस्मे धत्त वसवो वसूनि (य० वा० स० ८, १८)"॥

(३०) पाथः। पथतेः पश्यतेर्वा गत्यर्थादसुनि धातूनां पाथ इत्ययमादेशः। पथ्यते गम्यते पक्ष्यादिभिरन्तरिक्षवासिभिर्वा पाथः।. अन्तरिक्षम्। "श्येनो न दीयन्नन्वेति पाथः (ऋ० सं० ५, ३, ५, ५)"। उदकमपि पाथः। 'पिबतेर्नुट् च'—इत्यसुन्। पीयते ह्युदकम्। अन्नं पिबतिरभ्यवहारार्थः। "आचष्ट आसां पाथो नदीनाम् (ऋ० सं० ४, ३, २५, ५)"—इत्युदकस्य। "देवानां पाथ उप प्रविद्वान् (ऋ० सं० ८, २, २२, ४)"—इत्यन्नस्य॥

(३१) सवीमनि। 'षु प्रसवैश्वर्ययोः' (भू० प०)। 'इण्भ्रस्सूशूस्य इमनिच् (उ० ४, १४३)'—इति इमनिच्। प्रसवशब्दस्य एव वर्णव्यत्ययादिना। प्रसवेऽभ्यनुज्ञाने। "देवस्य वयं सवितुः सवीमनि (ऋ० सं० ५, १, १५, २)"॥

(३२) सप्रथाः। प्रथतेरसुन्। सर्वतःशब्दस्य सभाव। सर्वतः पृथुः। "त्वमग्ने सप्रथा असि (ऋ० सं० ४, १, ५, ४)"॥

(३३) विदथानि। विदेरथच् (उ० ३, ११६)। वेदनानि विज्ञानानीत्यर्थः। "विदथानि प्रचोदयन् (ऋ० सं० ३, १, २८, २)"॥

(३४) आयन्तः। 'श्रिञ् सेवायाम् (भू० उ०)'। शतरि अपि गुणे प्राप्ते व्यत्ययेन वृद्धिः। समाश्रयन्तः। यद्वा, श्रुतेर्लुट्। समाश्रिताः। "आयन्त इव सूर्यम् (ऋ० सं० ६, ०, ३, ३)"॥

(३५) आशीः। आङ्पूर्वात् श्रयतेः शृणोतेर्वा 'क्विब्वचिप्रच्छि (३, २, १७८ वा० १)'—इत्यत्र 'आङ् प्रत्ययनिर्देशाद्विशिष्टसिद्धिः (भा०)'—इत्युक्तं क्विपि प्रकृतेः शीरादेशः। यद्वा, पतयोरर्थे वर्तमानात् श्रातेः क्विपि शीरशब्दे निर्वाहः।

आङ् ईषदर्थद्योतकः आश्रयणात् होमार्थस्य सोमस्य श्रपण इत्युच्यते। "इन्द्राय गाव आशिरम् (ऋ० सं० ६, ५, ६, १)"। 'आङः शासु इच्छायाम्' इत्यस्मात् क्विपि। "सा मे सत्याशीर्देवान् गम्यात्" रेफान्तसकारान्तयोरपि साधारण पाठः समाम्नाये॥

(३६) अजीगः। जिगर्तिर्निगरणार्थो वा ग्रहणार्थो वा। लङि, सिपि, इतश्च लोपे, 'रात्सस्य (८, २, २४)'—इति सलोपः, रेफस्य विसर्जनीयः। अवगिरति, गृह्णाति वा। भक्षयतीत्यर्थः। "आदिद्ध मासिंष्ठ ओषधीरजीगः (ऋ० सं० २, ३, १२, २)"॥

(३७) अमूरः। 'मुह वैचित्त्ये (दि० प०)'। निष्ठायाम् उत्वम्, ढत्वढलोपदीर्घाः, ढकारस्य रेफः, नञ्पूर्वः सम्बुद्धौ अमूर। अमूढेत्यर्थः। "मूरा अमूर न वयं चिकित्वः (ऋ० सं० ७, ५, ३२, ४)"॥

(३८) शशमानः। व्याख्यातोऽर्चतिकर्मसु (२७४ पृ०)। स निगमः (ऋ० सं० २, २, २१, २)॥

(३९) देवोदेवाच्या कृपा। देवशब्दोपपदात् अञ्चतेः 'ऋत्विग् (३, २, ५९)'—इत्यादिना क्विन्, 'अनिदिताम् (६, ४, २४)'—इति नलोपः, 'अचः (६, ४, १३८)'—इत्यकारलोपः, (६, ३, १३८)'—इति दीर्घः 'अञ्चतेश्चोपसंख्यानम् (४, १, ६ वा०)'—इति ङीपि 'विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये (६, ३, ९२)' न भवति, 'कृपू सामर्थ्ये (भू० आ०)' क्विपि। देवान् प्रति गतया स्तुत्येत्यर्थः। "देवोदेवाच्या कृपा (ऋ० सं० २, १, १२, १)"॥

(४०) विजामातुः। धनाढ्यो कुलीनत्वादयो विगता जामातृगुणा यस्मात्, सोऽयमप्राप्तगुणो विजामाता कन्या-

पतिरुच्यते। तत. पञ्चमी। "विजामातुरुत वा घा स्यालात्" (ऋ० सं० १, ७, २८, २)॥

(४१) ओमास। अवतेः पालनार्थस्य तर्पणार्थस्य वा कर्तरि कर्मणि वा 'अविसिविसिशुषिभ्यः कित् (उ० १, १४१)'—इति मन्प्रत्यये 'ज्वरत्वर (६, ४, २०)'—इत्यादिना ऊठि ओमास इति प्राप्ते व्यत्ययेन गुणः। जस्। 'आज्जसेरसुक् (७, १, ५०)'। रक्षितारस्तर्पयितारस्तर्पणीया:। "ओमासश्चर्षणीधृत (ऋ० सं० १, १, ६, १)"॥

(४२) सोमानम्। सुनोतेर्मनिन्प्रत्ययः। अभि सोतानम्। सातारम्। अभियातारं सामानाम्। "सोमानं स्वरणम् (ऋ० सं० १, १, ३४, १)"॥

(४३) अनवायम्। (४४) किमीदिने। अनवयवशब्दस्यानवायभावः। अनवयवं समस्तमित्यर्थः। किमिदानीं कस्य किञ्चिदिति चरति, किमिदं चरत इति वा चरति। साधु जनद्वेषी सदा विरुद्धबुद्धिः पिशुनोऽभिधेयः। किमिदशब्दस्य वावयस्य वा किमीदिनभावः। "इयो अस्तमनवायं किमीदिने (ऋ० सं० ५, ७, ५, २)"॥

(४५) अमवान्। अमा सहार्थाव्ययम्। तस्य मतुपि अमवान् सहाय। यद्वा, 'अम रोगे (चु० प०)'। 'पुंसि संज्ञायां घ (३, ३, ११८)'। अमो रोगः कर्तव्यः शत्रूणा, रोगस्तद्वान्, दस्यूना रोगभूत इत्यर्थः। आत्मशब्दस्य वा अमवान्। अत्र श्रूयते 'आत्मा अमेर्न समो शमो अतति' —इति निघण्टुः। "ग्राहि राजे मार्मवा इवेन (ऋ० सं० १, ४, २३, १)"।

(४६) अमीवा। 'अम रोगे (चु० प०)'। 'अमेरीव्'—इति ईवप्रत्ययः। टाप्। अमीवा रोगः हिंसिता वा। यद्वा,

'श्वेवयह्वजिह्वाग्रीवाप्वामीवा (उ० १, १५२)'—इति वन्-प्रत्ययान्तो निपात्यते। "यस्ते गर्भममीवा (ऋ० सं० ८, ८, २०, २)"॥

(४७) दुरितम्। दुर्गतिप्रापकं कारणभूतम्। 'पापकं कर्म दुरितमुच्यते। "अतिक्रामन्तो दुरितानि विश्वा (निरु० ६, १२)"। दुःशब्दोऽत्र दुर्गतौ वर्त्तते। 'इणषिञ्जिदीङुष्यविभ्यः क्तः' इति बाहुलकात् करणे क्तः। दुर्गतिर्गम्यते येन तत् दुरितम्॥

(४८) अप्वे। अपपूर्वात् वेञ्धातोरन्तर्णीतण्यर्थात् 'अन्येष्वपि दृश्यते (३, २, १०१)'—इति डप्रत्यये अपेत्यस्या-न्त्यलोपश्छान्दसः। टाप्। अपवयति अपगमयति सुखं प्राणांश्चेत्यर्थः। 'श्वेवयह्वजिह्वाग्रीवाप्वामीवा (उ० १, १५२)' —इति वन्प्रत्यये वेञो लोपोऽपशब्दस्यान्तलोपश्च निपात्यते। व्याधिर्वा भयं वा अप्वा। "अङ्गाण्यप्वे परेहि (ऋ० (सं० ८, ५, २३, ६)"॥

(४९) अमतिः। अमाशब्द आत्मवचनः। आत्ममयी तति-र्मतिर्वा अमतिः। तन्यत इति ततिर्दीप्तिः। मतिरपि प्रका-शरूपत्वाद् दीप्तिः। आत्मप्रकाशमयी ततिर्मतिर्वा अमतिः दीप्तिरभिधेया। अमाततिशब्दस्य आत्ममतिशब्दस्य वा अम-तिभावः। सविष्टविशेषणत्वादात्मप्रकाशमयी ततिर्मतिर्वा

२१७  २११।  २७ २

अमतिरित्युपपद्यते। 'ऊर्ध्वा यस्या मतिर्भा अदिद्युतत् (सा० छ० आ० ५, २, ३, ८)"।

(५०) श्रुष्टी। (५१) पुरन्धिः। अश्नोतेः 'इकृषिकषि-मर्षिसुषिशासुष्यषिभ्यः क्तिन्'। 'कृदिकारादक्तिनः (४, १, ४५, ग० वा०)'—इत्यत्र स्त्रियां विहितस्य ग्रहणात्

विकल्पो ङीप्। सु अष्टि व्याप्तिरत्र सुष्टी। पुरन्धिशब्दो बहुनाम। धीरिति कर्मनाम, प्रज्ञानाम वा। बहुकर्मा बहुप्रज्ञो वा पुरुधिः सन् पुरन्धिः। पुराणि दारयतीति वा पुरन्धिः। 'वेञो डित्'—इति बाहुलकात् डिदिन्प्रत्ययः, दकारस्य धकारः, नकार उपजनः। भगो वरुण इन्द्रश्च पुरन्धिः। सुष्टी भगं नामेत्य। पुरन्धिम् (ऋ० सं० ५, ४, ६, ४)"। सुष्टीशब्दः सुखस्याभिधायको धान्यशलाकायाश्च। "सुष्टीवरी भूत स्वाध्यमापः (ऋ० सं० ७, ७, २६, १)"—इति सुखस्याभिधायकः। "सुष्टी सहरा असह्य."—इति धान्यशलाकायाः॥

(५२) रुशत्। 'रुच दीप्तौ (भू० आ०)'। 'संश्चत्तृम्पद्वेहत् (उ० २, ७८)'—इति अतिप्रत्ययो गुणाभावश्च चकारस्य शकारश्च निपात्यते। रोचते रुशत् वर्णविशेषो ज्वलनाविर्भूतप्रकाशरूपोऽभिधीयते। यद्वा, रुशे र्हिंसार्थात्तुदादेः रोचत्यर्थे वर्तमानाल्लट् शतरि। "अभिरुश्रु वर्षदर्शि पाजः (ऋ० सं० ३, ८, १२, २)"॥

(५३) रिशादसः। 'रिश हिंसायाम्' तुदादिः। अन्तर्णीतण्यर्थः। लटः शतरि छान्दसो दीर्घः। अस्यतेर्विच्। रिशतां शत्रूणां वा असितारः क्षेप्तारः नाशयितार इत्यर्थः। "अग्निः हि वः सजात्य' रिशादसः (ऋ० सं० ६, १, १२, ५)"॥

(५४) सुदत्रः। सुपूर्वात् ददातेः इन्, इनि बाहुलकात् ह्रस्वत्वम्। सुदानः। त्वष्टा सुदत्रो विदधातु रायः (ऋ० सं० ५, ३, २७, २)"॥

(५५) स्वविदत्रः। सुपूर्वात् 'विद ज्ञाने (अदा० प०)'—इत्यस्मात् 'अमियजिवधिपतिकारिगमिभ्योऽत्रन्'—इति बाहु-

लकादत्रनुप्रत्ययौ गुणाभावश्च । सुविदत इत्यर्थः । "याम्नं याभिः सुविदत्रेभिरर्वाङ् (ऋ० सं० ७, ६, १८, ३)" ॥

(५६) आनुषक् । अनुपूर्वात् 'षञ्ज सङ्गे (भ्वा० प०)'—इत्यस्मात् क्विपि 'अनिदिताम् (६, ४, २४)'—इति नलोप, अकारस्य दीर्घश्छान्दसः । अनुपक्तमुपर्युपरि सक्तमित्यर्थः । "स्तृणन्ति बर्हिरानुषक् (ऋ० सं० ६, ३, ४२, २)" ॥

(५७) तुर्वणिः । तूर्णशब्दोपपदात् वनोतेः 'इन् सर्वधातुभ्यः (उ० ४, ११८)'—इतीन् । तूर्णं वनोति सम्भजते । तूर्णवनि । "स तुर्वणिर्महाँ अरेणु पौंस्ये (ऋ० सं० १, ४, २१, ३)" ॥

(५८) गिर्वणाः । गी-शब्दोपपदात् वनोतेरसुन्प्रत्ययः असुनि वनेर्धटादित्वेन मित्संज्ञकत्वात् ह्रस्वत्वम् । गीर्वण इति प्राप्ते दीर्घाभावश्छान्दसः । निघण्टुकारपठितगीर्वाणशब्देन समानार्थः । यतो देवोऽभिधेय । स्तोतुरभिमतप्रदानादात्मानं स्तोतृभिः सम्भाजयति । भाष्ये तु (निरु० ६, १४) 'गीर्भिरेनं वनयन्ति'—इत्यर्थनिर्वचनमिति स्कन्दस्वामी । श्रोनिवासस्तु स्वार्थे णिच् । गीर्भिरेनं वनयन्ति । "जुष्टं गिर्वणसे बृहत् (ऋ० सं० ६, ६, १२, ७)" ॥

(५९) असूर्ते सूर्ते । असुशब्दपूर्वस्य सुशब्दपूर्वस्य च 'ईर गतौ (अदा० आ०)'—इत्यस्य निष्ठाया छान्दसत्वादिडभावे ईकारस्य पूर्वसवर्णे पूर्ववद् दीर्घश्छान्दसत्वात् । सप्तम्येकवचनम् । असु. प्राण. । प्राणश्च वातः । वातसमीरिता मरुदादयो हि मेघाः । सूर्ते इति रजसीत्यस्य विशेषणम् । सुसमीरिते सुष्ठु प्रेरिते विस्तीर्णे रजसि अन्तरिक्षलोकेऽपीत्यर्थः । "असूर्ते सूर्ते रजसि निषत्ते (ऋ० सं०, २, १, ७, ४)" ॥

(६०) अस्मयुः । मच्छब्दद्वितीयैकवचन उपपदे यातेः

क्विप् नकारलोपे माशब्दस्य छन्दो दृष्टयोऽकारोपजनेन च भाव्यम्। आसुधाख्या प्रतिरभिधेया जिह्मा सती मा प्रति इव गता। यद्वा, अभिपूर्वादञ्चतेः क्विनि अभ्यक् सती अकारस्य मकारापत्त्या अम्यक्। अमून् प्रत्यभिगता। यद्वा, अमाशब्दः सहार्थे निपातः। अमाक् सती अम्यक् सहभूता। "अम्यक् सा त इन्द्र ऋष्टिरस्मे (ऋ० सं० २, ४, ८, ३)"।

(६१) यादृश्मिन्। यादृशे इत्यर्थः "यादृश्मिन् धायि तमपस्यया विदत् (ऋ० सं० ४, २, २४, ३)"।

(६२) जारयायि। उक्तविशेषणम्। तेन अत्ययेन नपुंसकत्वावगमः। ततश्चेदं व्याख्यातम्। जार इत्यस्य वा धातोरित्यनयोर्व्याख्यानस्याभावात्। निपातप्रसङ्गश्च। अन्ये तु जरेरुत्प्राभिगतमाख्यानमेतदिति मन्यते। ततश्च जारयायि अजायतेत्यवगमः स्तुत्या मन्त्रव्याख्याने निपातप्रसङ्गश्च भिन्नवाक्यत्वेन वाक्यादित्वादुदात्तप्रतिपादनेन परिहृतत्वात् अजायतेत्येव स्कन्दस्वामिनोऽप्यवगमः। उक्तविशेषणवाह्निना जारस्यामी यायीति जारयायि। गवां यौवनस्य जरयितृत्वाज्जारत्वम् गवामभिगमनाद् यायित्वम्। "जुष्टः प्रितेव जारुयायि यज्ञैः (ऋ० सं० ४, ५, १४, ६)"।

(६३) अग्रिया। अग्रशब्दोपपदात् यातेः 'औणे' …

लकादुत्तनप्रत्ययो गुणाभावश्च । सुविद्यत इत्यर्थः । "आग्ने याभिः सुविदत्रेभिरर्वाङ् (ऋ० सं० ७, ६, १८, ३)" ॥

(५६) आनुषक् । अनुपूर्वात् 'षञ्ज सङ्गे (भू० प०)'— इत्यस्मात् क्विपि 'अनिदिताम् (६, ४, २४)'—इति नलोपः, अनोरकारस्य दीर्घश्छान्दसः । अनुषक्तमुपर्युपरि लग्नमित्यर्थः । "स्तृणन्ति बर्हिरानुषक् (ऋ० सं० ६, ३, ४२, २)" ॥

(५७) तुर्वणिः । तूर्णशब्दोपपदात् वनोतेः 'इन् सर्वधातुभ्यः (उ० ४, ११८)'—इतीन् । तूर्णं वनोति सम्भजते । तूर्णवनिः । "स तुर्वणिर्महाँ अरेणु पौंस्ये (ऋ० सं० १, ४, २१, ३)" ॥

(५८) गिर्वणाः । गोःशब्दोपपदात् वनोतेर्ण्यन्तादसुनि वनेर्घटादित्वेन मित्संज्ञकत्वात् ह्रस्वत्वम् । गीर्वण इति प्राप्ते दीर्घाभावश्छान्दसः । निघण्टुकारपठितगीर्वाणशब्देन समानार्थः । अतो देवोऽभिधेयः । स्तोतुरभिमतप्रदानादात्मानं स्तोतृभिः सम्भाजयति । भाष्ये तु (निरु० ६, १४) 'गीर्भिरेनं वनयन्ति'—इत्यर्थनिर्वचनमिति स्कन्दस्वामी । श्रीनिवासस्तु स्वार्थे णिच् । गीर्भिरेनं वनयन्ति । "शुष्टं गिर्वणसे बृहत् (ऋ० सं० ६, ६, १२, ७)" ॥

(५८) असूर्ते सूर्ते । असुशब्दपूर्वस्य सुशब्दपूर्वस्य च 'ईर गतौ (अदा० आ०)'—इत्यस्य निष्ठायां छान्दसत्वादिडभावे ईकारस्य पूर्वसवर्णे पूर्वत्र दीर्घश्छान्दसत्वात् । सप्तम्येकवचन असुः प्राणः । प्राणश्च वातः । वातसमीरिता मरुदा ... मेघाः । सूर्ते इति रजसीत्यस्य विशेषणम् । ... (ऋ० सं० सुष्टु प्रेरिते विस्तीर्णे रजसि अन्तरिक्षलोकेऽपीत्यर्थ सूर्ते रजांसि निषत्ते (ऋ० सं०, २, १, ७, ४) ... उ०)' । माम-

(६०) अम्यक् । माशब्दद्वितीयैकवचन

व्यत्ययेन् प्लुतम्। अन्येनाप्रतिगतः अप्रतिष्कुतः। युद्धे अन्येनाप्रतिहतपूर्व इत्यर्थः अप्रतिस्खलितपूर्वो वा। अत्र पक्षे स्खलितशब्दस्य ष्कुतभावः। "इत्थमिथमप्रतिष्कुतः (ऋ० स० १, ७, १४, १)"॥

(७०) शाशदानः। 'शद्ल शातने (भू० प०)'। अस्माद् यङ्लुगन्ताद् व्यत्ययेन शानच्। पुनः पुनरसुरांस्तत्पुराणि वा शातयन्तः "प्रस्तां सुतिर्मसिर्च्छाशंदानः (ऋ० सं० १, ३, २, २)"॥

(७१) सृप्रः। शिप्रे इत्यत्र (३२० पृ०) सृप्रशब्दो व्याख्यातः। "सृप्रकरस्नमूतये (ऋ० स० ६, ३, २, ५)"। सृप्रौ जरन्तौ बाहू यस्य होमेन तर्पणाय पालनाय वाऽस्मनः सर्पिस्तैलमपि सृप्रम् सर्पणात्। निगमः पर्यन्वः॥

(७२) सुशिप्रः। शिप्रे व्याख्याते (३२० पृ०)। शोभनत्वविशिष्टत्वमत्र विशेषः। सुहनुः सुनासो वा सुशिप्रः। "धाजे सुशिप्र गोमति (ऋ० सं० ६, २, १, ६)"। क्वचिच्छिप्रशब्देन शिरस्त्राणमुच्यते। शिप्राः शीर्षसु वितता हिरण्ययीरिति सुशिप्र सुशिरस्त्राण इत्यर्थः सम्भवति॥

(७३) रंसु। रमतेर्विच्। सप्तमीबहुवचनम्। रमणीयेष्वित्यर्थः। रमणीयशब्दस्य स्थाने। "स चित्रेण चिकिते रंसु भासा (ऋ० सं० २, ४, २४, ५)"।

(७४) द्विबर्हाः। द्विशब्दे सप्तम्यन्ते उपपदे 'वृहु वृद्धौ (भ्वा० प०)'—इत्यस्मादसुन्। द्वयोः स्थानयोर्वर्धित्वपरिवृढः इन्द्रः। न ह्यन्तरिक्षे वीर्यैणापरिवृढ शक्नोति वर्षितुं नापि दिवि आदित्यादस्मान् परिरक्षितुं, दिवः सर्वदेवतासाधारणत्वात् देवराजत्वेन च प्रमिर्हितिहासेषु द्विबर्हा उच्यते। "उत द्विबर्हा अमिन सहोभिः (ऋ० सं० ४, ६, ७, १)"॥

(७५) अक्रः। आङ्पूर्वात् क्रमेः 'अन्येष्वपि दृश्यते (३, २, १०१)'—इति डः, आङो ह्रस्वत्वम्। आक्रामति सर्वमित्यक्रमाकाशमाक्रम्यते वा। "अक्रो न बभ्रिः समिथे महीनाम् (ऋ० सं० २, ८, १५, २)"॥

(७६) उराणः। उरु कुर्वाण इति प्राप्ते कवर्णादिलोपादिना वाक्यार्थः। उराण इति पदवचनम्। "दूत ईयसे प्रदिव उराणः (ऋ० सं० ३, ५, ७, ३)"। स्वल्पमपि हविः उरु बहु कुर्वाणः। तथाच श्रुतिः। "यद्वै देवो ओमत हविष्मात हिमोतु वहेत अयोऽयमपरिमितः"—इति।

(७७) स्तियानाम्। स्त्यायतेः सदनार्थात् 'अन्येभ्योऽपि दृश्यन्ते (३, २, ७५)'—इति विच्। दृशिग्रहणस्य प्रयोगानुसरणार्थत्वान्निरुपपदादपि भवति। इकार उपजनः। षष्ठीबहुवचनम्। हिमभावेन सहता आप उच्यन्ते। "वृषा सिन्धूनां वृषभः स्तियानाम् (ऋ० सं० ४, ७, २०, १)"॥

(७८) स्तिपाः। स्तियाः पातीति विच्। स्तियापाः सन् स्तिपाः। यद्वा, उपस्थितपाः सन् अनेकवर्णलोपादिना स्तिपाः। अग्निरुच्यते। स ह्याहुतिद्वारेण पालयिता, अङ्गभावोपगमनेन चोपस्थितानां कर्त्तव्यतया ज्योतिष्टोमादीनाम्। "स नः स्तिपा उत भवा तनूपाः (ऋ० सं० ८, २, १८, ४)"॥

(७९) जबारु। जवमङ्गिर्जरमङ्गिर्गरवद्भिर्वा रश्मिभिर्यदारोहति तदादित्यमण्डलमुच्यते। जवसज्जरमद्गरमच्छब्दानां जबभावं, आङ्पूर्वाद्रुहेश्च डुमत्ययो निपात्यते। "अग्ने रूप आरुपितं जबारु (ऋ० सं० ३, ५, २, २)"॥

(८०) जरूथम्। स्तुतिकर्मणो जरतेर्वार्चतिकर्मणः 'जॄ हनो रूथन्'—इति भावे करणे वा रूथन्। बाहुलकात्

गकारस्य जकारः। स्तवनं स्तूयतेऽनेनेति वा जव्यं स्तोत्रम्। "अरूर्यं कृण्वंर्चि राये पुरन्धिम् (ऋ॰ सं॰ ५, २, १२, ६)" ॥

(८१) कुलिशः। वज्रनामसु व्याख्यातम् (२३८ पृ॰)। स निगमः (ऋ॰ सं॰ १, २, ३६, ३) ॥

(८२) तुञ्जः। तुञ्जतेर्दानकर्मणो भावे घञ्। दानमित्यर्थः "तुञ्जे तुञ्जे य उत्तरे (ऋ॰ सं॰ १, १, १४, २)"। यद्योऽपि तुञ्ज स्तवैव व्याख्यातः ॥

(८३)। बर्हणा। वृहिर्हिंसार्थस्य 'कृत्यल्युटो बहुलम् (३, ३, ११३)'—इति भूते कर्त्तरि ल्युट्। परिहृढः। हिंसाकर्मणो वा भावे। हिंसा बर्हणा। तृतीयैकवचनस्थाने आदेशः। वृहच्छ्रुता मधुरो बर्हणा कृतः (ऋ॰ सं॰ १, ४, १७, ३)" ॥

(८४) ततनुष्टिम्। 'तनिपतिदरिद्राभ्यः किच (उ॰ ३, ८५)'—इति तनोतेः तन्प्रत्ययः, तुदेर्हिंसायां तुष शुष्टिभावः। यद्वा, ततशब्दस्य ततनूभाव, वशेर्वा बाहुलकात् कर्त्तरि क्तिनि सम्प्रसारणे उष्टिः। तदर्मसन्तानादग्निहोत्रादि कर्मणो तुकः प्रेरितः ततनं भोगसन्तानं वष्टि ततनुष्टिः, नलोपाभाव। ततनुष्टिम्। "मर्त्ताय शुकस्तनुष्टिमूहति (ऋ॰ सं॰ ४, २, ३, ३)" ॥

(८५) इलीविशः। इलाशब्द उदकशब्दपर्यायः। इला अन्नम्, अन्नहेतुभूते उदके वर्त्तते। विले दरे शेते इति 'अधिकरणे शेतेः (३, २, १५)'—इत्यच्। इलाविले शयो यस्य। निपातश्छान्दसः। मेघ उच्यते। इलाबिलशयः सन् इलीबिशः। "न्यविध्यदिलीबिशस्य दृळ्हा (ऋ॰ सं॰ १, ३, २, २)" ॥

(८६) कियेधाः। कियच्छब्दे क्रममाणशब्दे चोपपदे दधातेर्विच्। कियदर्थे विधीयमानपरिमाणं स्तवनं धारयति,

क्रममाण वोऽभिमुख परबल धारयति निरुणद्धीति। कियद्वा क्रममाणधा वा सन् कियेधाः। इन्द्रविशेषः। "वृत्राय वज्रमीशानः कियेधाः (ऋ० सं० १, ४, २८, २)" ॥

(८७) भ्रमिः। 'भ्रमि. सम्प्रसारणश्च (उ० ४, ११७)'— इतीन्प्रत्ययः। अग्निरुच्यते। भ्रमिता। स्वय त्रिष्वपि लोकेष्वप्रतिहतगतिरित्यर्थ.। अन्तर्णीतण्यर्थो वा भ्रमि.। भ्रामयिता। "भ्रमिरस्यृषिकृन्मर्त्यानाम् (ऋ० सं० १, २, ३५, १)" ॥

(८८) विप्पितः। विप्रागशब्दस्य विप्पितभाव। यद्वा, विपेर्व्याप्त्यर्थात् क्त, इकारपकारावुपजनौ। विस्तीर्ण इत्यर्थ। "पार नो अस्य विप्पितस्य पर्षन् (ऋ० सं० ५, ५, २, १)" ॥

(८९) तुरीपम्। तूर्ण व्याप्नु प्रीलमस्य पिनि.। तूर्णापि सत् तुरीपम्। उदकमभिधेयम्। "तन्नस्तुरीपमद्भुतम् (ऋ० सं० २, २, ११, ४)" ॥

(९०) रासिन.। रपतेर्वा रसतेर्वा कर्मणि भावे वा घञ्। रापो रासो वा शब्दा यस्य तद्रापि रासि वा सत् सकारपकारोपजनेन रास्निशब्दो बहुदक स्तोत्र वोच्यते। तदस्यास्तीत्यर्थ आदित्वादच् प्रकृतिभावश्च द्रष्टव्य.। दण्डिमती शालेति यथा। अतश्च शब्दवदुदक तद्वान्मेघोऽभिधेय.। उच्चार्यमाणेन स्तोत्रेण स्तोता वा। "प्रमातरा रास्पिनस्यायोः (ऋ० सं० २, १, १, ४)" ॥

(९१) ऋञ्जति.। धातुनिर्देशात् 'ऋजो भर्जने' भ्वादिरव प्रसाधनकर्मविषयस्य समीकरण प्रसाधनमात्मसात् करण तदस्यार्थ । "यजिष्ठमृञ्जसे गिरा (ऋ० सं० ३, ५, ८, १)" ॥

(९२) ऋजुनीती। "ऋजुनीती नो वरुण (ऋ० सं० १, ६, १७, १)" ॥

(८३) प्रतद्वसू। प्राप्तवसुनौ। पकारलोपश्छान्दसः सकारोपजनेः प्रतद्वसू। हरी विशेष्यौ। "हरी इन्द्र प्रतद्वसू अभि स्वर (ऋ० सं० ६, १, १२, २)" ॥

(८४) हिनोत। 'हि गतौ (स्वा० प०)'। लोटि मध्यमे त 'छन्दस्युभयथा (३, ४, ११७)'—इत्यार्धधातुकत्वात् ङित्वाभावे गुणः प्रहिणुतेत्यर्थः। "हिनोता नो अध्वरं देवयज्या (ऋ० सं० ७, ७, २६, १)" ॥

(८५) चोष्कूयमाण। (८६) चोष्कूयते। 'स्कुञ् आप्रवणे (स्वा० उ०)' इह दानार्थं, क्वचिद् व्युदसनार्थश्च। यङि पूर्वत्र लट् शानच्, उत्तरत्र व्यत्ययेन पलम्। "चोष्कूयमाण इन्द्र भूरि वामम् (ऋ० सं० १, २, १, ३)। भृत्यं ददादित्यर्थः। चोष्कूयते विश इन्द्रो मनुष्यान् (ऋ० सं० ४, ७, २१, १)"। अत्यर्थं व्युदस्यति ॥

(८७) सुमत्। स्वयमित्यर्थे वर्त्तमानो निपातः। "उप प्रागात् सुमन्मे धायि मन्म (ऋ० सं० २, ३, ८, २)" ॥

(८८) दिविष्टिषु। दिविशब्दोपपदात् इषेर्गत्यर्थादिच्छार्थाद्वा करणे क्तिन्। यौर्गम्यते प्रार्थ्यते वा याभिस्ताः। "कुत्र स्य दिविष्टिषु (ऋ० सं० ५, ७, २२, ४)" ।

(८९) दूत। जवतेर्द्रवतेर्वारयतेर्वा 'हसनिभ्याम् (उ० ३, ८३, ८४)'—इति बाहुलकात् क्तप्रत्ययो धातुना दूभावश्च। गच्छति हि सः, द्रवते वा शीघ्रगत्, वारयति हि स्वसामर्थ्यादिभिरपरम्। "स्तोमो दूतो हुवन्नरा (ऋ० सं० ६, २, २८, १) ॥

(१००) जिन्वति। जिवि प्रीणनार्थः भूवादिः इदित्त्वात् नुम्। "भूमिं पर्जन्या जिन्वन्ति (ऋ० सं० २, ३, २३, ५)"।

(१०१) अमत्र.। अमात्रशब्दस्य ह्रस्वः। मात्रा परिमाणमपरिमाणोऽप्रमितो वा महिमित। मितशब्दस्य मभाव।

"मुहा यमनो वृजने विरप्शी (ऋ० सं० ३, २, १८, ४)" ॥

(१०२) ऋचीषमः । 'ऋच स्तुतौ (तु० प०)' । ईप्रत्ययः । 'कृदिकारात् (४, १, ४५ ग० वा०)'—इति ङीष् । ऋची स्तुतिः । तया समः । अधिकगुणाध्यारोपेणापि कृता स्तुतिः नातिरिच्यत इत्यर्थः । "स्तवे वज्र्यृचीषमः (ऋ० सं० ७, ७, ६, २)" ॥

(१०३) अनर्शरातिम् । अर्शशब्दोऽश्लीलवाची । रातिः क्तिनि रातिर्दानम् । अश्लीलविषया रातिर्दानं यस्य सोऽर्शरातिः पापकदानस्तद्विपरीतोऽनर्शरातिः । उत्कृष्टस्य दातेत्यर्थः । "अनर्शरातिं वसुदामुपस्तुहि (ऋ० सं० ६, ७, ३, ४)" ॥

(१०४) अनर्वा । अर्तेः 'अन्येभ्योऽपि दृश्यन्ते (३, २, ७५)'—इति वनिप् । नञ्समासः । 'अर्वणस्त्रसावनञः (६, ४, १२७)'—इति तृवद्भावाभावः । अप्रत्यृतः अप्रतिगतोऽन्यस्मिन् अन्यमनाश्रितः स्वतन्त्र इत्यर्थः । "अनर्वाणं वृषभं मन्द्रजिह्वम् (ऋ० सं० २, ५, १२, १)" । अनर्वाणमप्रतिगतमन्यं प्रत्याश्रितं तथा अपराश्रितमित्यर्थः ॥

(१०५) असामि । असामीत्यनवगतम् । अग्रे च सामिशब्द एवानवगतः । यत आह—'सामि प्रतिषिद्धम् असामि (निरु० ६, २३)'—इति । सामि कस्मात् । स्यतेः समाप्त्यर्थस्येति केचित् । तेन सामि समाप्तं चोच्यते । तस्य नञ्प्रतिषेधः । ततश्च असामि असमाप्तमित्यर्थः । अथवा न सामीति । किन्तर्हि । असुसमाप्तमिति । पाठान्तरेणार्थमाह उदाहरणम् (निरु० ६, २३)—"असाम्योजो बिभृथा सुदानवः (ऋ० सं० १, ३, १८, ५)" । असामि असमाप्तमनन्तमित्यर्थः । सुष्ठु वा असमाप्तं पूर्ववदित्यर्थः । 'स्यतेः कित्'

—इति बाहुलकात् मिन्प्रत्ययः । सास्थवैधर्मसामिसमर्थमि त्यस्य भाष्ये (निरु० ६, २३) द्रष्टव्यम् ॥

(१०६) गल्दया । गल्दाशब्दो गालनपर्यायः । गल्दया गालनेन स्रावणेन प्रदानेन पूरणेन दर्शनेनेत्यर्थः । "मा त्वा सोमस्य गल्दया (ऋ० सं० ५, ७, १३, ५)" ॥

(१०७) जल्हवः । ज्वलते क्विपि ज्वलन ज्वल्, ज्वलनं जहातीति 'मृगय्वादयश्च (उ० १, ३६)'—इति कुप्रत्ययः पूर्वपदस्य जल्भावश्च निपात्यते । ज्वलनेनाग्निना हीना इत्यर्थः । "नारायासो न जल्हवः (ऋ० सं० ६, ४, ३७, ६)" ॥

(१०८) बकुर । भास्करशब्दस्य भासमानद्रविणशब्दस्य वा बकुरभावः । "धृभिं दस्युं बकुरेणा धमन्ता (ऋ० सं० १, ८, १७, १)" । बकुरेण भास्करेण दीप्तेन भयङ्करेण वा भासमानगमनेन वा सामर्थ्यात् स्वेनायुधेन ज्योतिषा वा ॥

(१०९) बेकनाटान् । बेक इति द्विशब्दस्यार्थे बहुशो दृष्टः । एकं कार्षापणमापणिकाय प्रयच्छन् द्वौ मह्यं प्रदातव्याविति यमभिनायं दर्शयन्ति । ततो द्विशब्दादेकशब्दाटयतेश्च बेकनाटाः । एतदेते नाटा द्विगुणकारिणो वा द्विगुणदायिनो वा द्विगुणं कामयन्त इति वेति । द्वेरेकयोर्नाटा नटन तद्वन्तो बेकनाटाः । मत्वर्थीयस्य लुक् । नटेर्घञि नाटः । द्वेरेक शब्दस्य बेकभावः । वार्धुषिका अभिधेयाः । "इन्द्रो विश्वान् बेकनाटाँ अहर्दृश (ऋ० सं० ६, ४, ४८, ५)" ॥

(११०) आभषेतन । धावतेर्लोण्मध्यमपुरुषबहुवचनस्य 'तप्तनप्तनथनाश्च (७, १, ४५)—इति तनबादेशः । धावश्च व्दस्य षेभावः । अभिधावत । "जीरावो अभि षेतन (ऋ० सं० ६, ४, ५१, ५)" ॥

(१११) अष्टर । आङ्पूर्वादश्नोते मृगय्वादित्वात् (उ० १,

२६) कुप्रत्ययः । आङो ङ्कसत्वं रुगागमश्च निपात्यते । आ हन्ति श्रेयसो विनश्यन्तीति अंहः पापं, रो मत्वर्थीयः अंहुरः । अंहस्वान् । "तासामिकासिदुर्भ्यं हुरोगात् (ऋ० सं० ७, ५, २३, ६)" ॥

(११२) वतः । सत्ववाचो प्रथमान्तः । वलादतीत इति वाक्यस्यार्थे पदम् । वनशब्दादततेर्भिक्षायां च बलातीतः मन् वतः दुर्बल इत्यर्थः । वत निपातोऽसत्ववचनोऽव्ययम्, खेदो दुःखमानसः, अनुकम्पा दया, तयोर्वर्त्तते । "बतो वतासि यम नैव ते मनः (ऋ० सं० ७, ६, ८, ३)"

(११३) वाताप्यम् । आङ्पूर्वादाप्यायतेरन्तर्णीतण्यर्थात् 'अन्येष्वपि दृश्यते (३, २, १०१)'—इत्यपिशब्दस्य सर्वोपाधि-व्यभिचारार्थत्वात् कर्मणि ड । उदकं हविलक्षणमभिधेयम् । वातः पुरोवात एव । तदहश्यु दकमाप्याययति वातेनाप्या-य्यत इत्यर्थः । अथवा वातो यदाप्याययति कर्मोपपदात् कर्त्तरि प्रत्ययः । वातमाप्याययति वाताप्यम् । "पुनानो वाताप्यं विश्वश्चन्द्रम् (ऋ० सं० ७, ४, ३, ५)" ॥

(११४) चाकन् । चायतेः स्वरितेत्वाल्लटः शतरि यकारस्य ककारो बाहुलकात् । अनेकार्थत्वादिच्छार्थोऽपि । चायन् कामयमानो वा । "अग्ने न ग्रायो न्यधायि चाकन् (ऋ० सं० ७, ७, २२, १)" ॥ शाकल्यपदे चाकन्नित्याख्यातम् । तत्र सटि भिर्यस्य कार्यं "बहुलं छन्दस्यमाङ्योगेऽपि (६, ४, ७५)' । कामयते इत्यर्थः ॥

(११५) रथर्यति । रथमात्मन इच्छतीति क्यचि रथीय-तीति प्राप्ते रेफ उपजनो व्यवधानादीत्वाभावः । "एष देवो रथर्यति (ऋ० सं० ६, ७, २०, ५)" ॥

(११६) असश्चाम् । सम्पर्वात् समानपूर्वाद्वा क्रमेः 'अन-

खनक्रमगमो विट् (३, २, ६७)'। छन्दस्युपसर्गेऽपि इति हि तत्रानुवर्त्तते। 'विड्वनोरनुनासिकः स्यात् (६, ४, ४१)'। धातोर्लोपश्छान्दसः। 'समानस्य छन्दस्यमूर्द्ध (६, ३, ८४)'— इति समानशब्दस्य सभावः। न सक्ता असक्ता तां यावज्जीव-मनपायिनीमपत्यजातेरप्राप्तपूर्वामित्यर्थः। "धेनुं न इषं पिन्वतमसक्राम् (ऋ० सं० ५, १, ४, ३)" ॥

(११७) आधवः। 'धूञ् कम्पने (स्वा० प०)'। पचाद्यच्। अन्तर्णीतण्यर्थोऽत्र धूञ्। आधावकः। कम्पयितेत्यर्थः। "विश्वा-षाश्वाधुवम् (ऋ० सं० ७, ७, १२, ४)"

(११८) अनवब्रव। ब्रूञ्। 'ऋदोरप् (३, ३, ५७)'। छन्दस्युभयथा (३, ४, ११७)'—इत्यपः आर्द्धधातुकत्वाद् वच्यादेशो न भवति। अवः वचनम्। अनवधितवचनः। 'प्रादिभ्यो धातुजस्य (१, ४, ७८, वा०)'—इति समासादिः। अप्रतिहत-शासन इत्यर्थः। "त्रिजेषुकृदिन्द्र इवानवब्रुवः (ऋ० सं० ८, २, १८, ५)" ॥

(११९) सदान्वे। सदानोनुवशब्दात् सकृतो नोनुवशब्दस्य अभावः। दुर्भिक्षाधिदेवता अलक्ष्मी चाभिधेया। सदाका-णनलवणशब्दकारिणीत्यर्थः। "गिरिह्वंक्ष सदान्वे (ऋ० सं० ८, ८, १२, १)" ॥

(१२०) शिरिम्बिठः। "शिरिम्बिठस्य सत्वभिः (ऋ० सं० ८, ८, १२, १)" ॥

(१२१) पराशरः। परापूर्वस्य शृणातेः विशरणार्थस्य हिंसार्थस्य वा 'ऋदोरप् (३, ३. ५७)'—इति रूपम्। पराशीर्णे. पराशरः ऋषिः। पराशीर्णस्य स्थविरस्य लब्धिलष्य भता चिरस्थले यक्षी जात इत्यर्थः। "पराशरः शतयातुर्वसिष्ठः (ऋ० सं० ५, २, २८, १)"। रक्षसां परा शातयिता पराशर इन्द्रः।

"इन्द्रो यातूनामभवत् पराशरः (ऋ० सं० ५, ७, ८, १)"॥

(१२२) क्रिविर्दती। 'क्षविष्टिविच्छवियिव्विकिकीदिवि (उ० ४, ५६)'—इति विन्प्रत्ययो रिदादिश्च निपात्यते। ददातेः शतरि 'बहुलं छन्दसि (२, ४, ७३)'—इति शपो लुक्। 'उगितश्च (४, १, ६)'—इति ङीप्। क्रिविर्विकर्त्तनस्य दतो। रेफ उपजनः। शतघ्नासायुधविशेषे वर्त्तते। "यत्रा वो दिद्युद्रदति क्रिविर्दती (ऋ० सं० २, ४, २, १)"॥

(१२३) करूलती। कृत्तदन्तशब्दस्य करूलतीभावः। 'सुपां सुलुक् (७, १, ३८)'—इति सोर्लुक्। स्त्रीलिङ्गप्रतिरूपकमेतत्। 'तत्त्वः (निरु० ६, ३१)'—इति पुलिङ्गनिर्देशात् पूषोच्यत इति नियमः। भग इति पूर्व. पक्षः। तस्मात् 'अदन्तकः पूषा (शत० ब्रा० ८, ७३)'—इति च श्रुतिः। "वामं देवः करूलती (ऋ० सं० ३, ६, २२, ४)"॥

(१२४) दनः। दानमानस इत्यस्य दनसभावः। दानमानस इत्यर्थः। "दनो विश इन्द्र मृध्रवाचः (ऋ० सं० २, ४, १६, २)"॥

(१२५) शरारुः। ससुपसर्गार्थविशिष्टात् शृणातेः 'शृवन्द्योरारुः (३, २, १७३)'—इति ताच्छील्यादिषु विहित आरुप्रत्ययेन इच्छायां भवति। "शरारु रभिमन्यते (ऋ० सं० ८, ४, २, ४)"। संशिशरिपुः सशयिषुर्वा दीर्घनिद्रया हि मन्यते दुष्टेनातिशयेन हि भवति॥

(१२६) इदंयुः। इत्यनवगतम्। क्वचि मान्ताव्ययप्रतिषेधात्। 'इदं कामयमान उच्यते (निरु० ६, ३१)'। कर्म इदं सामान्येन प्रदर्शितम्। तथाहि लक्षितं धनादि तद् य इच्छति स इदंयुः। शयुः कियुः विशयुः इत्याद्यवगतानवगतक्यचन्तमात्रोपसङ्ग्रहार्थं निगमेषु पठितम्, न विशेषार्थमिति

निरुक्तकाराभिप्रायः। [1]अतएव च सामान्यविशेषयोरुदाहरणमिदम्। तथाच "वसूयवो वसुकामाः"—इत्यादि बहुधागतत्वाद् विशेषेण नेह किञ्चित् भाष्यकारेणोदाजहार। चकार्थतां दर्शयन्नाह—'अथापि तद्वदर्थे भाष्यते (निरु० ६, ३१)' प्रयुज्यत इत्यर्थः। तद्वदिति मतुप्प्रकृतिः सामान्येन निर्दिश्यते। तेन तद्वदर्थे मत्वर्थे इत्यर्थः। "ऋभुक्षुगुं व्यूर्थ्वं सुयुरिन्द्रः (ऋ० म० १, ४, ११, ४)"॥

(१२७) कीकटेषु। मन्त्रे भसस्यन्त इति तथैव निगमेषु पठ्यते। किं कृताः। किं क्रिया वा सन्तः कीकटाः किं कृताः किमर्थमुत्पादिताः अयज्ञाचाराः। अथवा यागदानादिभिः क्रियाभिः कृताभिः पिबत खादतेत्येवमभिप्राया नेश्च येषां ते किंक्रियाः। "किं ते कृण्वन्ति कीकटेषु गावः (ऋ० सं० ३, ३, २१, ४")। कीकटनामानार्यनिवासे देशे। कृपणा वा कीकटाः।

(१२८) बुन्दः। (१२९) हुन्दम्। भिन्द इति वा भयद इति वा भासमानो द्रवतीति वाक्यार्थपदवचनं विदारणभयदानभासमानद्रवणलक्षणानामर्थेषु सम्भवात् पदलक्षणवर्णसामान्याच्चेदमुक्तम्। 'हुड् सङ्घाते (धा० पा०)'। 'भूतृसुकृभ्यो दनुच्'—इति दनुप्रत्ययः। बवयोरभेदः। बाहुलकात् गुणाभावश्च। अनेकार्थत्वात् पूर्वोक्तार्थेष्वपि बोद्धव्यम्। बुन्दो वज्रम। "आधुर्बुन्दो हिरण्ययः (ऋ० सं० ६, ५, ३०, ६)"। "इन्द्रो बुन्दं स्वाततम् (ऋ० सं० ६, ५, ३०, १)"॥

हुन्देषु मनुविदारणभयदारणभयदानभासमानद्रवणरूपा अर्था सम्भवन्ति। प्रसिद्धत्वान्निगमो न प्रदर्शितः॥

(१३०) किः। करोतेः 'कृञो विधिः'—इति बाहुलकात् इन्-

(१) अग्निः। अग्राद्युपपदात् नयतेः 'सत्सूद्विष (३, २, ६१)' इत्यादिना क्विप्। पृषोदरादित्वात् अग्निः। यद्वा, 'वेञो वयि.'—इति बाहुलकादिनप्रत्ययोऽग्रशब्दस्य रेफाकारयोर्लोपश्च। अग्रणीः। मुख्यत्वञ्च 'अग्निर्हि देवानां सेनानीः'—इति श्रुतेः। अथ प्रथम यज्ञेषु कर्त्तव्येषु सादर्यन प्रणीयते। अङ्गोपपदाद्वा समर्थविशिष्टात् नयतेः पूर्ववदिकारलोपश्च। अङ्ग शरीरं यज्ञस्य, ततः सन्नमानः स्वयमेव अङ्गीभवन् हविषां पाककरणत्वेन साधनभाव प्रतिपाद्यमानो नयति। नञ्पूर्वात् क्नोपयतेः स्नेहनार्थात् किनप्रत्यये ककारनकारव्यतिरिक्तं लुप्यते, ककारस्य गकारापत्तिश्च। नञ्विशिष्टेन स्नेहनेन च तद्विपरीतं विरूक्षणञ्च लक्ष्यते, विरूक्षयतीत्यर्थं, दृश्यस्य पथादेः शोषणात् विरूक्षक इत्यर्थः। यद्वा, एतेरयनमित्यादौ दर्शनादकारः। अञ्जेर्नकारस्य दहेर्हकारस्य च निष्ठायां गकारापत्तिर्द्रष्टव्येति, तयोरन्यतरस्माद् गकार, नयतेः पूर्ववच्चि। इतश्च अञ्जनमित्यर्थं वसुप्रकाशकत्वाञ्च-कत्वेन वा नयतीत्यग्निः। "अग्निमीळे पुरोहितं (ऋ॰ सं॰ १, १, १, १)" ॥

(२) जातवेदाः। जातशब्दोपपदात् विदेर्विन्देर्विचारार्थाद्वा असुन्, जातानि सर्वाणि भूतानि वेद, लोकपालत्वात्। जाते जाते सर्वस्मिन् भूतजाते विद्यते। जात वेदो हविर्लक्षणं धनमैश्वर्यादि इतरद्वा यस्य सः। जातं वेदो विचारणं यस्य, वैश्वानरविद्ययापि च सर्वविचार इत्यर्थः। जातमात्र एव विद्योतते प्रज्ञानस्वभावत्वात्, जातं वेदः प्रज्ञानं वा यस्य। "प्र नूनं जातवेदसम् (ऋ॰ सं॰ ८, ८, ४५, १)" ॥

(३) वैश्वानरः। विश्वान् नरान् इतो लोकात् लोकान्तरं नयति। इदमर्थेन विश्वानराणां नेतृत्वेन सम्यञ्चो वा

(१४६ पृ०)। इह पौत्रे वर्त्तते। यद्वा, नुदगन्तस्य नपाद्भावः। पुत्रापेक्षया पौत्रैः सुतरां नुतो हि पौत्रः। तनोतेः 'हृभृशीतृचरित्सरितनिधनिमस्जिभ्य उः'। तन्वन्त्यस्यां पयआदिभोगाः इति तनूः गोनाम। अस्याः पयो जायते। पयस आज्यमिति। आज्यं तनूनपात्। अथवा तता अन्तरिक्षे इति तन्वः आपः। ताभ्य ओषधिवनस्पतयो जायन्ते। ओषधिवनस्पतिभ्योऽग्निर्जायते इति। अग्निस्तनूनपात्। "तनूनपात्पथ ऋतस्य यानान् (ऋ० सं० ८, ६, ८, २)"।

(४) नराशंसः। नरैः ऋत्विग्भिः प्रशस्यतेऽस्मिन् 'अन्येषामपि दृश्यते (६, ३, १३७)'—इति दीर्घः। यज्ञ उच्यते। नरैः प्रशस्यते स्तूयते इत्यग्निः। "नराशंसस्य महिमानमेषाम् (ऋ० सं० ५, २, १, २)"।

(५) इळ। इळाशब्दो व्याख्यातः पृथिवीनामसु (१० पृ०) "आजुह्वान ईड्यो वन्द्यश्च (ऋ० सं० ८, ६, ८, ३)"। "होतारमिळ मधुमं यजध्यै (ऋ० सं० २, ८, २२, ३)"।

(६) बर्हिः। व्याख्यातं महन्नामसु (२५१ पृ०)। बर्हिरेषोक्तं दर्भमयम्। यद्वा, 'बृही उद्यमने (भू० प०)'—इत्यस्मादिसिः; वबयोरभेदादुक्तम्। अग्निपक्षे परिवृढत्वाद् बर्हिः। "प्राचीनं बर्हिः प्रदिशा पृथिव्या (ऋ० सं० ८, ६, ८, ४)"।

(७) द्वारः। जवतेर्द्रवतेर्वा गतिकर्मणः वारयतेर्वा स्यात्। जवतेर्जकारस्य दकारः, द्रवतेः रेफलोपः, वारयतेरिडागमश्च निपातनात्। गम्यन्ते आभिर्यज्ञगृहम्, अनभिमतो हि ताभिरेव निवार्यते। अग्निपक्षे, ज्वाला आगम्यन्ते आभिः, शीतादिनिवारणम्। "देवीर्द्वारो बृहतीर्विश्वमिन्वा (ऋ० सं० ८, ६, ८, ५)"।

(८) उषासानक्ता । 'उच्छी विवासे (भू० प०)' 'वश कान्तौ (अदा० प०)'—'इषियुधिन्धिदसिश्याधूसूभ्यो मक्' 'इषिरञ्जिभूशृभ्यः कित्'—इति बाहुलकाच्छकारस्य शकारस्य वा षकारः। 'ग्रहिज्या (६, १, १६)'—इति सम्प्रसारणम्। उच्छति कान्ता वा उषा। नक्तशब्दो रात्रिवचनः। 'उषासोषसः (६, ३, ३१)'—इति उषसादेशः। द्विवचनस्याकारः। अग्निपक्षे, उषा दीप्तिः, तमसो विवासनात्, आहुतिस्तद्युक्ता अनक्त्यग्निमिति। "उषासानक्ता सदतां नियोनौ (ऋ० सं० ८, ६, ८, ६)" ॥

(९) दैव्याहोतारा। उभयत्राकारो द्विवचनस्य। आह्वातारौ देवानाम्। पार्थिवमध्यमावग्नी उच्येते। "दैव्याहोतारा प्रथमा सुवाचा (ऋ० सं० ८, ६, ९, १)" ॥

(१०) तिस्रोदेवीः। प्रथमार्थे द्वितीया। भारतीलासरस्वत्यः। अग्नायी पृथिवीलेति स्त्रियः इति प्रत्यक्षेण पठितायां अपि तिस्रोदेव्य. इति सामान्येन पाठात् पृथिवीस्थान भाष्यकारेण स्थापितम्। सरस्वती मध्यमस्थाना। "आनो यज्ञं भारती (ऋ० सं० ८, ६, ९, २)"—इति निगम. ॥

(११) त्वष्टा। तूर्णशब्दोपपदादश्नोतेस्तृन्निपात्यते। त्वष्टा मध्यमस्थानः। आप्रीत्वादिह समाम्नातः। तूर्णमश्नुते वायुरूपत्वात्। त्विषेर्देवतायामकारस्योपधाया अनिट्त्वञ्चेति वा दीप्तो ह्रस्वो वैद्युतत्वात्। त्वष्टा पूर्ववन्निपातनम्। अग्निपक्षेऽप्युपपद्यन्ते निर्वचनानि। "देवं त्वष्टारमिह यक्षि विद्वान् (ऋ० सं० ८, ६, ९, ३)"। "उभे त्वष्टुर्बिभ्यतुर्जायमानात् (ऋ० सं० १, ७, १, ५)" ॥

(१२) वनस्पतिः। वनानां पाता। वन्यते सेव्यते इति वनम्। 'पुंसि संज्ञायां घः (३, ३, ११८)'। पतिशब्दो व्याख्यात ईश्वरनामसु (२४० पृ०)। अग्निरन्तरनु प्रविष्टोऽपि

यतो न दहति अतः पातीति व्यपदिश्यते। पिबतेर्वैतद्रूपम्। यूपपक्षे वनस्पतिविकारत्वाद् वनस्पतिः। पारस्करादित्वात् सुट् (६, १, १५७)। "वनस्पतिः शमिता देवो अग्निः (ऋ० सं० ८, ६, ८, १०४)"। "वनस्पते मधुना दैव्येन (ऋ० सं० ३, १, २, १)"॥

(१३) स्वाहाकृतयः। स्वाहाशब्दो व्याख्यातो ब्राह्मणस्य (६० पृ०)। अत्र स्मरणार्थमुक्तमस्य प्रयाजस्य वक्ष्यमाणदेवता-प्रशंसनपरत्वात्, स्वाहास्वाहेत्येव पूर्वं कतिवारमुच्चारणं वा समीक्ष्यमाणदेवतानां ताः स्वाहाकृतय उच्यन्ते। "स्वाहाकृतं हविरदन्तु देवाः (ऋ० सं० ८, ६, ८, ५)"। "स्वाहाकृतीषु रोचते (ऋ० सं० २, ५, ८, ६)"॥

अश्वः (१)। शकुनिः (२)। मण्डूकाः (३)। अक्षाः (४)। ग्रावाणः (५)। नाराशंसः (६)। रथः (७)। दुन्दुभिः (८)। इषुधिः (९)। हस्तघ्नः (१०)। अभीशवः (११)। धनुः (१२)। ज्या (१३)। इषुः (१४)। अश्वाजनी (१५)। उलूखलम् (१६)। वृषभः (१७)। द्रुघणः (१८)। पितुः (१९)। नद्यः (२०)। आपः (२१)। ओषधयः (२२)। रात्रिः (२३)। अरण्यानी (२४)। श्रद्धा (२५)। पृथिवी (२६)। अप्वा (२७)। अग्नायी (२८)। उलूखलमुसले (२९)। हविर्धाने (३०)। द्यावापृथिवी (३१)। विपाट्छु-

**तुद्री (३२)। आर्त्नी (३३)। शुनासीरौ (३४)। देवीजोष्ट्री (३५)। देवीऊर्जाहुती (३६)। इति षट्त्रिंशत् पदानि ॥ ३ ॥**

(१) अश्वः। व्याख्यातोऽश्वनामसु (१२०पृ०)। "यद्वाजिनो देवजातस्य सप्तेः (ऋ० सं० २, ३, ७, २)"। "सूरादश्वं वसवो निरतष्ट (ऋ० सं० २, ३, ११, २)"।

(२) शकुनिः। शकेः क्विपि शक्। उन्नयतेः 'वेञो डित्,'—इति बाहुलकात् डिदिन्प्रत्यये उदस्तलोपः। शक्नोत्युन्नेतुमात्मानं शकुनिः ककारस्य जश्त्वाभावः। शक्नोत्युन्नयनादिक्रियाः कर्तुम्। "सुमङ्गलश्च शकुने भवासि (ऋ० सं० २, ८, ११, १)"॥

(३) मण्डूकाः। मज्जेः 'शलिमण्डिभ्यामूकन् (उ० ४, ४२)'—इति बाहुलकादूकनि जश्त्वचुत्वाभ्यां मज्जूका इति प्राप्ते छान्दसत्वात् जकारस्य डकारापत्त्या अन्त्यात् पूर्वस्य नुमि ष्टुत्वम्। निमज्जन्ति हि ते जले। मदतेस्तृप्त्यर्थात् मन्दतेर्वा मोदत्यर्थात् पूर्ववदूकञ् रूपसिद्धिश्च। नित्यमदत्वात्, नित्यह सत्वात् नित्यहृष्टत्वाद्वा मण्डूकाः। मण्डतेर्वा यथाप्राप्ते ऊकनि मण्डूकाः। यद्वा, मण्डो मदतेः। 'गेहे कः (३, १, १४४)'—इति बाहुलकात् कप्रत्यये रूपसिद्धिश्च मण्ड उदकम्। इष्यन्ति हि तत्र स्नानपानावगाहार्थिनः। मण्डे ओको निवास एषां मण्ड-शब्दादोकशब्दाच्च मण्डूकाः। "प्र मण्डूका अवादिषुः (ऋ० सं० ५, ७, ३, १)"॥

(४) अक्षाः। अश्नोतेः 'अशेर्देवने (उ० ३, ६२)'—इति सप्रत्ययः। अश्नुवन्ते व्याप्नुवन्ति स्वल्पत्वेनानुदेवितार।

यतिश्याम् वल्गेभिः परस्परमिति वा। "सुचैर्मा दीर्घश्रुत् श्रुधिमित् क्रुपस्व (ऋ० सं० ७, ८, ५, ३)" ॥

(५) ग्रावाणः। व्याख्यातः पर्वतनामसु (४८ पृ०)। "ग्रावभ्यो वाचं वदता वदद्भ्यः (ऋ० सं० ८, ४, ८, १)" ॥

(६) नाराशंसः। नरान् शंसतीति कर्मोपपदेऽण्, 'अन्येष्वपि दृश्यते (६, २, १३७)'। ततः प्रज्ञादित्वात् स्वार्थिकोऽण्। नराशंस एव नाराशंसः। मन्त्रोऽत्राभिधेयः। "अमन्दान्त्स्तोमान् प्र भरे मनीषा (ऋ० सं० २, १, ११, १)" ॥

(७) रथः। रंहतेर्गतिकर्मणः। 'हनिकुषिनीरमिकाशिभ्यः क्थन् (उ० २, २)'—इति क्थन्, बाहुलकाद्धकारलोपश्च। गच्छत्यनेन। स्थिरतेर्विपरीतधातुः। विपरीतात्त्वर। 'पुंसि संज्ञायां घः (३, ३, ११८)'। सकारिकारयोर्लोपः। हठगठितत्वात् स्थिरो हि सः। यद्वा, रमतेस्तिष्ठतेश्च द्विधातुजं रूपम्। रममाणो विद्वान्योऽस्मिंस्तिष्ठति रथी। यद्वा, रमतेरेव यथाप्राप्तः क्थन्। रमणीयो हि रथः। रंहतेर्वा शब्दार्थात् पूर्वसूत्रेण बाहुलकात् क्थनि सकारलोपः। भवति हि तस्मादागच्छत उपलब्धिः। "तना रथमुप शग्मं मदेम (ऋ० सं० ५, १, २०, ४)" ॥

(८) दुन्दुभिः। शब्दानुकरणनिमित्तकमेतन्नाम। द्रुमशब्दस्य वा रेफान्तलोपः। भिदेर्वाद्यन्तविपर्यय उकारश्चोपजनः। दुन्दुभ्यतेर्वा शब्दधातोर्वधकर्मण, इन्। नादयति ह्यसौ युद्धसमये। "स दुन्दुभे सजूरिन्द्रेण देवैः (ऋ० सं० ४, ७, ३५, ४)" ॥

(९) इषुधिः। इषवो निधीयन्तेऽस्मिन्। 'कर्मण्यधिकरणे च (३, ३, ९३)'—इति किः। "इषुधिः सङ्काः पृतनाश्च सर्वाः" ॥

(१०) हस्तघ्न.। हस्ते हस्तसमीपे स्थितो हन्यते ज्यया शरपुङ्खेन वा। 'घञर्थे कविधानम् (३, ३, ५८ वा० २)'—इति क। हस्तघ्नो विश्वा वयुनानि विद्वान् (ऋ० सं० ५, १, २१, ४)" ॥

(११) अभीशवः। व्याख्याता रश्मिनामसु (२७पृ०)। निगमश्च दर्शितः ॥

(१२) धनुः। धन्वतेर्गत्यर्थाद् वधार्थाद्वा 'अर्तिपृवपियजितनिधनितपिभ्यो नित् (उ० २, १०७)'—इति बाहुलकादुसिः प्रत्ययो वकारलोपश्च। धनिर्मारणार्थ इति क्षीरस्वामी। यथाप्राप्त उसिः। धन्वन्त्यपनयन्त्यस्मादिषवः, घ्नन्ति वा। "धनुः शत्रोरपकामं कृणोतु (ऋ० सं० ५, १, १८, २)" ॥

(१३) ज्या। जयतेर्जिनातेर्वाऽऽक्षर्णोतेर्ज्यायार्द्वा 'अघ्न्यविध्यशिक्य'—इत्यादिना यक्प्रत्ययो धातोर्जकारभावश्च निपात्यते। 'अघ्न्यादयश्च (उ० ४, १०८)'—इति निपातनम्। जयसाधनं हि ज्या। "धन्वज्या इयं समने पारयन्ती (ऋ० सं० ५, १, १८, ३)" ॥

(१४) इषुः। इषतेर्गतिकर्मणो वधार्थाद्वा 'इषेः किच्च (उ० १, १३)'—इति उप्रत्ययः। गच्छति शत्रून्, हन्ति वा तान्। "तन्नाशमश्रुमिषवः शर्म यंसन् (ऋ० सं० ५, १, २१, १)" ॥

(१५) अश्वाजनी। अश्वा अज्यन्ते क्षिप्यन्ते प्रेर्यन्तेऽनया। ल्युट्, 'वा यौ (२, ४, ५७)'—इति वीभावविकल्पः, टित्वात् ङीप्। अश्वानामजनी अश्वाजनी कशोच्यते। "अश्वाजनि प्रचेतस. (ऋ० सं० ५, १, २१, ३)" ॥

(१६) उलूखलम्। उरु विस्तीर्णं खलं सुखमस्य, ऊर्ध्वं वा

इकारलोपो द्रष्टव्यः। "या ओषधीः पूर्वा जाता (ऋ० स० ८, ५, ८, १)"॥

(२३) रात्रि। प्रोपसर्गाद् विधिविहान मन्त्र्योतस्त्वर्थात् रमतेः 'राशदिभ्यां त्रिप् (उ० ४, ६७)'—इति बाहुलकात् त्रिप्प्रत्ययो मकारस्याकारस्य रातेर्वा त्रिप्प्रत्ययो यथाप्राप्त। प्ररमयन्ति भूतानि नक्तञ्चारीणि, उपरमयन्ति दिवाचराणि स्वव्यापारेभ्यः, प्रदीयन्ते ऽवश्यामवश्यायं भूयसेन। "आ रात्रि पार्थिवं रजः (य० वा० स० ३४, ३३)"॥

(२४) अरण्यानी। अपपूर्वात् रिणातेर्गतिकर्मणो नञ्पूर्वाद्रमतेर्वा अघ्न्यादित्वात् (उ० ४, ११८) ञन्प्रत्यये रूपसिद्धिर्निपात्यते। अपार्णमपगतं ग्रामात् अरमणं वा, न हि तद्रमयति अरण्यं वनम्। अरण्यपालयित्री अधिदेवता काचित् नेरुक्ताः। महदरण्यमिति वैयाकरणाः। 'हिमारण्ययोर्महत्त्वे (४, १, ४९, वा० १)'—इति विधीयते। "अरण्यान्यरण्यानि (ऋ० स० ८, ८, ४, १)"॥

(२५) श्रद्धा। श्रत् सत्यम्, तस्मिन् धीयते। तथाच मन्त्रः "अश्रद्धामनृते दधातन श्रद्धां सत्ये प्रजापतिः"—इति। 'आतश्चोपसर्गे (३, ३, १०६)'—इत्यङ्। 'श्रच्छब्दस्योपसङ्ख्यानम्' इत्युपसर्गसञ्ज्ञा।' धर्मार्थसुखापवर्गेषु यथाशास्त्रमधिकृतः पुरुषस्य कर्मानुष्ठानहेतुभावप्रख्यानात् बुद्ध्यधिदेवता श्रद्धा। "श्रद्धयाग्निः समिध्यते (ऋ० स० ८, ८, ९, १)"॥

(२६) पृथिवी। 'प्रथ प्रख्याने (भू० आ०)'। 'प्रथेः षिवन् सम्प्रसारणञ्च (उ० १, १४९)'। 'षिद्गौरादिभ्यश्च (४, १, ४१)'। पृथ्वीत्यर्थः। "स्योना पृथिवि भव (ऋ० स० १, २, ६, ५)"॥

(२७) अप्वा। व्याख्यातं नैगमे सनिगमम्॥

(२८) अग्नायी। अग्नेः पत्नी। 'वृषाकप्यग्निकुसितकुसिदानामुदात्तः (४, १, ३७)'—इत्यैकारादेशः, पुंयोगलक्षणो ङीष्। "अग्नायीं सोमपीतये (ऋ० सं० १, २, ६, २)"॥

(२९) उलूखलमुसले। उलूखलं व्याख्यातम्। मुहुःशब्दोपपदात् सर्तेः 'पुरूलोरलसुमलकुवल'—इत्यादिना कलप्रत्ययो टिलोपो मुहुःशब्दस्य मुसभावश्च निपात्यते। तत्-सिध्योत्सिध्य निपातनात् मुहुः सरणं मुसलं द्विवचनम्। "आयजी वाजसातमा (ऋ० सं० १, २, २६, २)"। प्रवेधपत् स्तुतिरस्त्यपि लिङ्गयोगे॥

(३०) हविर्धाने। सोमलक्षणानि हवींषि विधीयन्ते ययोः। "आ वामुपस्थमद्रुहा (ऋ० सं० २, ८, १०, ६)"। पूर्ववदुदाहरणत्वम्॥

(३१) द्यावापृथिवी। दिवो द्युत्यर्थात् 'दिवेर्डिविः'—इति डिविप्रत्ययः। द्योतत इति द्यौः। पृथिवी व्याख्याता (८ पृ०)। द्यौश्च पृथिवी च 'दिवो द्यावा (६, ३, २९)'—इति द्यावादेशः। 'वाच्छन्दसि (६, १, १०६)'—इति पूर्वसवर्णः। "द्यावा नः पृथिवी इमम् (ऋ० सं० २, ८, १०, ५)"॥

(३२) विपाट्छुतुद्री। 'पद गतौ (दि० आ०)' 'पश बाधनस्पर्शनयोः (चु० प०)' विपूर्वः। 'आप्लृ व्याप्तौ (स्वा० प०)' विप्रपूर्वः। णिजन्तात् 'क्विब्वचि (३,२,१७८,वा० १)'—इत्यत्र 'प्राक्प्रत्ययनिर्देशादिष्टसिद्धिः'—इत्युक्ते क्विपि प्रशब्दस्य रेफलोपादि। विविधं कूलपाटनात्, विपाशनात्। अपुत्रस्योद्भूततमोहत्तेर्मुमूर्षोर्वसिष्ठस्य कण्ठे शिलाबन्धने साधनभूताः पाशा अस्याम्। विविधदेशप्रापणाद्वोदकस्यापनत्वात् विपाट्। शुतुद्री शुद्राविणीत्यर्थः। आशुतुन-

द्राविभीशब्देभ्यो वा। आशुतुन्ने प्रतोदे द्रवतीति शुतुद्री। विपाट् च शुतुद्री च विपाट्छुतुद्री पूर्वसवर्णः। "विपाट्छुतुद्री पयसा जवेते (ऋ० सं० ३, २, १२, १)"।

(३३) आर्त्नी। अर्त्तेः रिपतेर्वा 'वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नि. (उ० ४, ५१)'—इति बाहुलकात् निप्रत्ययो धातोरासंभावश्च। 'कृदिकारात् (४,१,४५, वा० १)'—इति ङीप्। गतौ ज्यया ऋच्यमाणे सङ्गच्छेते हिंसासाधने वा भवत.। "आर्त्नी इमे विस्फुरन्ती अमित्रान् (ऋ० सं० ५, १, १८, ४)"।

(३४) शुनासीरौ। शुशब्दार्थविशिष्टात् 'शुन गतौ (तु० प०)'—इत्यस्मात् इगुपधलक्षण. कः (३, १, १३५)। क्षिप्रं शाच्छत्यन्तरिक्षमिति शुनो वायु। यद्वा, शुशब्दोपपदान्नयतेर्गतिकर्मणः 'अन्येष्वपि दृश्यते (३, २, १०१)'—इति ड। भाष्ये तु शु एतदर्थतो निर्वचनं प्रायेण। सर्त्तेः 'डिपडीरवानीरगभीरगम्भीरकुम्भीरशरीरकाश्मीरजम्बीरकीरतीरादय' —इति ईरन्प्रत्ययटिलोपश्च निपात्यते। सदा सरणात् शीर आदित्यः। शुनश्च शीरश्च 'देवताद्वन्द्वे च (६, ३, २६)'—इत्यङ्। "शुनासीराविमा वाचं जुषेथाम् (ऋ० स ३, ८, ८, ५)"।

(३५) देवीजोष्ट्री। देवशब्दः पचाद्यजन्तः। देवडिति पाठात् 'टिड्ढाणञ् (४, १, १५)'—इति ङीप्। जुषतेष्ट्रन्प्रत्ययः (उ० ४, १५४)। षित्त्वात् ङीष् (४, १, ४१)। देव्यौ जोषयित्र्यौ। पूर्वसवर्णः। द्यावापृथिव्यौ, अहोरात्रे वाभिधेये। सस्यसमे इति कात्थक्य। सस्यं व्रीहि॰, समा संवत्सरः। "देवी जोष्ट्री वसुधिती ययो'. (निरु० ८, ४२)"।

(३६) देवी ऊर्जाहुती। ऊर्क्शब्दो व्याख्यातोऽन्ननामसु

(१०४ पृ०)। आह्वयतेः क्विपि 'वचिस्वपि (६, १, १५)'—इति सम्प्रसारणम्, 'हलः (६, ४, २)'—इति दीर्घाभावो व्यत्ययेन। ऊर्क्शब्दात् हेतौ तृतीया। ऊर्जा हेतुभूतया आह्वातव्ये। ऊर्क् इत्यत्र 'सावेकाचः (६, १, १६८)'—इति विभक्तेरुदात्तत्वम्, आहुतिशब्दोऽपि 'तादौ च निति कृत्यतौ (६, २, ५०)'—इति आद्युदात्तः, 'एकादेश उदात्तेनोदात्तः (८, २, ५)'। "देवी ऊर्जाहुती इषमूर्जमन्या वक्षत् (य० वा० सं० २१, ५२)"॥

इति पृथिवीस्थानदेवताः॥ १॥

वायुः(१)। वरुणः(२)। रुद्रः(३)। इन्द्रः(४)। पर्जन्यः(५)। बृहस्पतिः(६)। ब्रह्मणस्पतिः(७)। क्षेत्रस्य पतिः(८)। वास्तोष्पतिः(९)। वाचस्पतिः(१०)। अपां नपात्(११)। यमः(१२)। मित्रः(१३)। कः (१४)। सरस्वान् (१५)। विश्वकर्मा (१६)। तार्क्ष्यः (१७)। मन्युः (१८)। दधिक्राः (१९)। सविता (२०)। त्वष्टा (२१)। वातः (२२)। अग्निः (२३)। वेनः (२४)। असुनीतिः (२५)। ऋतः (२६)। इन्दुः (२७)। प्रजापतिः (२८)। अहिः (२९)। अहिर्बुध्न्यः (३०)। सुपर्णः (३१)। पुरूरवाः (३२)। इति द्वात्रिंशत् पदानि॥ ४॥

(१) वायु। 'वा गतिगन्धनयोः (धातु० प०)'। 'कृवापाजिमिस्वदिसाध्यशूभ्य उण् (उ० १, १)'। 'आतो युक् चिण्कृतोः (७, ३, ३३)'। यद्वा, वेतेर्गतिकर्मणो बाहुलकादुण्

यद्वा, 'छन्दसीणः (उ० १, २)'—इत्युणि वकारोपजनः । गच्छ-त्यन्तरिक्षे । "वायवा याहि दर्शतेमे (ऋ० सं० १, १, ३, १)" ॥

(२) वरुणः । 'वृञ् वरणे (स्वा० उ०)' । कृवृदारिभ्य उनन् (उ० ३, ५०) । अन्तरिक्षे उदकमावृणोति । "नीचीनबारं वरुणः कवन्धम् (ऋ० सं० ४, ४, ३२, ३)" ॥

(३) रुद्रः । रौतेः क्विपि । रुवच्छब्दं करोति । 'आतोऽनु-पसर्गे कः (३, २, ३)' । यो रवम् एति, रौतीति वा' गम्यते । रोरूयमाणोऽत्यर्थं शब्दं कुर्वन् मेघोदरस्थो द्रवतीति, रोरूय-माणशब्दपूर्वाद् द्रवतेर्वा 'रोदेर्णिलुक् च (उ० २, २०)'—इति रक् । स हि गर्जनव्याजेन रोदयति रुदेरेव वा णिजन्तात् बाहुलकाद्रक् । 'इन्द्रः किं पितरं प्रजापतिमियुना चिच्छेद तमनुशोचन्ररुदद् यदरुदत्तद्रुद्रस्य रुद्रत्वम् (ब्र० आ० ३, ८, ४)'—इति काठकम् । 'यदरोदीत् तद्रुद्रस्य रुद्रत्वम्'—इति हारिद्रवकम् । "इमा रुद्राय स्थिरधन्वने गिरः (ऋ० सं० ५, ४, १२, १)" ॥

(४) इन्द्रः । इराशब्द उपपदे दृणातेर्दधातेर्दारयतेर्वा 'ऋज्रेन्द्राग्रवज्रविप्र (उ० २, २८)'—इति रक्प्रत्ययान्तो निपा-त्यते । निपातनाद्रूपसिद्धिर्बोध्या । इरा अन्नमनेन सम्ब-न्धाद्वा तद्धेतुभूतक वस्तु लक्ष्यते । तेन वललक्षितलक्षणया तदाधारभूतो मेघः । इरां मेघं धारात्मना दृणाति विदार-यति । बीजं व्रीह्यादि तथासौ वृष्टिप्रदानेन विदारयति । अङ्कुरोद्भेदनाभिकाशय विदारणम् । इरामन्नं तद्ददाति वा । इरा दधाति धारयति वा । इन्द्रावुपपदे द्रवतेः रमतेर्वा निपातनम् । इन्दवे द्रवति गच्छति सोमं पातुमित्यर्थः । इन्दौ रमतेऽतिप्रियत्वात् नान्यत्र । इन्धेर्वा निपातनम् ।

इन्धे दीपयति शरीरमध्यवर्त्ती पञ्चवृत्तिः प्राणो वायुः। शरीरभूतादि इध्यते वा प्राणैः। शरीरमध्यवर्त्ती प्राणभावेन चेतनसञ्ज्ञकः। प्राणायामादिभियोगबलेन वा सम्यगाभिमुख्येन दीपयति आत्मोपासकाः। इदमुत्पादीकरोति पश्यति वा इन्द्रः। इदं सर्वं जगद् वृष्टिप्रदानद्वारेण करोति लोकपालत्वात्, यस्य सर्वस्य शुभाशुभकर्मणो द्रष्टा वा। इदुपपदे दारयतेर्द्रावयतेर्वा इन्द्रपदम्। इताश्च शत्रूणां दारयिता द्रावयिता च। यद्वा, इताश्च यज्वनामादरयिता च। सर्वत्र निपातनाद्रूपसिद्धिः। "सुहान्तमिन्द्र पर्वतं वियद्दः (ऋ० सं० ४, १, १२, १)"॥

(५) पर्जन्यः। तृपेरन्तर्णीतण्यर्थात् क्विपि तर्पयतीति तृप्। जनहितो जन्यः हितार्थे यत्। तृप् चासौ जन्यश्चेति तृप्शब्दस्य परभावः। परशब्दोपपदात् जायतेर्जनयतेर्वा पृषोदरादित्वात् यत्, नुम्, परशब्दान्तो लोपश्च निपात्यते। परः प्रकृष्टो जेता जनयिता वा। प्रशब्दोपपदादर्जयतेर्वा पृषोदरादित्वान्निपातनत्वेन पर्जन्यः प्रकर्षेणोपार्जयिता सङ्ग्रहीता रसानाम्। "यत् पर्जन्यस्तनयन् हन्ति दुष्कृतः (ऋ० सं० ४, ४, २७, २)"॥

(६) बृहस्पतिः। बृहच्छब्दो व्याख्यातो महन्नामसु (२४७ पृ०) पतिशब्दश्च ईश्वरनामसु (२४० पृ०)। पत पिबतेरपि बाहुलकात् पतिः। बृहतः सोमरसस्य वाय्वात्मना पाता पालयिता रक्षिता वा। पिता रक्षयिता महतो जगतो वा। "बृहस्पतिर्निरवेणा विकृत्य (ऋ० सं० ८, २, १८, २)"॥

(७) ब्रह्मणस्पतिः।

(८) क्षेत्रस्य पतिः। 'क्षि निवासगत्योः (तु० प०)'। 'गुधृवीपचिवचियमिसदिक्षदिभ्यस्त्रन् (उ० ४, १६२)'—

इति वनप्रत्ययः । निवसन्ति हि येन च हेतुभूतेन, तस्य धाता । "चेर्वस्य पतिना युयम् (ऋ० सं० ३, ८, ८, १)" ॥

(८) वास्तोष्पतिः । 'वस निवासे (भू० प०)' 'वसेस्तुन् णिच्च इति । सामर्थ्याच्च वास्तव्यन्तरिक्षम्, तस्य पाता विभुत्वेन । "अमी वृत्रा वास्तोष्पते (ऋ० सं० ५, ४, २२, १)" ॥

(१०) वाचस्पतिः । प्राणात्मेन्द्रः । अतः प्राणस्य वायूपतयाध्यवस्थानात् प्राणो वाचस्पतिरिति व्यपदिश्यते । "पुनरेहि वाचस्पते (अथ० सं० १, १, २)" ॥

(११) अपांनपात् । तनूनपात् व्याख्यातः (१७५पृ०) । "अपांनपादाश्वर्हन्मतीरुपोहुाः ( ऋ० सं० ७, ७, २४, ४)" ॥

(१२) यमः । मध्यस्थानो वायुः । यच्छति प्रयच्छति स्तोतृभ्यः कामानि । पचाद्यच् । "यमं राजानं हविषा दुवस्य (ऋ० सं० ७, ६, १४, १)" ॥

(१३) मित्रः । प्रमीतात्त्रायणात् भायते । 'सुपि स्थः (३, २, ४)'—इत्यत्र सुपीति योगविभागात् प्रमीतशब्दस्य मित्रावः । यद्वा, 'डुमिञ् प्रक्षेपणे (स्वा० उ०)' । यद्वा, 'पिवि मिवि सेचने (भू० प०)' । सम्मिन्वानः सम्यक् दृष्टिं प्रक्षिपन् सम्यक् सिञ्चन् वा द्रवत्यन्तरिक्षे । मिन्वानशब्दस्य मित्रावः, द्रवतेः डप्रत्ययान्तस्य त्रभावः । 'ञि मिदा स्नेहने (भू० आ०)' अन्तर्णीतण्यर्थः । 'अमिचिमिमिदिशसिभ्यः कित् (उ० ४, १५८)'—इति क्त्रप्रत्ययः । णिजन्ताद्वा बाहुलकाद्रूपसिद्धिः । सर्वमस्मान्युदकेन स्नेहयति । "मित्रो जनान्यातयति ब्रुवाणः (ऋ० सं० ३, ४, ५, १)" । 'ञिमिदा स्नेहने (भू० आ०)' अन्तर्णीतण्यर्थः ॥

(१४) कः । कमेः क्रमेर्वा 'अन्येष्वपि दृश्यते (३, २, १०१) —इति डप्रत्यये क्रमते रेफलोपो बाहुलकात्, 'प्रजापतिरका

किं पुनस्तत् प्रयोजनम् ? इति। कथं नामाल्पमप्यवदानमात्रं हुतं देवताहृत्तिसमर्थं बहु कुर्य्यादशान्तमपि च यद् विगुणं यज्ञस्य किञ्चित् तत्क्षमयित्वा सम्पूर्णमेव कुर्य्यात् ? इति, तच्चोभयमपि यथाशास्त्रमेवास्माकं त्वया कृतम्, अत इदानीं परिसमाप्ते एतस्मिन् यज्ञे प्रत्यभाष्यसे अस्माभिः,—'ऋधगयाः' त्वम्, अल्पमपि हुतम् अस्माभिः हविः, 'अथक्' एव सत्यमेव, देवतातृप्तिसमर्थं बहु कुर्वन् 'अयाः' त्वं यागमकार्षीरित्यर्थः। किञ्च, 'ऋधगुताशमिष्ठाः' अपि च यदपि किञ्चिद्विगुणम् अकार्ष्म, वयमेतस्मिन् यज्ञे, तदपि सर्वमेव सम्पूर्णं सगुणमेव कुर्वन्, पापमस्य यज्ञस्य अशमिष्ठाः स्विष्टकृद्रूपेण शमितवानसि। यस्त्वमेतदकार्षीरस्माकमेतस्मिन् यज्ञे, तं, त्वां ब्रवीमि,—एतदेव मयैतेषां कर्त्तव्यमित्येतत् 'विद्वान्' 'प्रजानन्' प्रकर्षेण जानन् अस्माकमात्मन उपरि भक्तिं पुनः पुनः 'उपयाहि' उपागच्छ 'यज्ञम्'॥ एवं तावदेकेषाम् "ऋधगया., ऋधगुताशमिष्ठाः"—इत्येतौ द्वावपि "ऋधक्"-शब्दौ ऋध्नोत्यर्थाविव। एतस्मिन्नर्थे, ऋधक्शब्दस्य पृथग्भावार्थत्वे "यदिन्द्र दिवि पार्य्ये यदृधक्"—इत्येतदुदाहरणम्। अन्ये पुनर्मन्यन्ते,—"ऋधगया", ऋधगुताशमिष्ठाः"—इत्येतयोरेव ऋधक्शब्दयोः पूर्वः पृथग्भावार्थः, उत्तर ऋध्नोत्यर्थ इति। तदेतदुपपद्यते, मिथ्यास्वपि हवींषि हुतानि सन्ति, त्वमग्ने ऋधक् पृथगेव कृत्वा ततो देवानयाक्षीर्न ते सम्मोहोऽस्तीत्यभिप्रायः। 'ऋधगुताशमिष्ठाः'—इत्येष यथाव्याख्यात एव। पूर्वस्त्वर्थः साधीयान्, यत्र द्वावप्येतावृध्नोत्यर्थाविव,—"ऋधगया" "ऋधगुताशमिष्ठा"—इति। किं कारणम् ? "यत्राप्यृध्नोत्यर्थे दृश्यते" —इति एतस्य मन्त्रस्य भाष्यकारेण ततोऽयमुपात्तो निगमः,—

“अर्धगया ऋषभगुणार्थमिष्टा।”—इति, एवञ्च. निरुक्तम्—“ऋषभ यवयाचीकृषि वरवर्णमिष्टाः”—इति। तस्मात् वाक्येनाहृत्योत्यर्थावित्येतदेव साधीयः॥

“अस्याः (६१)”—इति, “अस्य (६२)”—इति च। पदद्वय स्त्रीपुंसविषयम्, स्वरकृतात् विशेषात् प्रधानाभिधायि वा भवति। आह,—कथम्? इति उच्यते,—“उदात्तं प्रथमादेशे”। प्रथम इति मुख्यनाम, मुख्यं प्रधान उच्यते, प्रधानं कञ्चिदर्थमभिदधत् एतद् द्वयमुदात्तं भवति। “अनुदात्तमन्वादेशे”। प्रधानमर्थमनु यो वर्तते गुणभावेन तस्यैतत् पदद्वयमन्वादेशे वर्तमानमनुदात्तं भवति। आह,—कस्मादेतत् पुनरुदात्तं प्रधाने वर्तमानमनुदात्तमप्रधाने? इति। उच्यते,—लोकेऽपि हि यत् “तीव्रार्थतरम्” उत्कृष्टार्थप्रधानतरं तत् “उदात्तम्”—इति प्रसिद्धम्, तद्यथा,—उदात्तमेतत् कुलमिति। “अल्पीयोऽर्थतरमनुदात्तम्” अल्पीयसार्थेन यद्युक्तं भवति तदनुदात्तमुच्यते, अप्रधानमित्यर्थः। उदाहरणैरेवानयोर्विभागं दर्शयति,—“अस्या ऊ षु ण उप सातये भुवोऽहेळमानो ररिवाँ अजाश्व श्रवस्यतामजाश्व। ओ षु त्वा ववृतीमहि स्तोमेभिर्दस्म साधुभिः नहि त्वा पूषन्नतिमन्य आघृणे न ते सख्यमपह्नुवे॥”—इति (ऋ० सं० २, २, २, ४)। पदच्छेपस्यार्थम्। अतिच्छन्दा। ‘ऊ’—इति, ‘सु’—इति, ‘न’—इति पदानि। ‘अस्याः’ “अस्मै” ‘सातये’ लब्धये। कथं नाम वयमर्थमभिप्रेतं लभेमहि? इत्येतमर्थमुद्दिश्य, हे ‘पूषन्!’ अस्माकं सुष्ठु ‘उप’ समीपे ‘भुवः’ भव। त्वयि सन्निकृष्टे त्वदनुग्रहादेतमर्थं लभेमहीत्यभिप्रायः। कथं पुनरुपभव? ‘अहेळमानः’ अक्रुध्यन्, सर्वो ह्यभ्यर्थ्यमानः क्रुध्यतीत्यभिप्रायः। ‘ररिवान्’ दानवान्, दानाभिप्रायसंयुक्तेन

चेतसा उपभव। 'अजाश्व' "अजनाश्व" गमनाश्व, छागाश्व वा 'अश्वस्यताम्' अस्माकं धनमिच्छतां भव, "अजनाश्व" छागाश्वेत्यर्थः। किञ्च, 'ओषु त्वा वहतीमहि'। 'आ' 'उ' 'सु'—इति पदानि। 'आ वहतीमहि' त्वां सुष्ठु अभिमुख्येन आत्मनो वर्त्तयामहे। केन? 'स्तोमेभिः' स्तोत्रैः। 'स्तोत्रैः। 'दस्र' हे दस्र! दर्शनीय! अथवा दान्त! साधुभिः शोभनैरित्यर्थः। किञ्च, 'न हि त्वा' नैव त्वां दर्शनीयम् अतीत्य साधुतरां कञ्चिदप्यन्यामहं देवतां मन्ये, हे 'आघृणे' आगतदीप्ते! त्वद्भक्त एवाहमस्मीत्यभिप्रायः। किञ्च, 'न ते' न चाहं तव 'सख्यं' सखिभावं कदाचिदपि 'अपह्नुवे' कृतघ्नो ह्यहमित्यभिप्रायः। एवमत्र स्तुतिः प्रधानेति कृत्वा "अस्याः"—इत्येतत् पदमन्तोदात्तम्। अन्तोदात्तमपि च सदुदात्तमित्युक्तं भाष्यकारेण, एकदेशस्योदात्तत्वात्॥

"अथ" पुनर्यस्मिन् "अनुदात्तम्" एतत् पदं गुणभूतार्थाभिधायि भवति। तस्यैव निगमः,—"पुनः पत्नीमग्निरदादायुषा सह वर्चसा। दीर्घायुरस्या यः पतिर्जीवाति शरदः शतम्॥"—इति (ऋ० सं० ८, ३, २७, ४)। सूर्याया आर्षम्। विवाहे विनियुक्ता। पित्रा पूर्वमेतां दत्तां सतीं कन्यां पत्नीं पुनरग्निरदात्, 'आयुषा सह वर्चसा' तेन सह एतस्मिन् वैवाहिके कर्मणि अग्निसन्निधिसंस्काराद् भार्य्यात्वमुपजायते इत्येतदपेक्ष्य पूर्वदानात् पुनर्दातृत्वमुच्यते। तदेवमस्या दत्ताया एतदाशास्महे,—'योऽस्याः पतिः' सः 'दीर्घायुः' अस्त्विति। यतो विशेषयन् ब्रवीमि,—"जीवतु सः शरदः शतम्"—इति। शरदि दुर्जीवाः, रोगभूयस्त्वात्, अतएव माशास्यते शरच्छतं जीवत्विति॥ एतस्मिन् मन्त्रे भर्त्तृकन्यासंयोगे सति भर्त्तैव प्रधानम्, तस्य ह्यायुराशास्यते। तस्य

लक्षणार्था पत्नौ। तस्मात् "दीर्घायुरस्या य पतिः"—इति, एतदनुदात्तम्॥

निगमप्रसङ्गमुच्यते,—"शरत्" "अस्यां" हि "शृताः" पक्वाः "ओषधयो भवन्ति"—इति, "शीर्णा आप इति वा" वर्षासु हि प्रवृद्धानि स्रोतांसि शरदि विशीर्य्यन्ते। "अस्य—इति" एतत पद पुंविषयम् यद्वत्स्त्र "अस्या—इत्येतेन" स्त्रीविषयेण पदेनैव "व्याख्यातम्"॥४ (२५)॥

अस्य वामस्य पलितस्य होतुस्तस्य भ्राता मध्यमो अस्त्यश्नः। तृतीयो भ्राता घृतपृष्ठो अस्यात्रापश्यं विश्पतिं सप्तपुत्रम्॥ अस्य वामस्य वननीयस्य पलितस्य पालयितुर्होतुर्ह्वातव्यस्य तस्य भ्राता मध्यमो अस्त्यशनो भ्राता भरतेर्हरतिकर्मणो हरते भागं भर्तव्यो भवतीति वा तृतीयो भ्राता घृतपृष्ठो अस्यायमग्निस्तत्रापश्यं सर्वस्य पातारं वा पालयितारं वा विश्पतिं सप्तपुत्रं सप्तमपुत्रं सर्पणपुत्रमिति वा सप्त सृप्ताः सङ्ख्या सप्तादित्यरश्मय इति वदन्ति॥५ (२६)॥

यदेवोक्तम "उदात्त प्रथमादेशे, अनुदात्तम् अन्वादेशे"—इति तदेवात्रापि लक्षणमित्यभिप्राय.। उदाहरणमात्र प्रदर्श्यते,—"अस्य वामस्य०—०सप्तपुत्रम्"। अस्यवामीयमेवेदं सूक्तम। दीर्घतमस आर्षम्। तार्त्तीयसवने महाव्रते वैश्वदेवे शस्त्रे शस्यते। 'अस्य' सूर्यस्य 'वामस्य' "वननीयस्य" स्तुतिभि, 'पलितस्य' "पालयितु" अय हि सर्व-

मेवेदं जगत् पालयति। 'होतुः' "ह्वातव्यस्य" आह्वाना-र्हस्य। आह,—तस्य किम्? इति। उच्यते,—योऽय-मेवलक्षणः 'तस्य' 'भ्राता' "भागहर्त्ता" "भर्त्त्यो वा" छट-केन, 'मध्यमः' मध्यमस्थानः 'अस्ति' विद्यते। कतमः? योऽयम् 'अश्नः' "अशनः" व्यापनो वायुरित्यर्थः, स हि द्युलो-कादादित्यं मोदकेन भ्रियते, हरति चोदकं द्युलोकात्। 'तृतीयः' 'अस्य' वायोः 'भ्राता' हविर्भागहर्त्ता वा, तेन्द्राग्न हविषि संस्तुतौ वा 'घृतपृष्ठः' घृतेन स्पृष्टः, आज्यस्पृष्टः, "अयम्" एव "अग्निः" पृथिवीस्थानः। 'सप्तस्मिणः' वायोः, सर्वस्माद्धि वायुः बलवान्। अथवा सप्तधमस्य नियुत्त-सज्ञानामस्तीति सप्तस्मी वायुः, "आ नो नियुद्भिः शतिनी भिः-रध्वर सहस्रिणी भिः"—इति (ऋ० सं० २, १, २४, ३)। श्रूयते वायव्ये मन्त्रे। वायुः, आदित्यः, अग्निः,—इत्येवं परि-संख्याय वायोस्तृतीयोऽग्निर्भवति, वायुरपि च ज्योतिरेव, "वायुना ज्योतिषा"—इति विज्ञायते। तवैतस्मिन् त्रेधा विभक्ते ज्योतिषि, प्रधानत्वेनैतमेवाहमपश्यमिति। 'विश्-पतिं' विश्वस्य सर्वस्य जगतः पालयितारम्। कतमम्? य एषः 'सप्तपुत्रः' सूर्य्य एतमेवाहमत्र प्रधानेनापश्यमित्येवमेत-स्मिन् मन्त्रे सूर्य्यः प्रधानः, सूक्ते सूर्य्याधिकारात्, तस्मात् 'अस्य वामस्य'—इत्येषः "अस्य"—शब्द अन्तोदात्तः। वायुरप्रधानम्, तस्मात् 'तृतीयो भ्राता घृतपृष्ठः अस्य'—इत्येषः "अस्य"—शब्दोऽनुदात्तः॥ एवमेकस्मिन्नेवास्मिन् मन्त्रे उदात्तानुदात्तावेतौ "अस्य"-शब्दौ प्रधानाप्रधानविष-यावित्येकमेवोदाहरणम्॥

आह,—'तृतीयो भ्राता घृतपृष्ठो अस्य'—इत्यनेन "अस्य"-शब्देन सूर्य्य एव कस्मान्न सम्बध्यते? अपि च "तृतीय"-शब्दस्य

प्रकृतानुक्रमाविरोधेनैवमेव सुखतरा योजना भविष्यति। उच्यते,—'अस्य वामस्य'—इत्येतदन्तोदात्तं पदमितरदन्तवत् 'तृतीयो भ्राता घृतपृष्ठः अस्य'—इति प्रधानरूपमेव सत् पूर्वेणानुदात्तमिति स्वरकृताद्विशेषादर्थकृतेनापि विशेषेण भवितव्यमित्यप्रधानार्थाभिधायिना विशेषः प्रतीयते। आदित्यसंस्तवात् सूक्तं वायुरात्वप्रधानं, प्रकृतादादित्यात् वक्ष्यमाणानुविषयमेवेदम् अस्येति द्वितीयपदमनुदात्तं सम्पद्यते। अतः सुतरामुपपन्नं भवति "उदात्तं प्रथमादेशेऽनुदात्तमन्वादेशे". —इत्यत्र प्रथमादेशान्वादेशशब्दाभ्यां प्रधानाप्रधानावुच्येते इति। अन्ये तु मन्यन्ते,—प्रथमादेशो नाम प्रारम्भः, तत्र यद्वर्त्तते, तदुदात्तं भवति, प्रधानार्थतरमुदात्तत्वेनैव लक्षणेन। तद्यथा,—"अस्या ऊ षु णः (ऋ० मं० २, २, २, ४)" "अस्य वामस्य (ऋ० मं० २, ३, १४, १)"—इति। अन्वादेशो नाम, अन्यस्य पदस्य पश्चादादेशः, तत्र वर्त्तमानमन्दात्तं भवति। पदात् पदस्य निघातो भवतीति हि लक्षणविदोऽपि ब्रुवते। तथानुदात्तत्वेनैव लक्षणेनाख्यायतेऽर्थतरमप्रधानार्थतरं भवति। तद्यथा,—"दीर्घायुरस्या यः पतिः (ऋ० मं० ८, ३, २७, ४)" "तृतीयो भ्राता घृतपृष्ठो अस्य (ऋ० मं० २, ३, १४, १)"—इति।

आह,—कथं सप्तमपुत्र आदित्यः? इति। उच्यते,—"सप्तमो ह्यसावादित्यः पुत्रः"—इत्येवमैतिहासिका मन्यन्ते। ब्राह्मणेऽपि च,—"मृतपितरमण्डमवापद्यत, तस्मिन्नादित्यः सप्तम इन्द्रोऽष्टम इति ह विज्ञायते"। अथवा सप्तसंख्याका युक्ता अस्य रश्मयः पुत्राः, तेनासौ सप्तपुत्रः। अथवा नैव संख्याभिप्रायमेतत् सप्तपुत्र इति। आह,—कथं तर्हि? इति। उच्यते,—"सर्पणपुत्रमिति" एवम्, सर्पणा हि तस्य रश्मयो

मुहूर्त्तमप्यनवस्थायिनो यस्य पुत्रा सोऽयं सप्तपुत्र । "सप्त स्वसा सख्या", एडभ्य ।सकाशात् । एव मप्तसख्योपेता, सपर्णक्रियायोग्या वा एत एव "आदित्यरश्मय" आदित्यस्य पुत्रा "इति" मन्त्रविद "वदन्ति" मन्यन्ते ॥ ५ (२६) ॥

सप्त युञ्जन्ति रथमेकचक्रमेको अश्वो वहति सप्तनामा । त्रिनाभि चक्रमजरमनर्वं यत्रेमा विश्वा भुवनाधि तस्थुः ॥ सप्त युञ्जन्ति रथमेकचक्रमेकचारिणं चक्रं चकतेर्वा चरतेर्वा क्रामतेर्वैको अश्वो वहति सप्तनामादित्य. सप्तास्मै रश्मयो रसानभिसन्नामयन्ति सप्तैन मृषयः स्तुवन्तीति वेदमपीतरन्नामैतस्मादेवाभिसन्नामात् संवत्सरप्रधान उत्तरोऽर्द्धर्चस्त्रिनाभिचक्रं त्र्यृतुः संवत्सरो ग्रीष्मो वर्षा हेमन्त इति संवत्सर. संवसन्तेऽस्मिन् भूतानि ग्रीष्मो ग्रस्यन्तेऽस्मिन्रसा वर्षा वर्षत्यासु पर्जन्यो हेमन्तो हिमवान् हिमं पुनर्हन्तेर्वा हिनोतेर्वाजरमजरणधर्माणमनर्वमप्रत्यृतमन्यस्मिन् यत्रेमानि सर्वाणि भूतान्यभिसन्तिष्ठन्ते तं संवत्सरं सर्वमात्राभिः स्तौति पञ्चारे चक्रे परिवर्त्तमान इति पञ्चर्तुतया पञ्चर्त्तवः संवत्सरस्येति च ब्राह्मणं हेमन्तशिशिरयोः समासेन षलर

आहुरर्पितमिति षड्युतस्था अराः प्रत्यृता नाभौ षट् पुनः सुहृतैः। द्वादशारं नहि तज्जराय। द्वादश प्रधयश्चक्रमेकमिति मासानां मासा मानात् प्रधिः प्रहितो भवति। तस्मिन् साकं त्रिशता न शङ्कवोऽर्पिताः षष्टिर्न चलाचलासः। षष्टिश्च ह वै त्रीणि च शतानि संवत्सरस्याहोरात्रा इति च ब्राह्मणं समासेन। सप्त शतानि विंशतिश्च तस्थुः। सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्रा इति च ब्राह्मणं विभागेन विभागेन ॥ ६ ॥

इति चतुर्थाध्यायस्य चतुर्थः पादः ॥ ४, ४ ॥

यथा चाय सप्तभिः सर्पणैर्वा रश्मिभिर्युज्यते तथैवमपरा ज्योतिष्क्रियेषु वर्त्ते "सप्त युञ्जन्ति ०—० अधि तस्थुः"—इति (ऋ० सं० २, २, १४, २)। 'सप्त'सह्रोपेता सर्पणा वा 'युञ्जन्ति' योजयन्त्यात्मना रश्मय 'रथं' रंहणमादित्यम्, यद्यप्येव ह्यमावास्यादिक्षो रश्मिभिः युज्यते, रंहणशीलो मुहूर्तमप्यनवस्थायित्वात्। 'एकचक्रम्' एक एव ह्यमावस्तरिक्षे चरति, इतराणि ज्योतींषि नाशयत्येव स्वेन तेजसा प्रकाशेन। 'एकोऽश्वः' एक एवाश्व, अयनो व्यापन. सर्वभूतानाम् 'वहति' गच्छति 'सप्तनामा' सप्तस्तुतिः, सप्तपुत्र—इत्येवमाद्या सप्तसङ्ख्याका स्तुतयोऽस्य। अथवा "सप्तास्य रश्मयो रसानभिसंनामयन्ति"—एतस्मिन् मन्त्रे, इति सप्तनामा। अथवा

"सतैनमप्रय. (नमन्ति) स्तुवन्ति इति" सतनामा। "इद-मपीतरत्" शब्दः "नाम" "एतस्मादेव"—"अभिसन्नामात्" तदपि स्वमर्थं प्रत्याययितुं क्रियापदस्य वा गुणभावेनाभि-मुख्येन सन्नमति। स एवंलक्षणः ससचारी व्यापनः सन-नामा, सर्पणैः समभिर्वा रश्मिभिर्युक्तो यदा वहति, उदयादा-रभ्य यावदस्तमिति, तदेवं वहन् निर्वर्त्तयन्तीति। उच्यते, —'त्रिनाभिचक्रमजरमनर्वम्' त्रिनाभिसंयुक्तं कालचक्रम्, चक-मधर्मि, चक्रम चलनमुच्यते, चरणधर्मि, क्रमणधर्मि वा। 'अजरम्' "अजरणधर्माणम्"। 'अनर्वम्' "अप्रत्यृतमन्यस्मिन्" अनाश्रितमित्यर्थः। 'त्रिनाभिचक्र' "त्रयस्." हि "संवत्सर" —"ग्रोष्मो वर्षा हेमन्त इति" अनेन ऋतुविभागेन एतदेवास्य त्रिनाभित्वमभिप्रेतम्। ऋतुभिर्हि सवत्सरो नह्यते सन्नह्यते इत्यर्थः। "संवत्सरप्रधान उत्तरोऽर्द्धर्चः" नादित्यप्रधान.। "संवत्सर: संवसन्त्यस्मिन्"—इति प्रसक्तानुप्रसक्तम्, समस्तानि हि "भूतानि" एतस्मिन् संवसन्ति। मैथुनाभिप्रायी वा स्यात् संवास.। "ग्रोष्म', ग्रस्यन्तेऽस्मिन् रसा" सूर्य्येण। "वर्षा, वर्षत्यासु पर्जन्यः" तदेतत् प्रत्यक्षमेव। "हेमन्त', हिमवान्" तत्र हि बहु भवति हिमम्। "हिमं पुनर्हन्तेर्वा" तद्धि हन्त्यो-पधिवनस्पतीन् प्रकिरति, "हिनोतेर्वा" तर्पणार्थस्य, तेन हि पुष्यन्ति यवादयः, गमनार्थस्य वा हन्ते', तद्धि गमयति स्वयं भूतानि। 'अजरं' तत् सवत्सरचक्रम् अजरणधर्मि, न हि संवत्सरस्य जरा नाम धर्मोऽस्ति। "अनर्वं" च तत् "अप्रत्यृ-तम्" अप्रतिगतमनाश्रितमन्यत्र क्वचित्। आह,—यत्र किम्? इति। उच्यते,—"यत्र" यस्मिन् 'इमा' "इमानि" 'विश्वा' "सर्वाणि" 'भुवना' "भूतानि" 'अधि' उपरि 'तस्थुः' "अभि-सन्तिष्ठन्ते" आश्रितानि विनाशमुपयान्ति। विनाशोऽपि

हि सम्बोध्यते, संस्थित. पिता ममेत्युक्ते स्तन इति गम्यते। तदेवलक्षणं 'त्रिनाभि' कालचक्रमजरम्, य आदित्योऽभिनिर्वर्त्तयति, यच्चेदमभिनिर्वर्त्त्यते कालचक्रम्, तदेतदुभयमप्यत्र स्तोमीत्येवमस्य मन्त्रस्य पूर्वोऽर्द्धर्च आदित्यप्रधानः, उत्तर. संवत्सरप्रधानः ॥

आह,—कथं गम्यते संवत्सरप्रधान उत्तरोऽर्द्धर्चः इति, न हि संवत्सरग्रहणमत्रास्ति? उच्यते,—'त्रिनाभिचक्रम्'—इत्येतस्मादनुसम्बन्धात्। आह,—एतदपि विशेषलिङ्गमत्र नास्त्येव, कथं ऋतवो नाभिशब्देनोच्यन्ते इति? तस्मादेतदप्ययुक्तमेवेति। उच्यते,—य एष पूर्वस्मिन्नर्द्धर्चे प्रकृतेन सूर्य्येणाभिनिर्वर्त्त्यते संवत्सरः, यस्मिंश्च सर्वाण्येतानि भूतान्यभिसन्तिष्ठन्ते, "तम्" एतं "संवत्सरम्" उत्तरस्मिन्नर्द्धर्चे प्रकृत्य मन्त्रकृत् 'त्रिनाभिचक्रम्'—इत्येवमाद्याभिः "सर्वमात्राभिः" सर्वै. अव यवै. 'पञ्चारे चक्रे' 'षडरे' 'त्रीणि शतानि षष्टिश्च' 'सप्तशतानि विंशतिश्च'—इत्येवम्प्रकारैः "स्तौति"। तस्मात् सूक्ते संवत्सरस्यावयवस्तुतिप्रायदर्शनादिहापि त्रिनाभिशब्द ऋतुविषय इत्युपपद्यते। पञ्चानामृतूनां द्वौ द्वौ ऋतू समानस्वभावौ इत्यनेनाभिप्रायेण त्रित्वम्। यथैवमुक्ता "तं संवत्सरं सर्वमात्राभिः स्तौति" अधुना यथैत सर्वमात्राभि. स्तौति, तथोपपादयति,—"पञ्चारे चक्रे परिवर्त्तमाने तस्मिन्नातस्थुर्भुवनानि विश्वा। तस्य नाक्षस्तप्यते भूरिभारः सनादेव न शीर्य्यते, स नाभिः॥"—इति (ऋ० सं० २, ३, १६, २—१, २२, ८, १३)। "इति पञ्चर्त्तुतया" संवत्सरस्य स्तुतिः। 'पञ्चारे चक्रे' ऋतवः अत्र अरत्वेनाभिप्रेताः। 'परिवर्त्तमाने' परिगच्छतीदं जगद् वर्त्तमाने। आह,—किम्? इति। उच्यते,—'तस्मिन्नातस्थुः' तस्मिन्नवस्थितानि उपरि अधिरूढानि।

कानि ? 'भुवनानि' भूतानि 'विश्वा' विश्वानि, सर्वाणि, काल-चक्रे हि सर्वमेवेदं जगदधिरूढं बभ्रमीति। अथैवमतिमहतापि सर्वभूतचक्राक्रान्तस्य कालचक्रस्य 'भूरिभार' बहुभार मन्वेयायम् 'अक्ष' सन्नत्वराख्य 'न तप्यते' न सन्तापयति नापि सन्ताप याप्यतीत्यर्थ । अपि च 'सनादेव' चिरन्तन एव सोऽक्ष, तथापि न तप्यते, न वा तप्तोऽपि सन् सहसैव 'विशीर्य्यते' नश्यति । आह,—यदक्षो न तप्यते शीर्य्यते वा, किमेव-मतिबलीयसाक्षेण दृष्यमाणा नाभि, तप्यते शीर्य्यते वा ? इति । नेत्युच्यते,—'स नाभिः' अक्षो न शीर्य्यते न तप्यते । नाभिरादित्य एवाभिप्रेत । आह,—वाक्यमतदुच्यते 'पञ्चारे चक्रे'—इत्यत्र अर शब्देन ऋतवोऽभिप्रेता इति, न चात्र विशे-षलिङ्गमृतूनामस्त्येऽस्ति, अपि च ऋतव षट् प्रसिद्धा, इह च पञ्चार इति श्रूयते, तस्मादनुपपन्नम्,? इति । उच्यते, —सूक्ते संवत्सरस्यावयवस्तुतिप्रायदर्शनादुपपद्यते । "पञ्च र्त्तव संवत्सरस्येति च ब्राह्मणम्, हेमन्तशिशिरयो समासेन" एकत्वेनेत्यर्थ । तस्मादुपपद्यते । एव पञ्चर्त्तुत्वमृतूनाम्, अतस्य चावयवस्तुत्वमित्यस्यादिति ।

पञ्चपाद पितर द्वादशाकृति दिव आहु परे अर्द्धे पुरी-षिणम् । अथेमे अन्य उपरे विचक्षण सप्तचक्रे षडर आहुर-र्पितम्"—इति (ऋ० सं० २, ३, १६, १)। "अन्तर आहुरर्पित-मिति पुडतुतया" संवत्सरस्य स्तुति । 'पञ्चपाद' संवत्सर, ऋतवो हि संवत्सरस्य पादा, तैरसौ पतति गच्छति । 'पितर' पालक सर्वभूतानामुत्पादयितार वा 'द्वादशाकृतिम्' द्वादश-मासप्रविभक्तविग्रहम्, "द्वादशमासा संवत्सरस्य"—इति च ब्राह्मणम् "दिवे" द्युलोकस्य 'परे' परमे 'अर्द्धे' स्थाने योऽयमव-स्थित आदित्य, एतस्मिन् पञ्चपाद पितर द्वादशाकृति 'पुरी-

पितरं' उदकवन्तं संवत्सरम् 'अर्पितमाहुः' अविशेषेणान्ये ब्राह्मणाः। तस्मात् सर्वऋतवो हेमन्त इति ह विज्ञायते। तस्मात् संवत्सरस्योदकवत्त्वमुपपद्यते। 'अथ' पुनः 'इमे' 'अन्ये' च एते 'उपरे' उपर्य्यवस्थिताः, 'सप्त' ऋषयः, एते 'विचक्षणं' विविधानां सर्वभूतकर्मणां द्रष्टारमेवमादित्यं 'चक्रे षडरे' तस्मिन् संवत्सराख्ये 'अर्पितमाहुः'। अथवा सप्तचक्र आदित्यः, स हि सप्तभीरश्मिभिश्चक्रैर्दीप्यते, 'सप्तचक्रे'—इत्येकं पद तस्मादेवमपि भवति। एवमेके संवत्सरमादित्यप्रविष्टमाहुः, अपरे पुनरादित्यं संवत्सरप्रविष्टमित्येष समस्तार्थः॥ एवमेतस्यामृचि आदित्यसंवत्सरौ स्तूयेते। वक्ष्यति हि "चन्द्रमसा वायुना संवत्सरेणेति संस्तवः"। संवत्सरस्य चक्ररूपेण नाभ्यादिभिः स्तुतिरुपपद्यते॥ "अराः प्रत्यृता नाभौ" प्रतिगता इत्यर्थः। "षट् पुनः सहतेः" ते हि पञ्चसङ्ख्यामभिभूय वर्त्तन्ते॥

"द्वादशारं न हि तज्जराय"—इति। "द्वादशप्रधयश्चक्रमेकम्"—इति। "इति मासामासात्" एतौ पादौ भवत इति वाक्यशेषः। "द्वादश प्रधयश्चक्रमेकं त्रीणि नभ्यानि क उ तच्चिकेत। तस्मिन् साकं त्रिशता न शङ्कवोऽर्पिताः षष्टिर्न चलाचलासः॥"—इति (ऋ० सं० २, ३, २३, २)। "मासा मासात्" मीयते हि तैः संवत्सरः। "प्रधिः प्रहितः" प्रक्षिप्य चक्रे निहितः "भवति" गण्डपुच्छः प्रधिरित्युच्यते। द्वादश-प्रधयः' मासाख्याः, संहताः सन्तः 'चक्रमेकं' भवति। तत्र च पुनः 'त्रीणि नभ्यानि' फलकानि भवन्ति,—त्रय ऋतवो ग्रीष्मो वर्षा हेमन्त इति। यदेतदेवंलक्षणं चक्रम् 'क उ तत् चिकेत' कस्तु तत् याथात्म्यतो विजानाति ? 'तस्मिन्' चक्रे 'साकं' सह 'त्रिशता न शङ्कवोऽर्पिताः' त्रिशतान्यहोरात्राणि शङ्कव

द्वार्पितानि। 'षष्टिर्न' षष्ट्यधिकानि त्रीण्यहोरात्रशतानि शङ्कव इवार्पितानि, प्रोतानि। द्वितीयो नकारः समुच्चयार्थः। 'चलाचलासः' चलानि च अचलानि च, चलान्यनवस्थायित्वात्, अचलान्यहोरात्रात्मभावं न मुञ्चति। आह,—कथं गम्यते अहोरात्राण्येतानीति? उच्यते,—संवत्सरस्तुतिप्रायत्वान्मन्त्रस्य। "षष्टिश्च ह वै त्रीणि च शतानि संवत्सरस्याहोरात्राः इति च ब्राह्मणं समासेन" अहोरात्रयोरेकत्वेनेत्यर्थः ।

"द्वादशारं न हि तज्जराय वर्वर्ति चक्रं परि द्यामृतस्य। आ पुत्रा अग्ने मिथुनासो अत्र सप्त शतानि विंशतिश्च तस्थुः ॥"—इति (ऋ० सं० २, ३, १६, १)। 'न हि तज्जीर्य्यते' किं तर्हि? अन्यानि भूतानि जरयत् 'वर्वर्त्ति' च पुनः पुनर्वर्त्तते। 'परि द्यां' परिगृह्य द्यां च पृथिवीं च ततो वर्वर्त्ति। 'ऋतस्य' उदकस्य पूर्णम्, अथवा 'ऋतस्य' आदित्यस्य स्वभूतम्, अथवा 'ऋतस्य' यज्ञस्याङ्गभूतम् 'आतस्थुः' पुत्राः। एतस्मिंश्चक्रे 'मिथुना' द्वन्द्वा इत्यर्थः। कस्य? 'अग्ने'। अग्निशब्दोऽस्मिन् मन्त्रे सम्बोधनान्तः, षष्ठ्या विपरिणम्यते, अग्नेः पुत्रा आतस्थुरिति। अग्निश्चात्रादित्य एवाभिप्रेतः, तस्याहोरात्राण्येव पुत्रत्वेनोच्यन्ते, तत्कृतत्वादहोरात्राणाम्। आह,—कियन्तस्ते पुत्राः? इति। उच्यते,—"सप्त शतानि विंशतिश्च"। ब्राह्मणमप्येतस्मिन्नर्थे भवति,—"सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्राः"—इति च ब्राह्मणमहोरात्रयोर्विभागेन विभागेन"—इति। एवमेतस्मिन् सूक्ते संवत्सरं "सर्वैर्मात्राभिः" सर्वैरवयवैः "स्तौति"। तस्मादुपपद्यते "सप्त युञ्जन्ति"—इत्येतस्यामपि संवत्सरप्रधानान्तर्नाभिचक्रमित्येषोऽर्थः। तदेतत् इदमपि 'सप्त-

पुत्र' सर्वंपुत्रमित्यें तस्मात् पदात प्रसक्तानुप्रसक्तमुक्तम्, प्रकृत मिदानीं वर्णयिष्याम । किं पुन प्रकृतम् ? ऐकपदिक॰ समाम्नायव्याख्यानम् । तत्र यदुक्त तदुक्तमेव, यदनुक्त तद वाच्यमितीदमारभ्यते,—"वासंमविन्दच्चरणे नदीनाम्"— इति ॥ ६ (२०) ॥

इति निरुक्तवृत्तौ नवमाध्यायस्य [चतुर्थायस्य]

चतुर्थ पाद ॥ ४, ४ ।

ऋज्वर्थाया निरुक्तवृत्तौ जम्बूमार्गाश्रमवासिन

आचार्य्यभगवद्दुर्गस्य कृतौ नवमोऽध्याय,

(चतुर्थोऽध्याय ) समाप्त. ॥ ४ ॥

---

(एकार्थ[1]कोनुत्रय[2]:सुपर्णा[3]यदिन्द्र[4]जुष्टो[5]दमूना:
सम्मात[6]पक्तौ[7]षिरे[8]णमर्त्वा[9]तितउ[10]सक्तु[11]मिवतत्सू-
र्य्य[12]सेन्द्रे[13]णयमो[14]सोन्वास:[15]कायमान:[16]कनीनकेवो-
पोअद[17]र्शि[18]सुविते[19]विद्याम[20]देवान[21]श्राषा[22]द्यौर्मे ऽदिति-
र[23]दितिवत[24]आचा[25]हास्यवा[26]मस्यसप्त[27]युञ्जन्ति सप्त॰
विंशति: ॥)

इति निरुक्ते पूर्वषट्के चतुर्थोऽध्याय:

समाप्त: ॥ ४ ॥

अथ पञ्चमाध्यायस्य

प्रथमः पादः ।



ॐ३म् । सस्निमविन्दच्चरणे नदीनाम् । सस्नातं मेघम् । वाहिष्ठो वां हवानां स्तोमो दूतो हुवन्नरा । वोढृतमो ह्वानानां स्तोमो दूतो हुवन्नरौ नरा मनुष्या नृत्यन्ति कर्मसु दूतो जवतेर्वा द्रवतेर्वा वारयतेर्वा (दूतो देवानामसि मर्त्यानामित्यपि निगमो भवति । ) वावशानो वष्टेर्वा वाश्यतेर्वा । सप्त स्वसृररुषीर्वावशान इत्यपि निगमो भवति । वार्यं वृणोतेरथापि वरतमम् । तद्वार्यं वृणीमहे वरिष्ठं गोपयत्यम् । तद्वार्यं वृणीमहे वर्षिष्ठं गोपायितव्यं गोपायितारः । यूयं स्थ युभ्यमिति वान्ध इत्यन्ननामाध्यानीयं भवति । आमत्रेभिः सिञ्चता मद्यमन्धः । आसिञ्चतामत्रैर्मदनीयमन्धोऽमत्रं पात्रममा अस्मिन्नदन्त्यमा पुनर्निर्मितं भवति पात्रं पानात्तमोऽप्यन्ध उच्यते नास्मिन् ध्यानं भवति न दर्शनमन्धन्तम इत्यभिभाषन्तेऽयमपीतरोऽन्ध

**एतस्मादेव। पश्यदक्षण्वान् न विचेतदन्धः इत्यपि निगमो भवति ॥ १ ॥**

"ससिम् (१)"—इति। एतदनवगतम्। अर्थाप्रतीतिरप्यनवगमस्य इत्युच्यते। लक्षणासम्पन्नस्य संस्कारः खल्वपि अविज्ञातमित्युच्यते। तत्रैव सति, क्वचिच्छब्दादेः संस्कारस्यानवगमः, क्वचिदर्थाप्रतीतिरेव, क्वचिदुभयस्याप्यनवगमः, यथास्मिन्नेव ससिमिति, न विज्ञायते किमप्युक्तं भवति ? प्रकरणादत्र मेघाभिधेयम्, अन्यवाच्योऽपि कश्चित् स्यात्, प्रकरणविशेषादेव। एवं सर्वत्रैवोपेक्षितव्यम्। प्रकरणसामर्थ्याच्छब्दोऽप्यर्थान्तरं भजते। "ससिमविन्दच्चरणे नदीनामपावृणोद्दुरो अश्मव्रजानाम्। प्रासां गन्धर्वो अमृतानि वोचदिन्द्रो दक्षं परिजानादहीनाम् ॥"—इति (ऋ० सं० ८, ७, २७, ६)। विश्वावसोर्देवगन्धर्वस्येयमार्षम्। घर्मोत्सादने विनियुक्ता। तत्रोक्तं परिषिक्ते गन्धर्वनाममभिरुपतिष्ठन्त ऋत्विजो यजमानश्चेति। तासामुपस्थानर्चामियं मध्ये मैत्रायणीयके। 'ससि' "संघातम्" अद्भिः परिवेष्टितं, सर्वतः परिस्रुतं, धौतं वा "मेघम्" 'अविन्दत्' अलभतेन्द्रः। क्व पुनरलभत ? 'चरणे नदीनां' यत्र नदना आपश्चरन्ति, गच्छन्ति, तत्रालभत, अन्तरिक्षलोके इत्यर्थः। आह,—लब्ध्वानन्तरं किमकरोत् ? इति। उच्यते,—'अपावृणोत्' अपावृतवान्, उद्घाटितवानित्यर्थः। 'दुरः' द्वारः। आह,—कस्य ? उच्यते,—'अश्मव्रजानाम्' अपामश्मा मेघः, तमधि या व्रजन्ति, स च यासां व्रजभूतो गोष्ठभूतः, ता अश्मव्रजा आपः, तासां निर्गमनद्वाराणि अपावृणोत्। या एता एवंलक्षणा आपः, 'आसाम्'

अस्य च इन्द्रस्य 'गन्धर्वः' विश्वावसुः 'प्रावोचत्'—'अमृतानि' नामानि, छान्दसस्तुतियुक्तानि, तानि हि नित्यत्वादमृतानि। आह,—कस्मात् पुनरस्येन्द्रस्यामृतानि प्रावोचदामाख्यापाम् ? इति। उच्यते, इतः,—यस्मादसाविन्द्रः 'दघ' दातारं मेघम्। अयम् आसाम् 'अहीनाम्' अयनानाम्, अपां द्वारेषु अपाहतेषु, दानाय समर्थो भविष्यति,—इत्येवं 'परिजानात्' परिज्ञातवान्। परिज्ञाय च 'अपावृणोत् दुरोऽश्मव्रजानाम्'। तस्मादस्येन्द्रस्यामृतानि नामानि प्रावोचदद्वियानेन प्रकारेणेन्द्रेण सर्वमेवेदं जगद् ध्रियत इति आसामपि अनेन हेतुना प्रावोचदिति। एवमेतस्मिन् मन्त्रे 'चरणे नदीनाम् अविन्दत्' अपावृणोत् दुरोऽश्मव्रजानाम्, दघञ्च परिजानात्'— इत्येकवाक्यतार्थसम्बन्धात् "दघ्रि" शब्दो मेघविशेषणम् उपपद्यते॥

अथवा अयमप्यस्य मन्त्रस्य पादत्रयस्यैनार्थः स्यात्,— संघातं मेघमविन्ददलभतेन्द्रः पर्य्यन्वमाणः, क्वाविन्दत् ? चरणे नदीनाम्, अपाम्, अन्तरिक्षलोके। लब्ध्वा च स एव इन्द्रः, तं मेघ, दघ दातारम्, अहीनाम् अपां परिजानात्। परिज्ञाय च समर्थोऽयमिति ततस्तस्य द्वाराण्यपावृणोत्। अश्मव्रजानामपामधो निर्गमनाय। तत एतानि निर्गतानि, अमृतानि उदकानि, गन्धसम्पत्कराणि प्रावोचदिव प्राकाशयदिव,—असाविन्द्रो गन्धर्वः, आसां प्रजानां जीवध्वमेभिरुदकैरस्मद्दत्तैरिति। "इन्द्रो गन्धर्वः, तस्य मरुतोऽप्सरसः"— इति श्रूयते। तस्मादिन्द्रस्यापि गन्धर्वत्वमुपपद्यत एव, स च गोः वचसः धारयिता इति गन्धर्वः॥

"वाहिष्ठः (२)"—इति। एतदनवगतम्। "वोढृतमः"— इत्यवगमः। "वाहिष्ठो वां हवानां स्तोमो दूतो हुवन्नरा।

युवाभ्यां भूत्वश्विना।"—इति (ऋ० सं० ६, २, २९, १)। गायत्री। विश्वमनसो वैयश्वस्यैयमार्षम्, पितुर्वा व्यश्वस्य। प्रातरनुवाकाश्विनयोः शस्यते। 'नरा' हे नरौ। सर्वेषामेव वोढॄणां स्तोमानाम्, आह्लातॄणाञ्च। य एव एषः 'वाहिष्ठः' अतिशयेन वोढा, आह्लादतमः, अयमेव 'दूतः' इव युवां 'हुवत्' आह्वयदित्यर्थः। योऽयमेवलक्षणः 'सोमः' अस्मत्-प्रेरितः, स नित्यकालमेव 'युवाभ्यां' 'भूतु' भवत्वित्यर्थः। हे 'अश्विना' अश्विनौ। इति सम्बोधनम्। 'स्तोमो दूतः' —इत्येताभ्यां समानविभक्त्यन्तत्वात् "वाहिष्ठ"-शब्दः सोम-विशेषणमित्युपपद्यते॥

निगमप्रसक्तमित्युच्यते,—"मनुष्याः" अपि हि "नराः" उच्यन्ते, ते हि "नृत्यन्ति" गात्राणि पुनः पुनः प्रक्षिपन्ति "कर्मसु" उपस्थितेषु तान्यनुतिष्ठमानाः॥

"दूतो (३) जवतेर्वा गत्यर्थस्य" स हि गच्छति। "द्रव-तेर्वा" गत्यर्थस्यैव। "वारयतेर्वा" स हि वारयत्यनर्थान्॥

"वावशान (४)"—इति अनवगतम्। "वष्टेर्वा" कान्त्य-र्थस्य, "वाश्यतेर्वा" शब्दार्थस्य वावशानः स्यात्। "सुप्त स्वसृ-रुषीर्वावशानो विद्वान्मध्व उज्जभारा दृशे कम्। अन्तर्येमे अन्तरिक्षे पुराजा इच्छन् वव्रिमविदत् पूषणस्य।"—इति (ऋ० सं० ७, ५, २२, ५)। विश्वामित्रस्येयमार्षम्। आग्नेयी। त्रिष्टुप्। प्रातरनुवाकाश्विनयोः शस्यते। 'सप्त' 'स्वसृः' स्वसारो भगिन्य इव याश्चार्चिषः समानजन्मत्वात्। अथवा सह सर्पणात् स्वसारः, ता हि सह सर्पन्ति 'अरुषीः' अरो-चनाः, दीप्ता इत्यर्थः। या एवंलक्षणा अर्चिषः, ताः अग्निः 'वावशानः' कामयमानो वावश्यमानो वा, शब्दं कुर्वाणः सः 'विद्वान्' आत्मीयमधिकारान् जानानः, 'मध्वः' उदकस्य

हविषः पूर्णः, 'वक्षमार' कर्म्म हृतवानेषां लोकानां 'दृशे कं' दर्शनायेत्यर्थः। एवं ता कर्म्म हृत्वा दर्शनमभिव्यञ्जयित्वा जनानाम् 'अन्तः' आदित्यस्य मध्ये यदन्तरिक्षं तत्र, 'येमे' तत्रोपनियमितवान् तद्धविः 'सुराजा' अग्निः, स हि सर्व्वदेवेभ्यः प्रथम एव जातः। 'इच्छन्' 'वव्रि' रूपं 'पूषणस्य' पूष्णः, आदित्यस्य। कथं नामासावादित्यो दीप्तरूपः स्यात्? अतोऽन्तरादित्यस्य येमे। तच्चासावीप्सितमर्थम् 'अविदत्' अलभत इत्यर्थः। स एव दीप्तरूप आदित्यः सम्पन्न इत्यभिप्रायः॥ एवमत्र "रूपमूर्व्वोषगाम."—इत्यनेन सामानाधिकरण्याच्छन्दसारूप्याच्च "वावशाने"—इत्यस्य कान्त्यर्थत्वं शब्दार्थत्वञ्च उपपद्यते॥

"वार्य्यम् (५)"—इति। अनवगतम्। वृणोतेर्वरयितव्यं भवति, तद्वार्य्यमित्युच्यते। अथापि कदाचित् वार्य्यशब्देन यद्वरतमं श्रेष्ठतमं किञ्चिद्भवति, तदुच्यते। "तद्वार्य्यं वृणीमहे वरिष्ठं गोपयत्यम्। मित्रो यत् पान्ति वरुणो यदर्य्यमा॥"—इति (ऋ० सं० ६, २, २३, ३)। विश्वमनस ऋषयमार्षम्। मैत्रावरुणे सूक्ते। 'तद्वार्य्यं वृणीमहे' वरयितव्यं वरणार्हं धनं वृणीमहे। हे स्तोतारः! 'वरिष्ठं' 'गोपयत्यं' "गोपायितव्यं" यद्रक्षणार्हमित्यर्थः। अथवा गोपयत्यं गोपितारं, यस्य धनस्य यूयं भविष्यथ, तद् वृणीमहे। अथवा युष्मभ्यं गोपायितृ यद्भवति, तद् वृणीमहे। किञ्च, नित्यकालमेव मित्रावरुणार्य्यमाणः 'यत्' 'पान्ति' रक्षन्तीत्यर्थः, तद् वृणीमहे। एवमत्र च मित्रावरुणार्य्यमणो यत् पान्ति इत्यनेन सम्बन्धात् "वार्य्य"-शब्दो धनविशेषणमित्युपपद्यते॥

"अन्धः(११)"—इति। अनेकार्थमनवगतम्। आध्यानीयमित्यर्थप्रतीतिः। आध्यानीयमन्नं भवति सर्व्वस्यैव। "पद्ध्यैत्रो

भरतेन्द्राय सोममामत्रेभिः सिञ्चता मद्यमन्धः। कामी हि वीरः सदमस्य पीतिं जुहोत वृष्णे तदिदेष वष्टि ॥"—इति (ऋ० सं० २, ६, १२, १)। गृत्समदस्यैतमार्षम्। रात्रिपर्याये शस्यते। होतृ-शस्त्रे विनियुक्ता। अस्यैव च शस्त्रस्य याज्यैषा। हे 'अध्वर्यवः!' 'भरत' प्रापयतेमं 'सोमम्' एतस्माद्धविर्धानादुत्तरवेदिम्, 'इन्द्राय' इन्द्रार्थम्। अथवा 'भरत' धारयतास्ने कुपरि। ततश्चेनम् 'अमत्रेभिः' अमत्रैः पात्रैः, एभिः सोमचमसैः, वषटकारे प्राप्ते 'आसिञ्चत' तस्मिन्नग्नौ। 'मद्य' मदनीयम्, एतत्सोमाख्यम् 'अन्धः'। कस्मात् पुनरेवं ब्रवीमि ? १ इत'—यस्मात् 'कामी हि वीरः' कामयते वीरः इन्द्रः 'अस्य' सोमस्य 'सदं' सदैव, नित्यकालमेव 'पीतिं' पानमित्यर्थः। तस्मात् कारणात् 'जुहोत' तस्मै 'वृष्णे' वर्षित्रे इन्द्राय, एत सोमम्। किमेतमेव केवलं सोममेष कामयते ? नेत्युच्यते,—'तदिदेष वष्टि' तत्तत्सोमप्रदानमेष इन्द्रो वष्टि कामयत इत्यर्थ, न केवलं रात्रिपर्यायेष्वित्यर्थः। तस्मादासिञ्चत इमं सोमं मा विलम्बध्वमित्यभिप्रायः। एवमत्र रात्रसम्बन्धात् "अन्धः" शब्दोऽन्नार्थं उपपद्यते। पठितमपि चान्ननामसु अनेकार्थत्वात् तु सन्दिह्यते इत्येष निगम उपात्तः ॥

निगमप्रसङ्गमुच्यते।—"अमत्रं पात्रम्, अमा अस्मिन् अदन्ति" अन्नमित्यर्थः। अमा शब्देन पुनर्यदस्मिन्मितपरिमाणं किञ्चिद् भवति, तदुच्यते, न हि तेषा परिमाणमस्ति, यावन्मात्रस्तावददन्ति। "पात्रं पानात्" पीयते हि तेन ॥

तमोऽप्यन्ध उच्यते। किं कारणम् ? "नास्मिन्" "ध्यान" दर्शनं कृतं "भवति" चक्षुषो दृष्टि-निरोधात्मिका अपि दर्शननिरोधे सति "अमन्तम इत्यभिभाषन्ते"। "स्त्रियः

सतीस्तां उ मे पुंस आहुः पश्यदक्षण्वान् न विचेतदन्धः। कविर्यः पुत्रः स ईमाचिकेत यस्ता विजानात् स पितुष्पिता-सत्॥"—इति (ऋ० सं० २, ३, १०, १)। अश्यवामीये। त्रायतेः पालनार्थस्यात्र स्त्री-शब्दो निरुच्यते। पालयितारः एवैतः सत्यः त्राणत्स्य जगतः। एत एव रश्मयो 'नाडीभिः आध्यात्मिकीभिः अनुप्रविश्य प्राणिशरीरेष्वन्नपक्तिं कुर्वन्ति, ततः स्थितिरुपजायते, एत एव वर्षप्रदानेन कृत्स्नं जगत् त्रायन्ते, तस्मात् त्राणात् 'स्त्रियः' एताः। 'तान्'—इति नकारान्तं पदम्। 'उ'—इति पदपूरणे एव। तानेवंलक्षणानारश्मीन् पालयितृन् सतः। 'मे' मयेति मन्त्रदृगात्मानं निर्दिशति। ममैतान् पुंस आहुः। एत एव रश्मयो 'बहुप्रजानाः' इत्येवं ब्रह्मविद आहुः। एत एवात्मपक्त्यादिनोपकारेणोपकुर्वन्ति। जगत्त्रायन्ते एत एव बुद्धेः सर्वार्थप्रकाशित्वेनोपकुर्वन्तीत्यभिप्रायः। आदित्यान्तरपुरुषो हि बुद्ध्यधिदेवता, तदवयवभूताश्च रश्मयः, तेन ह्यन्तर्गता आध्यात्मं पुरुषस्य विज्ञानम् उपहरन्ति। अतस्तेषां बहुप्रजानत्वमुपपद्यते। आह,—कः पुनरेतान् रश्मीनेवङ्गुणयुक्तान् पश्यतीति? 'पश्यदक्षण्वान् न विचेतदन्धः' यो हि अक्षण्वान् भवति, दर्शनवान्, विज्ञानवान्, वेदार्थविज्ञानवान्, वेदार्थविज्ञानेनोपजनितप्रज्ञः, स एव ताभ्यां गुणाभ्यां युक्तान् पश्यत्येतान् नित्यकार्यं नित्ययुक्तत्वात्। इतरस्तु योऽन्धः प्रज्ञानवान्, अश्रुतवेदोपनिषत्कः, स मन्दबुद्धित्वात् 'न विचेतत्' नैतान् याथार्थ्यतः पश्यति, न विजानातीत्यर्थः। यः पुनः एवम् एतान् यथार्थतः पश्यति, स एव 'कविः' क्रान्तदर्शनो भवति, परिनिष्ठितविद्य इत्यर्थः। स च परिनिष्ठितविद्यत्वेनैव 'पुत्रः' पुरुषो बहुनोऽवसन्नातः। यथायमेवङ्गुणयुक्तः,

स 'ईम् आचिकेत'। 'ईम्'-इति पदपूरणः। 'आचिकेत' स एवैतानित्थम् आभिमुख्येन यथावत् पश्यति, नेतरो मूढः। यश्चैतानेवं पश्यति, स एव 'पितुः' अपि 'पिता' भवतीत्यर्थः, स हि आधिदैविकम् आत्मानम् अभि सम्पन्नो भवति, न हि तस्य पिता नाम कश्चित्, स एव हि सर्वेषां जनानां पिता भवतीत्यभिप्रायः। एवमेतस्मिन् मन्त्रे य एवाचक्षाण् भवति। स एव पश्यतीत्यस्य सन्निधौ 'न विजानात्यन्धः' शब्दप्रयोगात् अदर्शनलक्षणं तमः 'अन्धः'-शब्देनोच्यत इत्युपपद्यते॥ १॥

असश्चन्ती भूरिधारे पयस्वती। असज्यमाने इति वाव्युदस्यन्त्याविति वा बहुधारे उदकवत्यौ वनुष्यतिर्हन्तिकर्मानवगतसंस्कारो भवति। वनुयाम वनुष्यत इत्यपि निगमो भवति। दीर्घप्रयज्युमति यो वनुष्यति वयं जयेम पृतनासु दूढ्यः। दीर्घप्रततयज्ञमभिजिघांसति यो वयं तं जयेम पृतनासु दूढ्यं दुर्धियं पापधियं पापः पातापेयानां पापत्यमानोऽवाङेव पततीति वा पापत्यतेर्वा स्यात् तरुष्यतिरप्येवङ्कर्मा। इन्द्रेण युजा तरुषेम वृत्रमित्यपि निगमो भवति। भन्दना भन्दतेः स्तुतिकर्मणः। पुरुप्रियो भन्दते धामभिः कविरित्यपि निगमो भवति। स भन्दना उदीयर्ति प्रजावतीरिति च। आन्येन मदाहनो

याहि दूरम् । अन्येन मदाहनो गच्छ क्षिप्रमाहंसीव भाषमाणेत्यसभ्यभाषणादाहना इव भवत्येतस्मादाहनः स्यादपि निर्नदो भवति नदतेः स्तुतिकर्मणः । नदस्य मा रुधतः काम आगन् । नदनस्य मा रुधतः काम आगमत् संरुद्धप्रजननस्य ब्रह्मचारिण इत्यृषिपुत्र्या विलपितं वेदयन्ते ॥ २ ॥

"असंयन्ती (७)"—इति अनवगतम् । "असज्यमाने इति वा"—इत्यर्थमतीति, "अप्युदकमयाविति इति वा"—इति । "असंयन्ती भूरिधारे पयस्वती घृतं दुहाते सुकृते शुचिव्रते राजन्ती अस्य भुवनस्य रोदसी अस्मे रेतः सिञ्चतं यन्मनुर्हितम् ॥" इति (ऋ० सं० ५, १, १४, १) । भरद्वाजस्येयमार्षम् । अभिप्लवस्य षडहस्य पञ्चमेऽहनि तृतीयसवने वैश्वदेवे शस्त्रे द्यावापृथिवीये निविद्धानीये सूक्ते शस्यते । 'असंयन्ती' असज्यमाने असंश्लिष्यमाणे परस्परतः, एते द्यावापृथिव्यौ । 'भूरिधारे' बहूदकप्रक्षरणस्वभावे एव, अथवा बहु भूतं धारयित्र्यौ । 'पयस्वती' उदकवत्यौ । 'घृतम्' उदकम्, हे अप्येते 'दुहाते' प्रपूरयेते, इतरेतरसम्भोगेन । 'सुकृते' शोभनकृते, अथवा शोभनानां स्वाधिकारप्रयुक्तानां कर्मणां कर्त्र्यौ । 'शुचिव्रते' शुक्लकर्मणी इत्यर्थः । 'राजन्ती' दीप्यमाने स्वैः स्वैः तेजोभिः । 'अस्य' 'भुवनस्य' भूतजातस्य 'रोदसी' रोधसी, रोधयित्र्यौ । ये एते एवंलक्षणे द्यावापृथिव्यौ, ते 'अस्मे' अस्माकं 'रेतः' उदकं 'सिञ्चतम्' अभिमते काले । किंलक्षणं पुनः सिञ्चतम् ? 'यत्' 'मनुर्हितम्'

मनुष्यहितम्, प्रचारं, शत्रुसम्पत्करमित्यभिप्रायः। एव-मेतस्मिन् मन्त्रे 'भूरिधारे'—इत्येवमादिभिः समानविभक्त्यन्त-त्वात् "अमयन्ती"—इति द्यावापृथिवीविशेषणमुपपद्यते। "असज्यमाने इति" न हि ते सज्येते परस्परतः "अव्युदमन्त्यौ वा" अनुपक्षियन्त्यौ अविपर्य्यस्यन्त्यौ वा, न हि ते उपक्षीयेते विपर्य्यस्येते चेति ॥

"वनुष्यति (८)"—इति "हन्तिकर्मा" इत्यर्थे वर्त्तमानः, "अनवगतसंस्कारो भवति"। "यदिन्द्राग्नी जना इमे विह्व-यन्ते तना गिरा। अस्माकेभिर्नृभिर्वयं सासह्याम पृतन्यतो वनुयाम वनुष्यतो नभन्तामन्यके समे ॥" इति (ऋ० सं० ६, ३, २५, १)। नाभाकस्यार्षम्। महाव्रते महदुक्थे शस्यते। अस्याः पुनरष्टाक्षराः षट् पादाः। छन्दसां पुनरनुक्रमण्यां शौनकेनाभिमस्तोषीत्यत आरभ्य जागतानि त्रीणि सूक्तानि अनुक्रान्तानि, तेषामपीय मध्ये द्वे 'इन्द्राग्नी!' 'यत्' यदा 'इमे' 'जनाः' येऽस्मदीयाः परकीयाश्च उभयेऽपि 'विह्वयन्ते' व्यत्ययेनेतरेतरम् आह्वयन्ते विजिगीषुतया। 'तना' सन्ततया 'गिरा' वाचा, अथवा 'तना' अनेन निमित्तभूतेन जेतव्येन पुरस्कृतेन विह्वयन्ते। तदा युवाम् 'अस्माभिः' अस्मदीयैः 'नृभिः' मनुष्यैः सहितौ भूयास्तम्' 'वयं' युवाभ्यां सहिताः 'सासह्याम' पुनः पुनरभिभवेम। कान्? ये एते 'पृतन्यतः' पृतनामस्माभिः सह कर्त्तुम् इच्छन्ति, तानभिभवेम। किञ्च, 'वनुयाम वनुष्यतः' ये च एतेषाम् अस्माभिः सह सम्पदा एव सम्प्रहारीभूता वनुष्यन्त्यस्मान् घ्नन्त्येव, एतांश्च वनुष्यतः वनु-यामो वयं हन्म इत्यर्थः। कथं पुनर्हन्म ? उच्यते यथा,— "नभन्तामन्यके समे' युवयोरनुग्रहादस्य इत्यभिप्रायः। एव-मेतस्मिन् मन्त्रे "सासह्याम पृतन्यतः"—इत्येतस्मिन् सङ्ग्रामा-

धिकारे वनुष्यतेर्हन्त्यर्थमुपपद्यते, न हि संग्रामे हननादन्यत् कर्त्तव्यमस्ति, यत् क्रियते ।

"इन्द्रा॑वरुणा युवम॑ध्वराय॑ नो वि॒शे जना॑य॒ महि॒ शर्म॑ यच्छतम् । दी॒र्घप्र॑यज्युमति॒ यो व॑नुष्यति॑ व॒यं ज॑येम पृत॑नासु दू॒ढ्य॑: ॥"—इति (ऋ० स० ५, ६, २, १) । वसिष्ठस्यार्षम् । जगती । तार्त्तीयसवनिकोये मैत्रावरुणस्य शस्त्रे विनियुक्ता । हे 'इन्द्रावरुणौ !' 'युवम्' युवामित्यर्थः । 'अध्वराय नः' यज्ञाय अस्माकं 'विशे' जनाय सर्वस्मै मनुष्यजनाय, अस्मत्सर्वकामाय 'महि' महत्, 'शर्म' सुखं 'यच्छतम्' दत्तमित्यर्थः । 'दीर्घप्रयज्यु' "दीर्घप्रततयज्ञ" नित्ययायजूकम्, अग्निहोत्रिणम् 'अति यो वनुष्यति' "अभि जिघांसति" यो निहन्तुमिच्छति । किं तस्य ? इत्युच्यते,—'वयं जयेम' 'पृतनासु' संग्रामेषु 'दूढ्य' "दुर्धियं" पापधियं, पापया धिया हि दीर्घप्रततयज्ञमभि जिघांसति । एवमत्रापि प्रकरणात् "वनुष्यति" हन्त्यर्थः । अल्पप्रयोगविषयत्वाद् भाष्यकारैय निगमद्वय पठितम् ।

व्याख्यानप्रसङ्गमुच्यते,—"पापः पाताऽपेयानाम्" अपेयान्यसेव्यानि यानि, तान्यसौ पिबति, विषयप्रसक्त इत्यर्थः । "पापत्यमान." पुनः पुनः पात्यमान, तेनैव पापेन कर्मणा । "अवाङेव" नरकमेव प्रति "पतति" असौ, तस्मात् "वा" पाप.॥

"तरुष्यति (८), अभ्यवहरति" हन्तिकर्मेत्यर्थः । "ऋ॒भुर्ऋ॑भुभि॑र॒भि वः॑ स्याम॒ विभ्वो॑ वि॒भुभिः॒ शव॑सा शवां॑सि । वाजो॑ अ॒स्मां अ॑वतु॒ वाज॑साता॒विन्द्रे॑ण यु॒जा तरुषेम वृ॒त्रम् ॥"—इति (ऋ० स० ५, ४, १५, २) । वसिष्ठस्यैयमार्षम् । त्रिष्टुप् । अविवाक्ये तृतीयसवने, वैश्वदेवे सूक्ते, आग्निमारुते शस्त्रे, निविद्धानीये शस्यते । ऋभवः ऋत-

भासो वयम्, ऋभुभिः 'ऋभुभिः' देवैः सहिताः 'अभि ष्याम' अभिभवेम युष्मान् वयम्। हे 'विभ्वः!' 'विभुभिः' प्रभूतबलैः युष्माभिः 'शवसा' स्वेन बलेन, एतेषामभिभवितॄणां 'शवांसि' बलान्यभिभवेम। किञ्च, 'वाजः' 'अस्मान्' 'अवतु'। कस्मिन्? 'वाजसातौ' सङ्ग्रामे, 'इन्द्रेण' च 'युजा' सयुक्ताः सन्तो वय 'तरुयेम' हन्मेन 'वृत्र' शत्रुमित्यर्थः। अभिभवाधिकारात् तरुयतिर्हन्त्यर्थं उपपद्यते॥

"मन्दना (१०), मन्दतेः स्तुतिकर्मणः।" स्तुत्यर्थे वर्त्तमानस्य। "पिता यज्ञानामसुरो विपश्चितां विमानमग्निर्वयुनं च वाघताम्। आविवेश रोदसी भूरिवर्पसा पुरुप्रियो भन्दते धामभिः कविः॥"—इति (ऋ० सं० ३, ८, २०, ४)। विश्वामित्रस्यार्षम्। एतस्य प्रयमेऽहनि आग्निमारुते शस्त्रे, निविद्धानीये, वैश्वानरीये सूक्ते शस्यते। 'पिता यज्ञाना' पालयिता यज्ञानाम्, 'अग्निः' 'असुरः' प्रज्ञावान् 'विपश्चितां' प्रज्ञावतामपि मध्ये प्रज्ञावान्, 'विमानं' विनिर्माणं कृत्स्नस्य जगत, अग्निनैव ह्यग्निहोत्रादिकर्मद्वारेण कृत्स्नं जगद्विनिर्मीयते। 'वयुनं' प्रज्ञानमयमेव 'वाघताम्' ऋत्विजाम्, ऋत्विजो ह्ययमेवाग्नि विशिष्टं यज्ञसाधनमित्येव मन्यन्ते। योऽयमेवलक्षणोऽग्निः 'आविवेश' 'रोदसी' द्यावापृथिव्यौ 'भूरिवर्पसा' बहुरूपत्वेन, तमेवङ्गुणयुक्तमग्निं 'पुरुप्रियः' बहुकामप्रियः स्तोता, 'भन्दते' स्तौति, 'धामभिः' नामभिः अनकैः प्रकारैः, 'कविः' क्रान्तदर्शन इत्यर्थः। पुरुप्रियो हि स्तोता धामभिरग्नेः किमन्यत् स्तुतेः कुर्यात्? तस्मादुपपद्यते स्तुत्यर्थत्वमस्य॥

"स भन्दना उदियर्ति प्रजावतीर्विश्वायुर्विश्वाः सुभरा अहर्दिव। प्रजा प्रजावान्त्र्यमः—पत्यं पीत इन्द्रविन्दुम-

भ्यः[1] याचतात् ॥"—इति (ऋ० सं० ७, ३, २०, १) । भौमोऽत्रिः, तस्यैयमार्षम् । जगती । "प्र तं आग्रवः पवमान धीजवः" —इत्यष्टाचत्वारिंशत्के महासूक्ते एकचत्वारिंशत्तमी पावमानसौमी । यस्मिन्नयाग्नं कर्मोपनमेत्तत्तुयामहमेत्तं सोमं तवेति, य एवं नित्यकालमास्ते 'सः' एष साम्प्रतमस्मिंस्सोमकर्मणि उपनीते हे सोम ! तव 'मन्दनाः' स्तुतीः 'उदीरयति । 'प्रजावतीः' प्रजासंयुक्ताः, प्रजालिङ्गा इत्यर्थः । 'विश्वायुः' विश्वमयतीति विश्वायुः, सर्वत्राप्रतिहतप्रज्ञान इत्यर्थः, सर्वतो वा विश्वायुः । 'विश्वाः' सर्वप्रकाराः, नामबन्धुकर्मरूपसम्बन्धात् स्तुतीनाम्, नाम्ना, बन्धुभिः, कर्मणा, रूपेणेति युक्तम् । 'सुभराः' सुभृताः, सुपुष्टाः, स्थानकरणानुप्रदानवत्यो युष्मद्गुणैरलङ्कृताः । 'अहर्दिवि' अहनि वा रात्रौ च, रात्रिपर्य्यायाभिप्रायेण नित्यकालमेवेत्यभिप्रायः । कं पुनरर्थमुपेत्य स्तुतीरुदीरयति ? 'अश्व प्रजावत्' धनं प्रजासंयुक्तं भोक्तृसहितम् । अपि च 'रयिम्' धनं गोहिरण्यादि । 'आश्वपत्यम्' अश्वैः पतनसमर्थैः शीघ्रैः संयुक्तम् । 'पीतः' त्वमस्माभिरस्मिन् कर्मणि । हे 'इन्दो' सोम ! इदमस्मदर्थं याचतात्' याचस्वेत्यर्थः । एतमर्थमभिप्रेत्य स्तुतीरुदीरयति । मन्दना इदियर्त्तीत्युदीरणसम्बन्धात् स्तुतय एताः "मन्दना" शब्दे नोच्यन्ते इत्युपपद्यते । पूर्वमाख्यातपदसम्बद्धमुदाहरणं "पुरुप्रियो मन्दते धामभिः"—इति (८४० पृ० ८ पं० ), इदन्तु नामरूपसम्बद्धं "स मन्दना उदियर्त्ति प्रजावतीः"—इति (८४०पृ०२५पं०) च । उभयथा प्रयोगोऽस्तीत्युभयमुपप्रदर्शितम्, अल्पप्रयोगविषयत्वाच ।

"आहनः (११)"—इति । एतत् पदं सम्बोधनमनवगतम्, अप्रतीयमानार्थत्वात् । "आहसि"—इत्यर्थप्रतीतिः ।

भासो वयम्, ऋभुभिः 'ऋभुभिः' देवैः सहिताः 'अभि षः स्याम' अभिभवेम युष्मान् वयम्। हे 'विभ्वः!' 'विभुभिः' प्रभूतबलैः युष्माभिः 'शवसा' स्वेन बलेन, एतेषामभिभवितृणां 'शवांसि' बलान्यभिभवेम। किञ्च, 'वाजः' 'अस्मान्' 'अवतु'। कस्मिन्? 'वाजसातौ' सङ्ग्रामे, 'इन्द्रेण' च 'युजा' सयुक्ताः सन्तो वयं 'तरुषेम' हन्तेन 'वृत्रं' शत्रुमित्यर्थः। अभिभवाधिकारात् तरुष्यतिर्हन्त्यर्थ उपपद्यते॥

"मन्दना (१०), मन्दतेः स्तुतिकर्मणः।" स्तुत्यर्थे वर्त्तमानस्य। "पिता यज्ञानामसुरो विपश्चितां विमानमग्निर्वयुनं च वाघताम्। आविवेश रोदसी भूरिवर्पसा पुरुप्रियो भन्दते धामभिः कविः॥"—इति (ऋ० सं० १, ८, २०, ४)। विश्वामित्रस्यार्षम्। ऋचस्य प्रथमेऽहनि आग्निमारुते शस्त्रे, निविद्धानीये, वैश्वानरीये सूक्ते शस्यते। 'पिता यज्ञानां' पालयिता यज्ञानाम्, 'अग्निः' 'असुरः' प्रज्ञावान् 'विपश्चितां' प्रज्ञावतामपि मध्ये प्रज्ञावान्, 'विमानं' विनिर्माणं कृत्स्नस्य जगतः, अग्निनैव ह्यग्निहोत्रादिकर्मद्वारेण कृत्स्नं जगद्विनिर्मीयते। 'वयुनञ्च' प्रज्ञानमयमेव 'वाघतां' ऋत्विजाम्, ऋत्विजो ह्ययमेवाग्निः विशिष्टं यज्ञसाधनमित्येव मन्यन्ते। योऽयमेवंलक्षणोऽग्निः 'आविवेश' 'रोदसी' द्यावापृथिव्यौ 'भूरिवर्पसा' बहुरूपत्वेन, तमेवम्भूतयुक्तमग्निं 'पुरुप्रियः' बहुकामप्रियः स्तोता, 'भन्दते' स्तौति, 'धामभिः' नामभिः अनेकैः प्रकारैः, 'कविः' क्रान्तदर्शन इत्यर्थः। पुरुप्रियो हि स्तोता धामभिरन्यैः किमन्यत् स्तुतेः कुर्य्यात्? तस्मादुपपद्यते स्तुत्यर्थत्वमस्य॥

"स मन्दना उदियर्त्ति प्रजावतीर्विश्वायुर्विश्वाः सुभरा अहर्दिव। कस्य प्रजावत्यायमस्पत्यं प्रीत इन्द्रविन्दु-

स्मभ्यं याचतात् ॥"—इति (ऋ० सं० ७, ३, २०, १)। भौमोऽत्रिः, तस्यैवमार्षम्। जगती। "प्र ते आशवः पवमान धीजवः"—इत्यष्टाचत्वारिंशत्के महासूक्ते एकचत्वारिंशत्तमी पावमानसौमी। यदिममयाज्ञं कर्मोपनमेत्सत्सुयामहमितं सोमं तवेति, य एवं नित्यकालमास्ते 'सः' एष साम्प्रतमस्मिंस्सोमकर्मणि उपनीतो हे सोम! तव 'भन्दनाः' स्तुतीः 'उदीरयति'। 'प्रजावतीः' प्रजासंयुक्ताः, प्रजालिङ्गा इत्यर्थः। 'विश्वायुः' विश्वमयतीति विश्वायुः, सर्वत्राप्रतिहतप्रस्थान इत्यर्थः, सर्वतो वा विश्वायुः। 'विश्वाः' सर्वप्रकाराः, नामबन्धुकर्मरूपसम्बन्धात् स्तुतीनाम्, नाम्ना, बन्धुभि, कर्मणा, रूपेणेति युक्तम्। 'सुभराः' सुभृताः, सुपुष्टाः, स्थानकरणानुप्रदानवत्यो युष्मद्गुणैरलङ्कृताः। 'अह्नर्दिवि' अहनि वा रात्रौ च, रात्रिपर्य्यायाभिप्रायेण नित्यकालमित्यभिप्रायः। किं पुनरर्थमुपेत्य स्तुतीरुदीरयति? 'मह्य प्रजावत्' मम प्रजासंयुक्तं भोक्तृसहितम्। अपि च 'रयिम्' धनं गोहिरण्यादि। 'अश्वपस्त्यम्' अश्वैः पतनसमर्थैः शीघ्रैः संयुक्तम्। 'पीतः' त्वमस्मिन् कर्मणि। हे 'इन्दो' सोम! इदमस्मदर्थं याचतात्' याचस्वेत्यर्थः। एतमर्थमभिप्रेत्य स्तुतीरुदीरयति। भन्दना उदीयर्त्तीत्युदीरणसम्बन्धात् स्तुतय एताः "भन्दना" शब्देनोच्यन्त इत्युपपद्यते। पूर्वमाख्यातपदसम्बद्धमुदाहरणं "पुरुप्रियो भन्दते धामभिः"—इति (८४० पृ० ८ पं०), इदन्तु नामरूपसम्बद्धं "स भन्दना उदियर्त्ति प्रजावतीः"—इति (८४०पृ०२५पं०) च। उभयथा प्रयोगोऽस्तीत्युभयमुपप्रदर्शितम्, अल्पप्रयोगविषयत्वाच्च।

"आहनः (११)"—इति। एतत् पदं सम्बोधनमनवगतम्, अप्रतीयमानार्थत्वात्। "आहसि"—इत्यर्थप्रतीतिः।

"न तिष्ठन्ति न निमिषन्त्येते देवानां स्पश इह ये चरन्ति । अन्येन मदाहनो याहि तूयं तेन विवृह रथ्येव चक्रा ॥"—इति (ऋ० सं० ७, ६, ७, ३)। यमस्य यम्याश्च संवादसूक्तम्, तत्र यमस्यैतदार्षम्। स यमीं मैथुनाय प्रार्थयमानां ब्रवीति,—हे यमि! मामेवं त्वा साम्प्रतं रहो वर्तत इति, किन्तु 'न तिष्ठन्ति' सुहूर्तमपि, एते जनाः रन्ध्रान्वेषणतत्परा इत्यभिप्रायः। अपि च, 'न निमिषन्ति' अनिमिषाः, आदरवन्त इत्यभिप्रायः। के पुनस्ते ? इत्युच्यते,—'एते देवानां' स्पशभूताः, य इह एतस्मिन् लोके 'चरन्ति' चारयितारः, कृताकृतानां कर्मणाम्। के पुनस्ते ? इति। उच्यते,—अहश्च, रात्रिश्च, उभे च सन्ध्ये, सूर्याचन्द्रमसौ, वायुश्च, अन्तरपुरुषश्च इत्येवमादय', न ह्येतेषां किञ्चिदविदितं परोक्षमस्ति इत्यभिप्रायः। अतो ब्रवीमि,—'अन्येन' अन्यकुलजेन केनचित् पुरुषेण, 'मत्' मत्तः, त्वं हे 'आहनः!' मैथुनं 'याहि' 'तूयं' "क्षिप्रम्"। "आहसि इव" असभ्यमेतत् "भाषमाणा" त्वम्, नाहमेतदसभ्यं श्रोतुमप्युत्सहे तव, किं पुनः कर्तुम् ? तस्मात्मत्तोऽन्येन मैथुनार्थं चर। 'तेन' एव सह 'विवृह' अभ्युद्यच्छस्व आत्मानं मैथुनकर्मणि। 'रथ्येव चक्रा' रथचक्रे इव, यथैकमक्षं रथचक्रे द्वे अभ्युद्यतः, एवमेकमनस्त्वमुपपाद्य तेनैकभूतेन मनसा अवियोगेनोभेऽपि शरीरे, तत्र तस्य कामिनः सतम्, स च तव, तेनैव सह तवैतस्मिन्नर्थे एकमनस्त्वमस्त्विति, न मया सार्धमेतस्मिन्नर्थेऽभ्युद्यच्छमाना न मा शक्ष्यसे कम्पयितुमित्यभिप्रायः। एवमेतस्मिन् मन्त्रेऽनिष्टत्वान्मैथुनसमाचारस्य "आहनः"—इत्येतद् यमीविषयं सम्भाषणम्। आहन्यत "इव" हि स यम तयाऽनेन दुर्वचनेन। तस्मात् सेव सम्बोध्यते आहनः! इति "एतस्मात्" एव कारणात् "आहनः स्यात्"-

योऽयम् उपदेशः स्त्रियै, असावपि हि यस्य सन्निधौ सङ्कीर्त्यते, स आहन्यत इव असभ्यत्वात्, तस्य अयत्रियो वै पुरुषोऽमेध्य आहनः स्याज्जायत इति विज्ञायते ।

"नदः (१२)"—इति, एतदनवगतम् । "ऋषिः नदो भवति"—इति शब्दस्य पर्यायेण तत्त्ववचनम् । "नदतेः स्तुतिकर्मणः" इति व्युत्पत्तिः । नदिता वा नदतीवेत्यर्थप्रतीतिः । "नदस्य मा रुधतः काम आगन्नित आजातो अमुतः कुतश्चित् । लोपामुद्रा वृषणं नीरिणाति धीरमधीरा धयति श्वसन्तम् ॥"—इति (ऋ० सं० २, ४, २२, ४ )। अगस्त्यलोपामुद्रोत्रह्मचारिसूक्तसंवादे लोपामुद्राया इयमार्षम् । सा अब्रवीदगस्त्यं भर्त्तारमभिप्रेत्य 'नदस्य' "नदनस्य" नदितुर्वा देवतास्तोतुः अस्यागस्त्यस्य 'रुधतः' संयच्छतः इन्द्रियग्रामं 'मा' माम् अयं 'कामः' 'आगन्' आगतवान्, येनाहं साम्प्रत पीड्ये । स पुनरेवं न जाने । किम् 'इतः' एव 'आजातः' अस्मच्छरीराज्जातः, अस्योपरि ह्यभिव्यक्तोऽस्मत्पीडनाय,—अथवा 'अमुतः' अगस्त्यशरीरात् ? पुरुषगुणानुस्मरणाद्धि स्त्रियाः कामो जायते—अभिव्यज्यते, पुरुषस्य च स्त्र्यनुस्मरणात् । अतएव "स्मरः"—इति काम उच्यते । तस्मादुपपद्यते इतो वाऽस्मच्छरीरात्,—अमुतो वा नदशरीरात्, कुतः ? इति, न जाने इति । अथवा अन्यत एव 'कुतश्चित्' अयमागतः स्यात् ? इत्येतदपि तत्त्वतो न जाने । इत्येवं विलपमाना कामार्त्ता 'लोपामुद्रा' राजर्षिपुत्रिका 'वृषणं' रेतसो वर्षितारम्, अगस्त्यं 'नीरिणाति' निश्चयेनाधिकं वा दोषेण गच्छति, यदि न ममाऽस्यापरि प्रजननं निरोत्स्यात्, ततो नायं कामो मागमिष्यत्, इत्येवं दोषेण गच्छति । "रिणाति"—इति गतिकर्मसु पठितम् । अथवा चेतसा

'नीरिणाति' उपगच्छतीत्यर्थः, इष्टपुरुषानुचिन्तना हि कामार्त्तायाः स्त्रियाः स्वभाव एव । तस्मादेवमप्युपपद्यते । 'धीरं' स्थिरबुद्धिं ब्रह्मचर्ये 'अधीरा' सङ्कुचसर्वेन्द्रियग्रामा 'धयति' पिबतीव चेतसा, चक्षुर्भ्यां वा पश्यति । 'श्वसन्तं' चेतसा आवर्त्तमानं, तस्याः सकाशात् ब्रह्मचर्ये स्थिरबुद्धिं तथापि धयत्येव । "श्वसिति, नदति"—इत्येव गतिकर्मसु पठितम् । एव लोपामुद्रावाक्यं "नदस्य रुधतो मामागमत् कामः"—इति प्रकरणादपि नदशब्दो नोच्यत इत्युपपद्यते । "ऋतु-प्रजननस्य ब्रह्मचारिण इत्यृषिपुत्रा विलपित वेदयन्ते"—इति निदानप्रख्यापनम् ॥ २ ॥

न यस्य द्यावापृथिवी न धन्व नान्तरिक्षं नाद्रयः सोमो अक्षाः । अक्षारित्येके । अनूपे गोमान् गोभिरक्षाः सोमो दुग्धाभिरक्षाः । लोपाशः सिंहं प्रत्यञ्चमत्साः । क्षियतिनिगमः पूर्वः क्षरतिनिगम उत्तर इत्येकेऽनूपे गोमान् गोभिर्यदा क्षियत्यथ सोमो दुग्धाभ्यः क्षरति सर्वे क्षियतिनिगमा इति शाकपूणिः अत्समिति क्षिप्रनामाप्सु आततं भवति । स पतत्रीत्वरं स्था जगद्यच्छ्वात्रमग्निरकृणोज्जातवेदाः । स पतत्रि चेत्वरं स्थावरं जङ्गमञ्च यत्तत् क्षिप्रमग्निरकरोज्जातवेदाः । जातिवर्नात् । आ त्वा रथं यथोतय

इत्यपि निगमो भवति। स्पाद्माने इत्युपरिष्टाद्व्याख्यास्यामः। वम्रकः पड्भिरुपसर्पदिन्द्रम्। पादैरिति वा स्पार्शनैरिति वा (स्पशनैरिति वा) सुषं न पक्कमविदच्छुचन्तम्। सपनमेतन्माध्यमिकं ज्योतिरनित्यदर्शनं तद्विवाविदज्ज्वल्यमानम्। द्विता च सत्ता स्वधया च शम्भुः। द्वैधं सत्ता मध्यमे च स्थान उत्तमे च। शम्भुः सुखभूः। मृगं न व्रा मृगयन्ते। मृगमिव व्रात्याः प्रैषाः ॥ ३ ॥

“सोमो अक्षाः (१३)”—इत्येते द्वे पदे। अत्र अक्षा इत्येतत् पदं अनवगतम्, पदेव चानेकार्थम्। अस्यैव च सम्बन्धादुपलक्षणार्थं सोमशब्दोऽस्य समाम्नातः। कथं नाम “न यस्य द्यावापृथिवी”—इत्येतदेषोदाहरणमत्र उपलक्षितं स्यात्? अत्र हि अक्षा इत्येष शब्दः, सोमशब्देन सम्बद्धः, यथा भूतशब्देन, मेषशब्दः—“मेषो भूतोऽभियन्नयः”—इत्यत्र, यथा वा “अग्निर्नुये”—इत्यत्राग्निशब्दः। अत्र चाश्नोतिपचो अक्षा इति अस्य शब्दस्य सुपुष्टतर उदाहरणार्थो भवति। तस्मादयमनन्तर उपलक्ष्यते अल्पप्रयोगविषयत्वादस्य मन्त्रस्य प्रतिपत्त्यर्थं सोमशब्दः समाम्नात एकपदसमाम्नाते प्राप्ते सति ॥

“न यस्य द्यावापृथिवी न धन्व नान्तरिक्षं नाद्रयः सोमो अक्षाः। यदस्य मन्युरधिनीयमानः शृणाति वीळु रुजति स्थिराणि ॥” इति (ऋ० सं० ८, ४, १५, १)। ऐषुर्नाम

विश्वामित्रस्य पुत्रः, तस्यैवमार्षम्। ऐन्द्रे सूक्ते सूत्यं सुत्यामैकाहः, तत्रैयं निष्केवल्यशस्त्रे निविद्धानीये शस्यते। 'न यस्य द्यावापृथिवी' न यस्य इन्द्रस्य द्यावापृथिव्यौ महिमानं 'अश्नुवाते' व्याप्नुत इत्यर्थः। 'न' 'धन्व' उदकम्, तद्धि धन्वत्यन्तरिक्षलोकात्। 'न अन्तरिक्षम्' 'न' 'अद्रयः' पर्वताः अश्नुवाते महिमानम्। किं तर्हि? सोम एवास्याः महिमानमश्नोतीत्यर्थः। कथं पुनर्गम्यते सोम एवेन्द्रस्य महिमानमश्नोतीति? इतः,—'यत् अस्य मन्युः अधिनीयमानः' यस्मादस्येन्द्रस्य मन्युः क्रोधः सोमेन पीतेन सता मदसामर्थ्यादुपरि शत्रूणां नीयमानः प्राप्यमाणः शृणाति। 'वीळु'। यदपि 'वीळु' दृढं सबद्धं शत्रुबलं भवति, तदपि शृणात्येव, हिनस्तीत्यर्थः। 'रुजति' च 'स्थिराणि' अपि दृढानि मेघवृन्दानि भिनत्तीत्यर्थः। एवमेतस्मिन् मन्त्रे व्याख्यार्थस्य "अश्नोतेः" अस्य इत्येष शब्दो निरुच्यते "इत्येवमेके" मन्त्रार्थविदो मन्यन्ते॥

"अनूपे गोमान् गोभिरक्षाः सोमो दुग्धाभिरक्षाः। समुद्रं न संवरणान्यग्मन् मन्दी मदाय तोशते॥"—इति (ऋ० स० ७, ५, ११, ४)। सप्तर्षीणामार्षम्। बृहती। पावमानो सोमी। 'अनूपे' देशे 'गोमान्' गोभिः सहितो यदा 'अक्षाः' क्षियति, निवसति, अथ तदा सुयवसत्वात् तस्य देशस्य 'सोमो दुग्धाभिः' पुनः पुनः दुग्धाभ्योऽपि गोभ्यः क्षरत्येव। कथं पुनः क्षरति? इति। उच्यते,—समुद्रं न संवरणानि समुद्रमिव संवरणान्युदकानि, उदकानि हि देशान्तरात् संहरन्ति, तानि यथा सर्वेभ्यो देशेभ्यः संहृत्य समुद्रमाभिमुख्येन 'अग्मन्' गच्छन्ति, एवं दुग्धाभ्यः सोमः सर्वेभ्यो गावेभ्यः संहृत्य ऊधः प्रतिक्षरति मदायेन्द्रस्य। अथ यदेवं प्रक्षरति, तेन सोमेना-

मावास्यायां सामान्येन व्रत इन्द्रः 'मन्दी' हर्षशील', यजमानस्य पशून् 'तोशते' हिनस्तीत्यर्थः। "नितोशयति, निबर्हयति"—इति हन्तिकर्मसु पठितम्। एवमेतस्मिन् मन्त्रे "क्षियति-निगमः पूर्वः"—"अनूपे गोमान् गोभिरक्षाः"—इत्येषः (८८६ पृ० १६ पं०) "क्षरति-निगमः उत्तरः"—"सोमो दुग्धाभिरक्षाः"—इत्यत्र (८८६ पृ० १६ पं०)। एवम् "एके" मन्त्रार्थविदो मन्यन्ते। तत्र तथैवोपव्याख्यातम्। "सर्वे" एवैते त्रयोऽपि "क्षियतिनिगमाः" "इति" "शाकपूणिः" आचार्यो मन्यते। न यस्य द्यावापृथिव्यौ निवासः, न धन्व, न अन्तरिक्षं निवासः, किं तर्हि? सोम एव इन्द्रस्य निवासः। तस्य सोमस्य किम्? इति। उच्यते,—यदस्य मन्यूरधि शत्रूणां नीयमानः, शृणाति वीलु रुजति स्थिराणि। समानमन्यत् पूर्वेणैवार्थेन। "अनूपे गोमान् गोभिरक्षाः"—इत्यत्र निवासार्थेनैव पूर्वस्मिन्नेवार्थे। अथ सोमो दुग्धास्वपि गोषु निवसति, न निर्दुग्धाः कर्तुं शक्यन्ते इत्यभिप्रायः। एवमेते सर्वे त्रयोऽपि "क्षियतिनिगमाः"—इति "शाकपूणिः" आचार्यो मन्यते॥

"श्वात्रम्(१४)"—इति एतदनवगतम्। "आशु अतनं भवति"—इति ग्रन्थसमाधिः। "क्षिप्रनाम"—इत्यभिधेयवचनम्। "यो होतासीत् प्रथमो देवजुष्टो यं समाञ्जन्नाज्येना वृणानाः। स पतत्रीत्वरं स्था जगद्यच्छ्वात्रमग्निरकृणोज्जातवेदाः॥"—इति (ऋ० सं० ८, ४, १०, ४)। इयं हविष्पान्तीये सूक्ते। तच्च पुनर्मूर्धन्वताङ्गिरसेन दृष्टम्, वामदेव्येन वा। पृष्ठ्यस्य पञ्चमेऽहनि अग्निमारुते शस्त्रे निविद्धानीयं तद्भवति। 'यः' अग्निः 'होतासीत्' आहोता देवानाम्, 'प्रथमः' प्रधानः, मनुष्यहोतुः सकाशात्। 'देवजुष्टः' देवैरासेवितः।

'यं' 'समाध्नन्' समुचितवन्तः। केन? 'धाय्येन' 'वाहयानाः'
सेवमानाः, भजमाना इत्यर्थः। तस्य किम्? इति। उच्यते,
—सः पतत्रीत्वरम्. सोऽग्निः पतत्रि', यदेतदितश्चेतश्च पतति,
इत्वरञ्च पश्वादि, 'स्था' स्थावरञ्च वृक्षादि, 'जगत्' यदेतज्ज-
ङ्गमादि। तस्य किम्? इति। उच्यते,—तत् सर्वं प्रलयकाले
'स्रात्रं' चिप्रमात्सात् 'अकृणोत्' "अकरोत्" 'जातवेदाः'
अग्निः। एवमेतस्मिन् मन्त्रे "स्रात्रमिति" इत्येतत् "चिप्र-
नाम"। पतत्रि-स्थावर-जङ्गमानां चिप्रदहनादग्नि किमन्यत्
कुर्य्यात्? तस्मादुपपद्यते चिप्रनामेति॥

"ऊतिः(१५)"—इति, अनवगतम्। "अवनम्"—इत्यर्थ-
प्रतीतिः। "अवनात्" रक्षणादित्यर्थः। "आ त्वा रथं यथोतये
सुम्नाय वर्त्तयामसि। तुविकूर्मिमृतीषहमिन्द्र शविष्ठ
सत्पते॥"—इति (ऋ० स० ६, ५, १, १)। प्रियमेधस्यार्षम्।
हे इन्द्र! 'त्वा' त्वाम् 'आवर्त्तयामसि' आवर्त्तयामहे।
किमर्थम्? 'ऊतये' अस्माकं रक्षणाय, 'सुम्नाय' सुखाय
च। कथं पुनरावर्त्तयामहे? इति। उच्यते,—'रथं यथा'
अश्वो हि कश्चिद् यथा रथमावर्त्तयेत्, एवमावर्त्तयामहे वय
त्वा स्तुतिभिः। किंलक्षण पुनर्भवन्तमावर्त्तयामहे? उच्यते,—
'तुविकूर्मिम्' बहूनामनेकप्रकाराणां कर्मणां कर्त्तारम्। 'ऋतीष-
हम्' च, आर्त्तानामभिभवितारम्। हे 'इन्द्र!' 'शविष्ठ'
-बलिष्ठ। 'सत्पते' सतां पते। एवमावर्त्तनेनैकवाक्याभिसम्ब-
न्धेन "ऊति"शब्दो रक्षणार्थ इत्युपपद्यते॥

"हासमाने (१६)"—इति। "उपरिष्टाद् व्याख्यास्यामः"
"प्रपर्वतानामुशती उपस्थात्"—इत्यत्र॥

"पञ्चभिः (१७)"—इति, अनवगतम्। "पानैरिति वा
अर्थैरिति वा"—इति शब्दसमाधौ। "एवा महो असुर

वृक्षयाय वस्त्रकः पुङ्किरुपसर्पदिन्द्रम्। स ईयानः करति स्वस्तिमस्मा इषमूर्जं सुक्षितिं विश्वमाभाः ॥"—इति (ऋ० सं० ८, ५, १५, ६)। वस्त्रो नाम वैखानसः, तस्येयमार्षम्। ऐन्द्री। य एव एतस्मिन् सूक्ते स्तुतिप्रकारोऽभिहितः 'एवा' एवम् अनेन प्रकारेण वर्त्तमान। हे इन्द्र! 'असुर' असुमन्! प्रज्ञानवन्! बलवन्! वा 'वक्षयाय' स्तुतिवक्ते, महते यजमानाय, पूर्वकल्पान्तरीणाय, पूर्वकल्पान्तरीण एव 'वस्त्रकः' 'पड्भिः' सोमपानैरभ्युदितैः, अथवा गुणख्यापनैः स्तुतिगतैः, 'उपसर्पत्' उपक्रमवान्, अन्यकल्पान्तरीणम् 'इन्द्रम्'। 'सः' तेन तथा 'इयानः' ईयमानः, अनुस्त्रियमाणः 'करति' कृतवान्। किम्? 'स्वस्तिम्' स्वस्त्ययनम्। 'अस्मै' यजमानाय। यतो ब्रवीमि,—साम्प्रतमस्मिन् कल्पे वस्त्रक, त्वञ्चेन्द्रः, ता एवैताः स्तुतयः, याभिरहमुपासर्पं साम्प्रतं भवन्तम्, स त्वमिदं विज्ञाय, अस्मै वर्त्तमानाय यजमानाय स्वमधिकारं जानानः, कुरु स्वस्त्ययनम्। किञ्च, 'इषमूर्जम्'। 'इषम्' अन्नं व्रीहि-यवादि, 'ऊर्जम्' क्षीरादि। 'सुक्षितिं' च, शोभननिवासञ्च। 'विश्वम्' एतत् सर्वम् 'आभाः' आभिमुख्येनास्मै यजमानाय भावयस्व ॥ एवमेतस्मिन्मन्त्रे शब्दसारूप्यात् प्रकरणाच्च "पड्भिः"—इत्येतत् पानाभिधानं ख्यापनाभिधानं चेत्युपपद्यते ॥

"ससम् (१८)"—इति अनवगतम्। "स्वपनम्"—इत्यपरमः। "प्रमातुः प्रतरं गुह्यमिच्छन् कुमारो न वीरुधः सर्पदुर्वीः। ससं न पक्वमविदच्छुचन्तं रिरिह्वांसं रिप उपस्थे अन्तः ॥"—इति (ऋ० सं० ८, ३, १४, ३)। अग्नेर्वैश्वानरस्य, अग्नेर्वा सूचीकस्य, सप्तेर्वा जभारस्य इयमार्षम्। आग्नेयी। त्रिष्टुप्। प्रातरनुवाकाश्विनयोः शस्यते। 'प्रमातुः प्रतरम्

गुह्यम्' प्रकर्षेण गततरं गह्वरं, मातुः सर्वनिर्मातुः भूमेः, अपि 'वीरुधः' दग्धुम् 'उपसर्पत्' 'ऊर्वीः' कणुं वत्यः, प्रच्छाद्य भूमेः निर्भरप्रदेशम्, तस्मिन् निर्भरप्रदेशे वर्त्तमानाः, तत्र हि ताः सुविवृद्धाय भवन्ति। कथम्पुनरुपसर्पत्? इति। उच्यते,— 'प्रमातुः प्रतरं गुह्यमिच्छन् कुमारो न' स्तनपानाय मातुः यथा कुमारः, प्रकर्षेण गुह्यतरं सर्वाङ्गेभ्यः स्तनप्रदेशम्, स्तनपानम् इच्छन् उपसर्पेत्, एवं योऽग्निः सर्वौषधिकै भूमेर्निर्भरप्रदेशे कुमार इव स्तनप्रदेशमिवोपसर्पत्। तत्रैव च निर्भरप्रदेशे 'रिरिह्वांसं' पुनःपुनरास्वादयमानम्, ओषधीः 'रिप.' पस्या एव भूमेः 'उपस्थे' उपस्थाने, निर्भरे हि भूमेः प्रदेशे आप उपतिष्ठन्त इति निर्भर एवोपस्थो भूमेः। तस्या एव 'अन्तः' मध्ये इत्यर्थः। तस्मिन्नेवलक्षणे प्रदेशे, तमग्निम् 'अविदत्' कश्चित् ऋषिः अन्यो वा। ओषधीरास्वादयन्त कथं पुनरविदत्? इति। उच्यते,—'सत न पक्वम्' 'अविदत्,' यथैव स्वपनशीलं "माध्यमिकं ज्योतिः" वैद्युताख्यं पक्वमभिव्यक्तम्, सर्वात्तु उपर्यवस्थानादयवे नैव दृश्यते, एवं निर्भरान् प्रविष्टमपि सन्तमग्निमतिमहत्त्वादर्चिषोऽविददेवापश्यत्। 'शुचन्त' दीप्यमानमित्यर्थः। निर्भरेऽन्योऽनुप्रविष्टो न विज्ञायते, अग्निस्तु निर्भरस्थोऽपि स्वया दीप्त्या विज्ञायत एवेत्यभिप्रायः। य एवङ्गुणयुक्तोऽग्निः स इदं नाम करोतु—इत्येवमाशीर्योज्या। न ह्यष्टौ मासान् माध्यमिकं ज्योतिर्दृश्यते, ततः "अनित्यदर्शनम्" तस्मादनित्यदर्शनात् "स्वपनम्"—इत्युच्यते, पक्वं नामाभिव्यक्तमित्युच्यते। एवमिह शब्दसारूप्यात् सर्वोपपत्तेश्च "ससम्"—इत्यनेन शब्देन स्वपनमुच्यत इत्युपपद्यते।

"द्विता (१८)"—इति, अनवगतम्। "द्वैधम्"—इत्यव-

—इत्युच्यते, शब्दसारूप्यादर्थोपपत्तेश्चेति ॥

"दनः (१२४)"—इति अनवगतम् । "दानमनसः"—इत्यवगमः । "दनो विश इन्द्र मृध्रवाचः सप्त यत् पुरः शर्म शारदीर्दर्त् । ऋणोरपो अनवद्यार्णा यूने वृत्रं पुरुकुत्साय रन्धीः ॥"—इति (ऋ० सं० २, ४, ६, २) । अगस्त्यस्यार्षम् । हे 'इन्द्र !' 'दनः' "दानमनसः" एव एतान् अस्मभ्यं 'विशः' "मनुष्यान्" "कुरु" 'मृध्रवाचः' "मृदुवाचः" । कस्मात् पुनरेवमुच्यते ? इतः;—'यत्' यस्मात् त्वम् 'सप्त' सप्तसंख्याः, 'पुरः' मेघपुरः, 'शारदीः' शरत्कालीयाः, संवत्सरीया वा, संवत्सरोऽपि हि शरदित्युच्यते,—"स जीव शरदः शतम्"—इति लिङ्गात् । 'शर्म' सुखमिच्छन् जनानां 'दर्त्' दारयसि । किञ्च, 'अनवद्यार्णाः' अनवद्योदकाः, ताः पुरः 'ऋणोः' अपगमितवानसि इमं लोकं प्रति 'अपः' । स्वभाव एवैष तव लोकानुग्रहीतुमित्यभिप्रायः । किञ्च, "यूने वृत्रम्" । यौतिः स्तुत्यर्थः । स्तोत्रे यजमानाय 'पुरुकुत्साय' बहुस्तुतिकर्त्रे 'वृत्रं' धनं 'रन्धीः' सम्पादितवानसीत्यर्थः । यत एवमुपकारे प्रवृत्तो भवान् स्तोतॄणामेषाञ्च जनानाम्, तस्मात् ब्रूमोऽस्माकमपि एतान् मृदुवाचः कुरु मनुष्यानिति ॥ एवमत्र 'दनः'—इत्यस्मिन् पदे दकारे "दानमनसः"—इति एतान्यक्षराण्यध्याहृतानि भाष्यकारेण, 'न'कारयाकारयोर्गे विभक्त्योदाहृते', तथार्थोपपत्तिदर्शनात् । "कुरु"—इत्येतच्चार्थपरिसमाप्त्यर्थमध्याहृतम् । उत्तरास्त्रयः पादा हेतुभावेन, 'सप्त यत् पुरः'—इत्येतस्मात् सर्वनामसम्बन्धात् ॥

"शरारुः (१२५)"—इति, अनवगतम् । "संशिशरिषुः"—इत्यवगमः । "अवीरामिव मामयं शरारुरभिमन्यते । उताहमस्मि वीरिणीन्द्रपत्नी मरुत्सखा विश्वस्मादिन्द्र उत्तरः ॥"—

इति (ऋ० सं० ८, ४, २, ४)। पङ्क्तिः। ऐन्द्री। इन्द्रपत्नी एवं ब्रवीति—'अवीरामिव' "अबलामिव" अपरिग्रहामिव। 'माम् अयं' 'शरारुः' "बालः" मूर्खः "संशिशरिषुः" संशरीतुमिच्छन् शरीरं तित्यक्षुरित्यर्थः। 'अभिमन्यते' अभिभविष्याम्येतामित्येव मन्यते, क्षुद्रया बुध्या। नहुषोऽन्यो वा कश्चित्, "नहुषेण हीन्द्राण्यभिभवितुमारब्धासीत्"—इत्याख्यानं सूच्यते। "उताहमस्मि वीरिणी" अथ च तावदस्मि वीरिण्येव। केन च पुनर्वीरेण वीरिणी? 'इन्द्रपत्नी' इन्द्रस्याहं पत्नी,—'मरुत्सखा' यः 'इन्द्रः' 'विश्वस्मात्' सर्वस्माद् यश्च 'उत्तरः' 'जगतः' उद्गततरः प्रभावेण, स मे वीरः, तदयं बालो न मन्यते, येन मामभिभवितुमिच्छतीत्यभिप्रायः। एवमत्र "शरारुः=संशिशरिषुः" शब्दसारूप्यादर्थोपपत्तेश्च॥

"इदंयुः (१२६)"—इति, अनवगतमनेकार्थञ्च। इदमिति यत् किञ्चिदभिप्रेतं निर्दिश्यते, तद्यः कामयते, स इदंयुरित्युच्यते। 'युः'—इत्येष शब्दोऽप्रसिद्धः कामयतेऽर्थे, तेनानवगतमेतत् स्यात्। "नानाधियो वसूयवः"—इत्यनेन गतार्थं मन्यमानो भाष्यकारो निगमं न ब्रवीति। वार्त्तिककारेणाप्युक्तम्,—"निगमवशाद्बह्वर्थं भवति पदम्" तद्धितः, तथा धातु, उपसर्गगुणाः, निपाताश्च मन्त्रगताः सर्वथा ज्ञेयाः॥

"अथापि" 'युः'—इत्येषः, "तद्वदर्थं भाषते"। आह,—किमुदाहरणम्? "वसूयुरिन्द्रः"—इति, वसुमानित्यर्थः। "इन्द्रो अस्माय सुध्यो निरेके पज्रेषु स्तोमो दुर्यो न यूपः। अश्वयुर्गव्यू रथयुर्वसूयुरिन्द्र इद्रायः क्षयति प्रयन्ता॥"—इति (ऋ० सं० १, ४, ११, ४)। अव्यक्तमापन्नस्येन्द्रस्य यमार्थम्। ऐन्द्री। त्रिष्टुप्। दशरात्रस्य सप्तमेऽहनि मरुत्वतीये शस्यते। यः 'इन्द्रः' 'अस्माय' प्रयाति, छिनत्तीत्यर्थः। 'आशः' यश-

विजन्म', अनिष्ठ्योषी, अथवा योधयिता योधानां प्रहर्ता, सुधीर्वा स्यात्। क पुनः शृणाति ? 'नितन्ते' संग्रामे यत्रैको-ऽप्यन्यः संप्राप्ती नास्ति, तत्र एक एव शत्रून् हन्ति। 'पृत्सु' प्राजितायुधेष्वपि पतेषु संग्रामेषु। किञ्च, 'सोमो न' सोम इव। यः प्रधानः क्षिप्रम् सोमः, प्रसदम इति हि व्यपदेश', सोमे प्रभवति सोमेन तस्य प्राधान्यात्। किञ्च, यः इन्द्रः 'दुर्यो न' दुर्य इव 'युप:' यः प्रधानः। तस्य किम् ? इति, —स इन्द्रः 'अश्वयुः' अश्वैस्तद्वान्। 'गव्युः' गोभिः तद्वान्। 'वसूयु:' धनैर्वसुभि' तद्वान्। एवङ्गुणविशिष्ट 'यः इन्द्र' स. 'दात्रेषु' धनेषु अस्माकं दातव्येषु 'जयति' इष्टे। 'प्रयन्ता' प्रकर्षेण दातेत्यर्थः॥ एवमत्र 'वसूयु,'—इत्ययं युगन्दः "तद्दर्थे"। किङ्कारणम् ? न हीन्द्रो वसु कामयते, सुपूर्णत्वात्, परिशेषात् अत्र "तद्दर्थे भाषते"—इत्युपपद्यते॥ ३(२१)॥

किं ते कृण्वन्ति कीकटेषु गावो नाशिरं दुह्रे न तपन्ति घर्मम्। आ नो भर प्रमगन्दस्य वेदो नैचाशाखं मघवन्रन्धया नः। किं ते कुर्वन्ति कीकटेषु गावः कीकटा नाम देशोऽनार्य्यनिवासः कीकटाः किं कृताः किं क्रियाभिरिति प्रेप्सा वा नैव चाशिरं दुह्रे न तपन्ति घर्मं हर्म्यमाहर नः प्रमगन्दस्य धनानि मगन्दः कुसीदी माङ्गदो मामागमिष्यतीति च ददाति तदपत्यं प्रमगन्दोऽत्यन्तकुसीदिकुलीनः प्रमदको वा योऽयमेवास्ति लोको न पर इति प्रेप्सुः

पण्डको वा पण्डकः पण्डगः प्रार्दको वा प्रार्द-यत्याण्डावाण्डावाणी इव व्रीडयति तस्तम्भ नैचाशाखं नीचाशाखो नीचैःशाखः शाखाः शक्नोतेराणिररणात्तन्नो मघवन्रन्धयेति रध्य-तिर्वशगमने बुन्द इषुर्भवति बुन्दो वा भिन्दो वा भयदो वा भासमानो द्रवतीति वा ॥४(३२)

"कीकटेषु (१२७)"—इति, अनवगतम्। "किङ्कृताः"—इति शब्दसमाधिः, "किं क्रियाभि—इति" "वा"। "किं ते कृण्वन्ति०—०रन्धया नः॥"—इति (ऋ० सं० ३, ३, २१, ४)। विश्वामित्रस्यार्षम्। ऐन्द्री। त्रिष्टुप्। इन्द्र! याः 'कीकटेषु' अनार्य्यदेशनिवासिषु मनुष्येषु 'गावः' ताः 'ते' तव 'किम्' कमुपकारं कुर्वन्ति? न कञ्चिदपीत्यभिप्रायः। "नाशिरं दुह्रे, न तपन्ति घर्मम्" नाप्याशिरार्थं दुह्यन्ते, नापि घर्मे तप्यमानेऽग्निभावं गच्छन्ति, नाप्यग्निहोत्रादिषु कर्मसु अन्यास्वपि क्रियास्वित्यभिप्रायः। अत एवमतो ब्रूमः,—"आ भर नः" ताः गाः, अथ तव, ताभिराशिरादिविनियोगेनोपकारं करिष्याम इत्यभिप्रायः। किञ्च, यदप्येतत् 'प्रमगन्दस्य' वृद्धिजीविनो धनम्, एतच्च तथा अस्मभ्यमाहर, तदपि न क्रियासु "ततस्त" विनियुज्यते, अथ तद् विनियोक्ष्याम इत्यभिप्रायः। "प्रमदको वा" नित्यप्रमुदितो विषयपरः प्रमगन्दः स्यात्। "पण्डको वा" नपुंसकः प्रमगन्दः स्यात्। तयोर्वा धनानि क्रियासु न विनियुज्यन्ते, शब्दसारूप्यञ्च प्रमगन्दशब्दे उभयोरस्ति, तस्मात् तावप्युपपद्येते। "नैचाशाखं मघवन्रन्धया नः"। यदेतेषामन्यतमस्य नीचशाखाप्रसूतस्य

नीचवंशप्रसूतस्य दीनतुल्यस्य धनम्, तत्। हे 'मघवन्!' गोत्र 'रन्धय' सताध अस्मदग्र कुर्वित्यर्थं ।

एवमत्र 'कीकटा' "किं कृता" किं ते कृता ? इत्येव मभिव्याहारमर्हन्ति, न ते कश्चिदर्थोऽस्ति, न ते देवपित्र मनुष्याणामुपकार कुर्वन्तीत्यर्थं । अथ "वा" "किं क्रियाभि ?" —"इति" एव "प्रेप्सा" ते नास्तिका एवमभिप्राया इत्यर्थं । एतस्मात्कृत्स्नवाक्यादर्थोपपत्तेश्च "कीकटा = अनार्यदेशनिवासिन"—इत्युपपद्यते ॥

"मगन्द = कुसीदी"—इत्युच्यते, स हि "माम्"—इयात् अयतमोऽर्थं, अयश्च "आगमिष्यति"—इत्येवमनुचिन्त्य, परेभ्यो धनानि "ददाति"। "तदपत्य प्रमगन्द", अत्यन्त-कुसीदिकुलीन" तद्धितार्थे प्र, प्रमगन्द, 'प्रस्कण्वस्य'—इति यथा। "प्रमदक" प्रमादशील —"अयमेवैको लोकोऽस्ति, न पर"—"इति" एव "प्रेप्सु" नास्तिक। "पण्डक। तृतीया प्रकृति, स हि "पण्डग" पण्ड गच्छति, स्त्रीरूपत्वात्। "मादक"—इति "वा" स्यात्, "प्र" प्रकर्षेण असौ 'मर्दयति" अण्डानि सह स्त्रीलेन गच्छति "आण्डौ"। कस्मात् तौ "आण्डौ" ? "आणी इव व्रीडयति" तौ असौ पण्डको मुखे पुनर्मैथुने कर्मणि वर्तमान "आणी इव व्रीडयति" सम्मतीत्यर्थं ॥

"बुन्द (१२८)"—इति, अनवगतम्। "इषुर्भवति"—इत्यभिधेयवचनम्। "भिन्दो वा भयदो वा भासमानो द्रव तीति वा"—इति शब्दसमाधय । ४ (१२) ॥

तुविग्रं ते सुकृतं सुमयं धनुः साधुर्बुन्दो हिरण्ययः ॥ उभा ते बाहू रण्या सुसंस्कृत ऋ-

निराविध्य आधारयत्पक्वमोदनमुदकदानं मेघम्। वृन्दो वृन्दं स्वाततं वृन्दं वृन्देन व्याख्यातं वृन्दारकश्च ॥ ६ (३४) ॥

“निराविध्य०—०स्वाततम्॥”—इति (ऋ० सं० ६, ५, २०, १)। ‘पक्वम्’ बहूनां मेघानां मध्ये यः पक्वो मेघः, उदकदाने समर्थः, तम्, ‘इन्द्रः’ ‘निरविध्यत्’। विद्ध्वा च तावत् ‘आधारयत्’ यावन्निरुदकः संवृत्त इति। कथं निरविध्यत्? इति,—‘वृन्दं’ ‘स्वाततम्’ स्वाकृष्टमाकर्णीकृत्वा। एवमत्राकर्षणसम्बन्धात् “वृधु—वृन्दः”—इत्युपपद्यते॥

“वृन्दम् (१२८)”—इति, एतत् पदम् “वृन्देन” एव “व्याख्यातम्” अस्यापि हि ता एव व्युत्पत्तयो या वृन्दशब्दे॥
“वृन्दारकश्च” ‘वृन्देन’ एव “व्याख्यातः”। इत्थं वृन्दारकः प्रकरणवशादन्यः कश्चित्॥ ६ (३४)॥

अयं यो होता किरु स यमस्य कमप्यूहे यत्समञ्जन्ति देवाः। अहरहर्जायते मासि मास्यथा देवा दधिरे हव्यवाहम्॥ अयं यो होता कर्त्ता स यमस्य कमप्यन्नमभिवहति यत्समश्नुवन्ति देवा अहरहर्जायते मासे मासेऽर्द्धमासेऽर्द्धमासे वाथ देवा निदधिरे हव्यवाहमुल्बमूर्णोतेर्वृणोतेर्वा। अहस्तदुल्बमविरं तदासीदित्यपि निगमो भवत्यवीरमपगतभासमपहृतभासमन्तर्हितभासं गतभासं वा॥ ७ (३५)॥

क्रिविभ्य आधारयत्पक्वमोदनमुदकदानं मेघम्। इन्द्रो बुन्दं स्वाततं इन्दं बुन्देन व्याख्यातं इन्दारकस्य॥ ६ (३४)॥

"निराविध्य०.....स्वाततम्॥"—इति (ऋ० सं० ६, ५, ३०, १)। 'पक्वम्' बहूना मेघाना मध्ये य पक्वो मेघ, उदकदाने समर्थ, तम्, 'इन्द्र' 'निरविध्यत्'। विद्धा च तावत् 'आधारयत्' यावत्त्रिवृदक सवर्त्त इति। कथ निरविध्यत? इति,—'बुन्द' 'स्वाततम्' स्वाकृष्टमाकर्णीकृत्वा। एवमवाकर्ण यसस्मात् "इषु = बुन्द"—इत्युपपद्यते॥

"इन्दम् (१२८)"—इति, एतत् पदम् "बुन्देन" एव "व्याख्यातम्" यस्यापि हि ता एव व्युत्पत्तयो या बुन्दशब्दे॥

"इन्दारकस्य" 'बुन्देन' एव "व्याख्यात"। इत्तो इन्दारक प्रकरणवशादान्य कश्चित्॥ ६ (३४)॥

अयं यो होता किरु स यमस्य कमप्यूहे यत्समञ्जन्ति देवाः। अहरहर्जायते मासि मास्यथा देवा दधिरे हव्यवाहम्॥ अयं यो होता कर्त्ता स यमस्य कमप्यन्नमभिवहति यत्समश्नुवन्ति देवा अहरहर्जायते मासे मासेऽर्द्धमासेऽर्द्धमासे वाथ देवा निदधिरे हव्यवाहमुल्वमूर्णोतेर्वृणोतेर्वा। महत्तदुल्वं स्थविरं तदासीदित्यपि निगमो भवत्यूर्णौसमपगतभासमपहृतभासमन्तर्हितभासं गतभासं वा॥ ७ (३५)॥

"कि (१३०)"—इति, अनवगतम्। "कर्त्ता"—इत्यवगमः।
"अय यो होता०—०हव्यवाहम् ॥"—इति (ऋ० सं० ८, १, १२,
३)। ऋचोकस्याग्नेर्विश्वेषां देवानां संवादसूक्तम्, तत्र च विश्वेदे-
वानामार्षम्। आग्नेयी। 'य अयम्' अग्निः, 'होता' आह्वाता
देवानां पृथिवीस्थानः। किं तस्य? इति—'कि' 'उ स' 'यमस्य'
भगवतः आदित्यस्य, अस्मै हि सकाशात् प्रातरादित्यः प्रसू-
यते। तदुक्तम्,—"एष प्रातः प्रसुवति, तस्मात् प्रातर्वायपतिष्ठन्ते"
इति। "यस्मिन् वृक्षे सुपलाशे (ऋ० सं० ८, ७, २३, १)"—
इत्यस्यामृचि यमत्वमादित्यस्य वक्ष्यति। किञ्च, 'कम् अपि
ऊहे' "कमप्यत्नं अभिवहति"। "कम्"—इत्यन्ननाम, अत्र
मपि चायमेवाभिवहति। कतमत्? 'यत्' एतत् हविर्लक्षण
'समञ्जन्ति' "समश्नुवन्ति" 'देवाः'। अञ्जतिरत्र प्रकरणवशाद्
भोजनार्थः। किञ्च, अयमेव 'अहरहः' अहन्यहनि अग्निहो
त्रिणां गृहेषु उह्योध्यमानो महान् 'जायते'। 'मासि मासि'
जायते पितृयज्ञेषु, "अर्द्धमासेऽर्द्धमासे" च दर्शपूर्णमासेषु च।
यस्मादेवङ्गुणविशिष्टोऽयमग्निः, 'अथ' एतस्मात् कारणात् एत
मग्निं सर्वे 'देवाः' 'दधिरे' "निदधिरे" 'हव्यवाहम्' हविषां
वोढारमित्यर्थः। एवमत्र शब्दसारूप्यात् 'यमस्य'—इत्येतस्माच्च
षष्ठीयोगात् 'कि'—इत्यस्य "कर्त्ता"—इत्येष विपरिणाम
उपपद्यते ॥

"उलबम् (१३१)"—इति, अनवगतम्। 'जरायु'—इत्यव
गमः। "ऊर्णोति"—इति धातुनिर्देशः। 'ऊर्णम्'—इति
स्यात्। "वृणोतेर्वा" स्यात्, तेन हि गर्भ आवृतो भवति।
"महत्तदुल्बं स्थविरं तदासीद्येनाविष्टितः प्रविवेशिथापः।
विश्वा अपश्यद् बहुधा ते अग्ने जातवेदस्तन्वो देव एकः ॥"
—इति ऋ० सं ८, १, १०, १। 'महत्' परिमाणतः 'तत्'

'उल्व' जरायु 'आसीत्' 'स्थविर' चिरन्तनश्च तदासीत्। येन त्वम् 'आवेष्टित' आवृत, हे भगवन्। यम्मे ! 'प्रविविशिथ' प्रविष्टवानसि 'पूर्वम्' आदिसर्गे 'अप'। किञ्च, 'विश्वा' सर्वा 'तन्व' तव, हे 'जातवेद.।' 'बहुधा' धर्मेषु अभिधानेषु वर्त्तमाना. 'अपश्यत्' 'एक: देव' प्रजापति', कोऽन्यस्तत तव तनूनामन्त वेत्तुमर्हतीत्यभिप्राय ॥ एवमत्र 'जरायु' 'उल्व'शब्देनोच्यते, आवेष्टनमस्यास्मादित्युपपद्यते ॥

"अवोसम् (१३२)"—इति अनवगतम्। "अपगतभासम्" —इत्येवमाद्या शब्दसमाधय । 'पृथिवी'—अभिधेया, सा हि कृष्णच्छाया। तस्मादपगतभासमित्येवमाद्या. शब्दसमाधय उपपद्यन्ते ॥ ७ (३५) ॥

हिमेनाग्निं घ्रंसमवारयेथां पितुमतीमूर्जमस्मा अधत्तम्। ऋबीसे अत्रिमश्विनावनीतमुन्निन्यथुः सर्वगणं स्वस्ति॥ हिमेनोदकेन ग्रीष्मान्तेऽग्निं घ्रंसमहरवारयेथामन्नवतीं चास्मा ऊर्जमधत्तमग्नये योऽयमृबीसे पृथिव्यामग्निरन्तरौषधिवनस्पतिष्वप्सु तमुन्निन्यथुः सर्वगणं सर्वनामानं गणो गणनाद्गुणश्च यद्दृष्ट ओषधय उद्यन्ति प्राणिनश्च पृथिव्यां तदश्विनो रूपं तेनैतौ स्तौति स्तौति ॥ ८ (३६) ॥

इति षष्ठाध्यायस्य षष्ठः पादः ॥ ६, ६ ॥

"हिमेनाग्नि॰—॰सर्वगण स्वस्ति ॥"— इति (ऋ॰ स॰ १, ८